शरणं च ममाऽद्यास्य मरणमेव भोः ! ।

विद्यते कोऽपि न त्राता तथाऽप्येवं भणाम्य'हो ! ॥ १५ ॥

शूरो धीरो महोदारो वैरिहिपघटाऽर्हरः ।

ममाऽस्तु शरणं नित्यमार्यपुत्रो गुणैकभूः ॥ १६ ॥

जजल्प खेचरः कोऽयमार्यपुत्रो वदाधमे ! ।

दध्यौ कुमारोऽप्यमुना साधु पृष्टं ममाऽपि यत् ॥ १७ ॥

सन्देहो वर्तते चित्ते ततश्चेटी जगाद सा ।

वृतः समक्षं भूपानां स्वामिन्या यः स्वयंवरे ॥१८॥ (युग्मम्)

येन दृष्टः क्षणार्धेन त्वं पाप ! न भवस्यरे ! ।

गुणधर्मकुमारोऽसौ शरणं विहितो मया ॥ १९ ॥

तरवारिमथोद्यम्य स तां हन्तुं समुद्यतः ।

विकोशीकृतखड्गेन कुमारेणेति जल्पितः ॥ २० ॥

विश्वस्ते व्याकुले दीने बालवृद्धाबलाजने ।

प्रहरन्ति यके पापा ध्रुवं ते यान्ति दुर्गतिम् ॥ २१ ॥

स्त्रीहत्यापातकं कर्तुमुद्यतस्य तवाऽद्य रे ! ।

अहमेव भविष्यामि प्रायश्चित्तविधौ गुरुः ॥ २२ ॥

स्मित्वा विद्याधरोऽयाख्यत् तत्र गत्वाऽपि यो मया ।

हन्तव्यः स्वयमेवाऽसौ मरणायाग्रयावहो ! ॥ २३ ॥

ततो युद्धा च्छलं लब्ध्वा तस्य विद्याधरेशितुः ।

गुणधर्मकुमारेण शिरश्छिन्नं महौजसा ॥ २४ ॥

(१) अ-स्यहम्।

भयभीतं च तत्सैन्यं तेनैवाश्वासितं गिरा ।
अत्रान्तरे च बालास्तास्तिस्रोऽप्यूचुरिदं वचः ॥ २५ ॥
वयं विमोचिताः स्वामिन्नेतस्मात् खेचरात् त्वया ।
जन्तवः सुप्रसन्नेन गुरुणा पातकादिव ॥ २६ ॥
भवन्त्यस्तनयाः कस्य कुमारस्येति पृच्छतः ।
एका प्रोवाच तन्मध्याद्राजः शङ्खपुरेशितुः ॥ २७ ॥
सुता दुर्लभराजस्य नाम्ना कमलवत्यहम् ।
भयेनैतस्य मयका विवाहो नेप्सितः खलु ? ॥ २८ ॥
कुमारोऽवोचत भयं स्नेहजं कोपजं नु वा ।
साऽवदत् कोपजं तद्धि स्नेहजं तु कुतो यतः ॥ २९ ॥
अहं हि कुट्टिमतलादनेनाऽपहृता पुरा ।
ततः स्वरसनाच्छेदं कुर्वत्येवं प्रजल्पिता ॥ ३० ॥
रमणः प्रतिपत्तव्यस्त्वयावश्यं मदुक्तया ।
आगन्तव्यं समीपे मे यामिन्यां सर्वदा तथा ॥ ३१ ॥
भविष्यति विमानं ते सुशीलाया ममाज्ञया ।
यद्येवं कुरुषे तत्त्वां विमुञ्चामि न हन्म्यहम् ॥ ३२ ॥
कृत्वा शपथनिर्बन्धं प्रतिपन्नं मयाऽपि तत् ।
अनेन शिक्षिता चाऽस्मि साधो ! नृत्यादिकाः कलाः ॥ ३३ ॥
एवमन्या वशेऽनेन कृतास्तिस्रो नृपात्मजाः ।
त्वया विनिघ्नता ह्येनं सर्वासां विहितं सुखम् ॥ ३४ ॥
इति श्रुत्वा कुमारेण स्वस्थानं प्रेषिता इमाः ।
स च स्वप्रियसोविग्रम चेत्या सह समाययौ ॥ ३५ ॥

BIBLIOTHECA INDICA
A
COLLECTION OF ORIENTAL WORKS
PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL
NEW SERIES, No. 1200.




# श्रीशान्तिनाथचरित्रम् ।

# ÇRĪ ÇĀNTINĀTHA ÇARITRA

BY

ÇRĪ AJITA PRABHĀCĀRYA.

EDITED BY

**MUNI INDRAVIJAYA**

DISCIPLE OF

ÇĀSTRA VIÇĀRADA JAINĀCĀRYA

**ÇRĪ VIJAYA DHARMA SŪRI.**

FASCICULUS I.

Calcutta:

PRINTED BY UPENDRA NATHA CHAKRAVARTI, AT THE SANSKRIT PRESS,
AND PUBLISHED BY THE
ASIATIC SOCIETY, 57, PARK STREET.
1909.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL.

No. 57, PARK STREET, CACUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MR. BERNARD QUARITCH,

11, GRAFTON STREET, NEW BOND STREET, LONDON, W., AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied —some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series*

| Title | Rs. | As. |
|---|---|---|
| *Advaita Brahma Siddhi, Fasc. 2, 4 @ /10/ each | 1 | |
| Advaitachintā Kaustubha, Fasc. 1-3 @ /10/ each | 1 | 1 |
| *Agni Purāṇa, Fasc. 3-14 @ /10/ each | 7 | |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-5; Vol. III, Fasc. 1-5, Vol. IV, Fasc. 1-8 @ /10/ each | 14 | |
| Aitereya Lochana | 2 | |
| *Aṇu Bhāṣhya, Fasc. 2-5 @ /10/ each | 2 | |
| Aphorisms of Saṇḍilya, (English) Fasc. 1 @ 1/- | 1 | |
| Aṣṭasāhasrika Prajñāpāramitā, Fasc. 1-6 @ /10/ each | 3 | 1 |
| *Atharvana Upanishad, Fasc. 3-5 @ /10/ each | 1 | 1 |
| Atmatattvaviveka, Fasc. I. @ /10/ each | 0 | 1 |
| Açvavaidyaka, Fasc. 1-5 @ /10/ each | 3 | |
| Avadana Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1-6; Vol. II. Fasc. 1-5 @ 1/ each | 11 | |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1-3 @ 1/- each | 3 | |
| Bālam Bhaṭṭī, Vol. I, Fasc. 1-2, Vol. 2, Fasc. 1 @ /10/ each | 1 | 1 |
| Baudhāyana S'rauta Sūtra, Fasc. 1-3 Vol. II, Fasc. 1 @ /10/ each | 2 | |
| *Bhāmatī, Fasc. 4-8 @ /10/ each | 3 | |
| Bhāṭṭa Dipika Vol. I, Fasc. 1-5 @ /10/ each | 3 | |
| Brahma Sutra, Fasc. 1 @ /10/ each | 0 | 1 |
| Bṛhaddevata Fasc. 1-4 @ /10/ each | 2 | |
| Bṛhaddharma Purāṇa Fasc. 1-6 @ /10/ each | 3 | 1 |
| Bodhicaryāvatāra of Çāntideva, Fasc. 1-5 @ /10/ each | 3 | |
| Çataduṣaṇī, Fasc. 1-2 @ /10/ each | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each | 8 | |
| Çatapatha Brāhmaṇa, Vol. I, Fasc. 1-7, Vol. II. Fasc. 1-5, Vol. III, Fasc. 1-7 Vol. 5, Fasc. 1-4 @ /10/ each | 14 | |
| Ditto Vol. 6, Fasc. 7 | 1 | 4 |
| Çatasāhasrikā Prajñāpāramitā Part. I. Fasc. 1-12 @ /10/ each | 7 | 8 |
| *Caturvarga Chintāmani, Vol. II, Fasc. 1-25; Vol. III Part I, Fasc. 1-18 Part II, Fasc. 1-10 Vol. IV Fasc. 1-6 @ /10/ each | 36 | 1 |
| Ditto Vol. 4, Fasc. 7 | 1 | 4 |
| Çlockavartika, (English) Fasc. 1-6 @ 1/4/ each | 7 | 8 |
| *Çrauta Sutra of Āpastamba, Fasc. 9-17 @ /10/ each | 5 | 10 |
| Ditto Çankhāyana, Vol. I, Fasc. 1-7, Vol. II, Fasc. 1-4, Vol. III, Fasc. 1-4 @ /10/ each, Vol. 4, Fasc. 1 | 10 | 0 |
| Çri Bhāshyam Fasc. 1-3 @ /10/ each | 1 | 14 |
| Dāna Kriyā Kaumudī, Fasc. 1-2 @ /10/ each | 1 | 4 |
| Gadadhara Paddhati Kālasāra Vol. I, Fasc. 1-7 @ /10/ each | 4 | 6 |
| Ditto Āchārasārah Vols. II, Fasc. 1-3 @ /10/ each | 1 | 14 |
| Gobhiliya Grihya Sutra, Fasc. 4-12 @ /10/ each | 5 | 10 |
| Ditto Vol. II, Fasc. 1 | 1 | 4 |
| Kāla Viveka, Fasc. 1-7 @ /10/ each | 4 | 6 |
| Katantra Fasc. 1-6 @ /12/ each | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc. 1-14 @ 1/4/ each | 17 | 8 |
| *Kurma Purāṇa, Fasc. 3-9 @ /10/ each | 3 | 2 |
| Lalita Vistara, (English) Fasc. 1-3 @ 1/- each | 3 | 0 |
| Lalitavistara Fasc. 3-6 @ /10/ each | 2 | 8 |
| Madana Pārijāta Fasc. 1-11 @ /10/ each | 6 | 14 |
| Maha-bhāsya pradipōdyota, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-12 Vol. III, Fasc. 1-6 @ /10/ each | 16 | 14 |
| Manutika Sangraha, Fasc. 1-3 @ /10/ each | 1 | 14 |
| Mārkaṇḍeya Purāṇa, (English) Fasc. 1-9 @ 1/- each | 9 | 0 |
| *Markandeya Purana, Fasc. 5-7 @ /10/ each | 1 | 14 |

अर्हम् ।

श्रीधर्मविजयगुरुभ्यो नमः ।

श्रीअजितप्रभाचार्यविरचितम् ।

# श्रीशान्तिनाथचरित्रम् ।

श्रेयोरत्नाकरोद्भूतामर्हल्लक्ष्मीमुपास्महे ।
स्पृहयन्ति न के यस्यै शेषश्रीविरताशयाः ॥ १ ॥

वृषेण भाति यो ब्रह्मकृता लक्ष्मगतेन वा ।
सत्यन्वर्थाय तस्मै [1]श्रीवृषभस्वामिने नमः ॥ २ ॥

येऽन्तरङ्गारिषड्वर्गोपसर्गोग्रपरीषहैः ।
न जितास्तेऽजितस्वामिमुख्या नन्दन्तु तीर्थपाः ॥ ३ ॥

हतारिष्टतमःशान्तिश्चारुहेमनगद्युतिः ।
प्रत्यादिष्टभवभ्रान्तिः श्रीशान्तिर्जयताज्जिनः ॥ ४ ॥

[2]गृहिव्रतोपमा यस्य भवाः श्रीदृग्भावकाः ।
शान्तिनाथस्य तस्यैव चरितं कीर्त्तयाम्यहम् ॥ ५ ॥

जम्बूद्वीपस्य भरते क्षेत्रेऽत्रैव हि पत्तनम् ।
अस्ति रत्नपुरं नाम नररत्ननिवासभूः ॥ ६ ॥

(१) ख ग श्रीऋषभ- ।

(२) ख वर्णिव्रतमिताः ।

आमोदामोदकृतारातिश्चारुनीतिर्महामतिः ।
रूपलक्ष्म्या [1]रतिपतिः श्रीषेणस्तत्र भूपतिः ॥ ७ ॥
दानमानप्रियालापैः सदा तेनाभिनन्दिता ।
तस्याभिनन्दिता राज्ञी द्वितीया शिखिनन्दिता ॥ ८ ॥
सा पूर्वप्रेयसी राज्ञ ऋतुस्नानाभिनन्दिता ।
ससधातुः शयनीये सुखसुप्ताऽन्यदा निशि ॥ ९ ॥
स्वप्नेऽपश्यन्निजोत्सङ्गवर्त्तिनी भानुमालिनी ।
प्रध्वंसितान्धतमसौ सूर्याचन्द्रमसौ समम् ॥ १० ॥ (युग्मम्)
कथयामास सा भर्त्तुस्तं स्वप्नं मुदिता प्रगे ।
तत्फलं सोऽपि विज्ञाय शशंसैवं प्रसन्नवाक् ॥ ११ ॥
युग्मजातौ भुवि ख्यातौ कुलोद्द्योतविधायिनौ ।
स्वप्नानेन हे देवि तव पुत्रौ भविष्यतः ॥ १२ ॥
बिभ्रत्यभावथो गर्भौ सा राज्ञी शुशुभेऽधिकम् ।
उपकर्तृकृतश्लो कि दधानेव वसुन्धरा ॥ १३ ॥
सम्पूर्णसमये साऽथ सुषुवे तनयद्वयम् ।
विधिप्रयुक्ता सन्नीतिरर्थधर्माविवावनौ ॥ १४ ॥
इन्दुषेणबिन्दुषेण इति नाम्नी तयोः शुभे ।
चकार तत्पिता हृष्टो महोत्सवपुरःसरम् ॥ १५ ॥
अष्टवर्षप्रमाणौ तौ कलाचार्यस्य सन्निधौ ।
कलाभ्यासं विदधतुः क्रमात्प्राप्तौ च यौवनम् ॥ १६ ॥

---

[1] क रतिपतिस्तत्र श्रीषेणभूपति ।

इतश्चात्रैव भरते देशे मगधनामनि ।
श्रियाऽभिरामः सद्ग्रामोऽस्त्यचलग्राम'नामकः ॥ १७ ॥
तत्राभूद्धरणिजटाभिधानो द्विजपुङ्गवः ।
वेदवेदाङ्गतत्त्वज्ञो यशोभद्रा च तत्प्रिया ॥ १८ ॥
स नन्दिभूतिश्रीभूतौ यशोभद्राभवौ सुतौ ।
यत्नतः पाठयामास वेदशास्त्रमहर्निशम् ॥ १९ ॥
दास्या कपिलया जातः कपिलोऽप्यस्य नन्दनः ।
स तु जातिविहीनत्वादतिप्रज्ञाधिकोऽभवत् ॥ २० ॥
स्वपित्रा पाठ्यमानौ तौ शृण्वानः कपिलोऽथ सः ।
जज्ञे चतुर्दशविद्यास्थानविज्ञानकोविदः ॥ २१ ॥
गृहान्निःसृत्य यज्ञोपवीतयुग्मं वहंस्ततः ।
महाब्राह्मणमात्मानं मन्यमानोऽभ्रमद्भुवि ॥ २२ ॥
स आययौ रत्नपुरं सत्यकिर्नाम तत्र च ।
उपाध्यायो बहून् छात्रान् वेदपाठमकारयत् ॥ २३ ॥
पप्रच्छ कपिलस्छात्रान् वेदोपनिषदं तथा ।
यथा नोत्तरमेतस्मै दातुमीशा इमेऽभवन् ॥ २४ ॥
विज्ञाय तं महाप्राज्ञमुपाध्यायो निजे पदे ।
स्थापयामास को नाम गुणैर्न लभते पदम् ॥ २५ ॥
उपाध्यायस्य तस्यासीज्जम्बुका नाम गेहिनी ।
तत्कुक्षिसम्भवा पुत्री सत्यभामाऽभिधा तथा ॥ २६ ॥

योग्योऽयमिति तां तस्मा उपाध्यायो ददौ सुताम् ।
रममाणस्तया सार्द्धं तत्रास्थात्कपिलः सुखम् ॥ २७ ॥
उपाध्यायस्य मान्योऽयमिति लोकैरपूज्यत ।
विद्वत्कथासु सर्वत्र क्रियते स्म निदर्शनम् ॥ २८ ॥
जगज्जीवातुधान्यौघहट्टशृद्धिविधानतः ।
परिरच्चितदुष्कालो वर्षाकालोऽन्यदाऽभवत् ॥ २९ ॥
तस्मिंश्च समयेऽन्येद्युः कौतुकी कपिलो ययौ ।
रात्रौ प्रेक्षणकालोकक्षते देवकुलादिषु ॥ ३० ॥
महत्यामथ यामिन्यामन्धकारे निरन्तरे ।
वर्षत्यम्बुधरे गेहमागच्छन् [1]स व्यचिन्तयत् ॥ ३१ ॥
मार्गो निःसञ्चरस्तावत्तमसाऽन्तरितेक्षणम् ।
विश्वं प्रवर्त्तते तत्किं वस्त्रे आर्द्रीकरोम्यहम् ॥ ३२ ॥
विचिन्त्येदमथो कक्षान्तरे प्रक्षिप्य वाससी ।
स सत्वरमुपेयाय नग्नीभूतो निजं गृहं ॥ ३३ ॥
परिधाय ततो वस्त्रे प्रविवेश गृहान्तरं ।
तद्भार्या तं बभाषे ऽथ ढौकयित्वाऽन्यवाससी ॥ ३४ ॥
अयतेन जलक्लिन्ने मुञ्च त्वं नाथ चीवरे ।
इमे च परिधत्स्वेति भणितः कपिलो ऽब्रवीत् ॥ ३५ ॥
पश्य प्रिये नहि क्लिन्ने मल्लशक्त्या ममाम्बरे ।
करस्पर्शात्तत्प्रियाऽपि ते विवेद तथाविधे ॥ ३६ ॥

---

[1] क सोऽव्यचिन्तयत् ।

दृष्ट्वा च विद्युदुद्योतेनाङ्गमस्य जलार्द्रितम् ।
सैवं 'विचिन्तयामास सत्या दर्भाग्यतोयधोः ॥ ३७ ॥
नूनं वृष्टिभयादेष गोपयित्वाऽम्बरे पथि ।
नग्न एव समायातो वृथाऽऽत्मानं प्रशंसति ॥ ३८ ॥
अनया चेष्टया नैष कुलीनोऽपि विभाव्यते ।
तदस्य गृहवासेन मम छन्न विडम्बना ॥ ३९ ॥
इत्यन्तश्चिन्तया मन्दरागा तस्मिन् बभूव सा ।
तथापि सममेतेन गृहवासमपालयत् ॥ ४० ॥
कपिलस्य पिता सोऽथ ब्राह्मणः कर्मदोषतः ।
बभूव विभवक्षोणो भूरिविद्याधनोऽपि सन् ॥ ४१ ॥
ज्ञात्वा विभूतिमन्तं तं कपिलं लोकपूजितम् ।
आगाद्ब्राह्मणकोऽन्येद्युस्तद्गृहेऽसौ धनाशया ॥ ४२ ॥
भोजनावसरे सोऽथ विभिन्नः समुपाविशत् ।
कपिलो निजतातस्य व्यपदिश्य मिषान्तरम् ॥ ४३ ॥
ततस्तस्या विशेषेणाभवद्भ्रान्तिर्मनोगता ।
रहः पृष्टश्च विप्रोऽसौ तया शपथपूर्वकम् ॥ ४४ ॥
किमयं तात युष्माकमङ्गजो वा परो न्विति ।
तेनाऽपि सर्वमेतस्यै तदाख्यातं यथातथम् ॥ ४५ ॥
दत्त्वा यथोचितं किञ्चिद्विसृष्टः कपिलेन सः ।
विप्रो जगाम धरणिजटाख्यो नगरे निजे ॥ ४६ ॥

विरक्ता सत्यभामा सा कपिलस्य गृहात्ततः ।
गत्वा श्रीषेणभूपालं कृताञ्जलिरथावदत् ॥ ४७ ॥
देव त्वं जगतीपालो लोकपालश्च पञ्चमः ।
दीनानाथाशरण्यानां सर्वेषां त्वं गतिः [1]किल ॥ ४८ ॥
ततः कुरुष्व कारुण्यं मयाप्युपरि भूपते ।
प्रत्यूचे पार्थिवस्तां हि किं ते दुःखस्य कारणम् ॥ ४९ ॥
पूज्यस्तावदुपाध्यायस्तस्य त्वमसि नन्दिनी ।
[2]गेहिनी कपिलस्यापि मान्यस्त्वत्पितुरेव यः ॥ ५० ॥
उवाच सत्यभामैवमस्ति राजन् परं मम ।
भर्त्ता यः कपिलो नाम सोऽकुलीनत्वदूषितः ॥ ५१ ॥
राज्ञाऽथ कथमित्युक्ता राज्ञोऽग्रे साऽपि सून्रृताम् ।
तत्कथां कथयामास भूयश्चैवमभाषत ॥ ५२ ॥
अमुष्य गृहवासेन पर्याप्तं मम सर्वथा ।
तथा कुरु महीनाथ यथा शीलं चराम्यहम् ॥ ५३ ॥
आकार्य भूभुजाऽभाणि साञ्जसं कपिलोऽथ सः ।
विरक्ता गृहवासस्य भद्रेयं त्वत्प्रियेत्यलम् ॥ ५४ ॥
तदिमां विगतस्नेहां मुञ्च त्वं स्वपरिग्रहात् ।
यथाऽसौ पितृगेहस्था कुर्याद्धर्मं कुलोचितम् ॥ ५५ ॥
कपिलोऽप्यब्रवीदेव क्षणमप्यनया विना ।
न स्थातुमहमीशोऽस्मि तदियं मुच्यते कथम् ॥ ५६ ॥

(1) घ प्रभो ।
(2) घ गृहिणी ।

राज्ञा तु सत्यभामा सा पुनः पृष्टाऽब्रवीदिति ।
नैतस्माद्यदि मे मोक्षस्तन्मरिष्यामि निश्चितम् ॥ ५७ ॥
राज्ञोचे कपिलो भूयो हंहो धृत्वा बलादमूम् ।
स्त्रीहत्यां किं करोषि त्वं किं बिभेषि न पापतः ॥ ५८ ॥
अस्मद्राज्ञीसमीपस्था तिष्ठत्वेषा यथासुखम् ।
दिनानि कत्यपीत्युक्तो मेनेऽसौ कपिलोऽ[1]पि तत् ॥ ५९ ॥
सत्यभामा विनीता सा कुर्वाणा शीलरक्षणम् ।
राजराज्ञीसमीपस्था गमयामास वासरान् ॥ ६० ॥
सूरिर्विमलबोधाख्यो विहरन्नवनीतले ।
तत्रागत्य पुरेऽन्येद्युस्तस्थौ स्थाने यथोचिते ॥ ६१ ॥
सूरेरागमनोदन्तमाकर्ण्य जनतामुखात् ।
ययौ तद्वन्दनाहेतोः श्रीषेणपृथिवीपतिः ॥ ६२ ॥
सूरिं नत्वा यथास्थानमुपाविशन्महीपतिः ।
तमुद्दिश्य मुनीन्द्रोऽथ विदधे धर्मदेशनाम् ॥ ६३ ॥
मनुष्यकादिसामग्रीं सम्प्राप्यापि प्रमादिनः ।
ये धर्मं नानुतिष्ठन्ति तेषां जन्म निरर्थकम् ॥ ६४ ॥
जैनं धर्मं समाराध्य भूत्वा विभवभाजनम् ।
प्राप्ताः सिद्धिसुखं ये ते श्लाघ्या मङ्गलकुम्भवत् ॥ ६५ ॥

तद्यथा —

उज्जयिन्यां महापुर्यां वैरिसिंहो महीपतिः ।
सोमचन्द्रा च तद्भार्या धनदत्तश्च श्रेष्ठ्यभूत् ॥ ६६ ॥

[1] क घ ङ अथ तत् ।

धर्मार्थी सुविनीतात्मा सत्यशीलदयान्वितः ।
गुरुदेवार्चनप्रीतः स श्रेष्ठी धनदत्तकः ॥ ६७ ॥
सत्यभामेति तद्भार्या शीलालङ्कृतिशालिनी ।
पत्यौ प्रेमपरा किं त्वपत्यभाण्डविवर्जिता ॥ ६८ ॥
साऽन्यदा श्रेष्ठिनं पुत्रचिन्ताम्लानमुखाम्बुजम् ।
दृष्ट्वा पप्रच्छ हे नाथ किं ते दुःखस्य कारणम् ॥ ६९ ॥
श्रेष्ठिना च समाख्याते तस्यै तस्मिन् यथातथे ।
श्रेष्ठिनी पुनरप्यूचे पर्याप्तं चिन्तयाऽनया ॥ ७० ॥
धर्म एव भवेन्नृणामिहामुत्र सुखप्रदः ।
स एव सेवनीयो हि विशेषेण सुखैषिणा ॥ ७१ ॥
तत्त्वं देवे गुरौ चापि कुरु भक्तिं यथोचिताम् ।
देहि दानं सुपात्रेभ्यः [1]पुस्तकं चापि लेखय ॥ ७२ ॥
एवं च कुर्वतोः पुत्रो भावी यदि तदा वरम् ।
भविता निर्मलो नाथ परलोकोऽन्यथाऽऽवयोः ॥ ७३ ॥
हृष्टः श्रेष्ठ्यप्युवाचैवं प्रिये साधूदितं त्वया ।
सम्यगाराधितो धर्मो भवेच्चिन्तामणिर्नृणाम् ॥ ७४ ॥
ततश्च देवपूजार्थं पुष्पग्रहणहेतवे ।
आकार्यारामिकं तस्मै ददौ श्रेष्ठी धनं बहु ॥ ७५ ॥
स्वयं गत्वा तदारामे पुष्पाण्यानीय स प्रगे ।
गृहार्चामर्चयित्वा च गच्छति स्म जिनालये ॥ ७६ ॥

(१) मं॰ छ॰ पुस्तकांश्चापि ।

तत्र नैषेधिकीमुख्यान् यथास्थानं दशत्रिकान् ।
स्थापयन् परया भक्त्या विदधे चैत्यवन्दनाम् ॥ ७७ ॥
ततः साधून्नमस्कृत्य प्रत्याख्यानं विधाय च ।
अतिथीनां संविभागं चकार च महामतिः ॥ ७८ ॥
अन्यदप्यखिलं धर्म्मकर्म शर्मनिबन्धनम् ।
आह्निकं रात्रिकं चैव धनदत्तो व्यधात्सुधीः ॥ ७९ ॥
अथ धर्म्मप्रभावेन तुष्टा शासनदेवता ।
ददौ तस्मै पुत्रवरं प्रत्यक्षीभूय साऽन्यदा ॥ ८० ॥
पुत्रे गर्भागते रात्रिशेषे श्रेष्ठिन्युदैक्षत ।
स्वप्ने हैममयं पूर्णकलशं मङ्गलावृतम् ॥ ८१ ॥
जातश्च समये पुत्रस्ततः कृत्वोत्सवं गुरुम् ।
तस्मै मङ्गलकलश इत्याख्यां तत्पिता ददौ ॥ ८२ ॥
कलाभ्यासपरः सोऽथाष्टवर्षप्रमितोऽन्यदा ।
तात त्वं कुत्र यासीति पप्रच्छ पितरं निजम् ॥ ८३ ॥
सोऽवदद्वत्स गत्वाहमारामे प्रतिवासरम् ।
ततः पुष्पाणि चानीय करोमि जिनपूजनम् ॥ ८४ ॥
ययौ पिता सहान्येद्युस्तत्र सोऽपि कुतूहली ।
आरामिकोऽवदत्कोऽयं बालो नेत्रविशालकः ॥ ८५ ॥
ज्ञात्वा च श्रेष्ठिपुत्रं तं तस्मै सोऽपि ददौ मुदा ।
नारङ्गकरुणादीनि सुस्वादूनि फलान्यलम्[1] ॥ ८६ ॥

(1) क फलान्यपि ।

स्वगेहे पुनरागत्य कुर्वतो जिनपूजनम् ।
श्रेष्ठिनोऽढौकयत्पुत्रः पूजोपकरणं स्वयम् ॥ ८७ ॥
द्वितीये च दिने तेन सादरं भणितः पिता ।
अतः परं मया गम्यं पुष्पानयनकर्मणि ॥ ८८ ॥
निश्चिन्तेनैव स्थातव्यं त्वया तात निजे गृहे ।
अत्याग्रहेण तद्वाक्यमनुमेने पिताऽपि तत् ॥ ८९ ॥
एवं च कुर्वतस्तस्य धर्माभ्यासं तथान्तरा ।
कियत्यपि गते काले यज्जातं तन्निशम्यताम् ॥ ९० ॥
अस्त्यत्र भरतक्षेत्रे चम्पा नाम महापुरी ।
अभूत्तत्र महाबाहुः पार्थिवः सुरसुन्दरः ॥ ९१ ॥
राज्ञी गुणावली तस्य सा निजोत्सङ्गवर्त्तिनीम् ।
दृष्ट्वा कल्पलतां स्वप्ने पार्थिवाय न्यवेदयत् ॥ ९२ ॥
राजा प्रोवाच हे देवि तव पुत्री भविष्यति ।
सर्वलक्षणसम्पूर्णा सर्वनारीशिरोमणिः ॥ ९३ ॥
पूर्णकाले [1]च सार्वङ्गी सा देवी सुषुवे सुताम् ।
त्रैलोक्यसुन्दरी नाम तस्याश्चक्रे महीपतिः ॥ ९४ ॥
लावण्यधनमञ्जूषा सौभाग्यरसनिम्नगा ।
बभूव यौवनप्राप्ता सा मूर्त्तेव सुराङ्गना ॥ ९५ ॥
तां विलोक्यानवद्याङ्गीं दध्याविति [2]धराधिपः ।
रमणः कोऽनुरूपोऽस्या [3]वत्साया मे भविष्यति ॥ ९६ ॥

(१) ख ग घ ऽथ ।
(२) ग घ ङ धरापतिः ।
(३) ख वत्सायाः को । घ वत्साया क ।

अन्ये च प्रेयसीः सर्वा वराहेयं सुताऽभवत् ।
दातव्या ब्रूत तत् कस्मै सर्वार्थं वः प्रधावता ॥ ९७ ॥
ता जगुरियमस्माकं जीवितादपि वल्लभा ।
नालं धर्तुं वयं प्राणान् क्षणमप्यनया विना ॥ ९८ ॥
दातव्या तदसौ मन्त्रिपुत्रायात्रैव हे प्रिय ।
प्रत्यहं नयनानन्दकारिणी दृश्यते यथा ॥ ९९ ॥
ततो राज्ञा समाहूय सुबुद्धिः सचिवो निजः ।
अभाणि यन्मया दत्ता त्वत्सुतायात्मसुन्दरी[1] ॥ १०० ॥
अमात्योऽप्यवदद्देव किमयुक्तं ब्रवीष्यदः ।
कस्मैचिद्राजपुत्राय दातुं कन्या तवोचिता ॥ १ ॥
राज्ञोचे न त्वया वाच्यमित्यर्थे किञ्चनापि भोः ।
देया त्वत्तनयेऽवश्यं पुत्री त्रैलोक्यसुन्दरी ॥ २ ॥
मन्त्री कृतावहित्थोऽथ गृहं गत्वा व्यचिन्तयत् ।
हा व्याघ्रदुस्तटीन्याये पतितोऽस्मि करोमि किम् ॥ ३ ॥
रतिरम्भोपमाकारा राज्ञः पुत्री सुतस्तु मे ।
कुष्ठी तदेतयोर्योगं कथं जानन् करोमि किम् ॥ ४ ॥
अथवाऽयं मयोपायो लब्धो यत्कुलदेवताम् ।
आराध्य साधयिष्यामि सर्वमात्मसमीहितम् ॥ ५ ॥
ततश्चाराधयामास विधिना कुलदेवताम् ।
उवाच साऽपि[3] प्रत्यक्षीभूय मन्त्रिन् स्मृताऽस्मि किम् ॥ ६ ॥

१ ख -सन्दिना ।   २ ख प्रत्यक्षीभूय ।   ३ ख सा च ।

मन्त्र्यूचे त्वं स्वयं वेत्सि सर्वं दुःखस्य कारणम् ।
तथा कुरु यथा पुत्रो नीरोगाङ्गो भवेन्मम ॥ ७ ॥
देव्यूचे नान्यथाकर्त्तुं नृणां कर्म पुराकृतम् ।
दैवतैरपि शक्येत व्यर्थेयं प्रार्थना तव ॥ ८ ॥
मन्त्री प्रोवाच यद्येवं तदन्यमपि पूरुषम् ।
तदाकारं निराकल्यं कुतोऽप्यानीय मेऽर्प्पय ॥ ९ ॥
तेनोद्वाह्य महाराजपुत्रीं कमललोचनाम् ।
अर्प्पयिष्यामि पुत्रस्य करिष्येऽस्य यथोचितम् ॥ १० ॥
[1]देवतोचे पुरीद्वारे ऽश्वरक्षकनरान्तिके ।
शीतव्यथानिरासार्थं अग्निसेवापरो हि यः ॥ ११ ॥
कुतोऽप्यानीय मयका मुक्तो भवति बालकः ।
स मन्त्रिन् भवता ग्राह्यः पश्चात्कुर्य्याद्यथोचितम् ॥ १२ ॥

( युग्मम् )

इत्युक्त्वाऽन्तर्दधे देवी हृष्टोऽथ सचिवेश्वरः ।
सर्वां विवाहसामग्रीं प्रगुणीकुरुते स्म सः ॥ १३ ॥
अश्वपालनरं छन्नमाकार्य निजकं ततः ।
तस्मै निवेद्य सकलं वृत्तान्तं सत्यमादितः ॥ १४ ॥
इदमूचे च यः कश्चिदभ्येति भवदन्तिके ।
कुतोऽपि बालकः सो हि समर्प्यो मेऽविलम्बितम् ॥ १५ ॥
तं अभिनन्दनं तस्या वरं विज्ञाय साविनम् ।
उज्जयिन्यां ययौ पुर्य्यां मन्त्रिणः कुलदेवता ॥ १६ ॥

[1] ष देव्यूचे ।

अन्तरिक्षस्थितोवाच सा चैवं तस्य शृखतः ।
पुष्पाण्यानीय चारामाङ्गच्छतो निजवेश्मनि ॥ १७ ॥
स एष बालको याति पुष्पभाजनपाणिकः ।
परिणेष्यति यो राजकन्यकां भाटकेन हि ॥ १८ ॥
तच्छ्रुत्वा विस्मितः सोऽथ किमेतदिति सम्भ्रमात् ।
तातस्य कथयिष्यामीति ध्यायन् सदनं ययौ ॥ १९ ॥
गृहं गतस्य सा वाणी विस्मृता तस्य दैवतो ।
द्वितीये दिवसेऽप्येवं श्रुत्वा पुनरचिन्तयत् ॥ २० ।
अहो 'अद्यैव सा वाणी या श्रुता ह्यो मयाऽम्बरे ।
तदद्य सदनं प्राप्तः कथयिष्याम्यहं पितुः ॥ २१ ॥
सोऽचिन्तयदिदं यावत्तावदुत्पाद्य वात्यया ।
नीतो दूरतरारण्ये चम्पापुर्याः समीपगे ॥ २२ ॥
भयभ्रान्तस्तृषाक्रान्तः श्रान्तस्तत्र स बालकः ।
सम्मानसभ्रमकरं ददर्शाग्रे सरोवरम् ॥ २३ ॥
तत्र वस्त्राञ्चलापूतं पयः पीत्वाऽतिशीतलम् ।
तत्सेतुस्कन्धसंरूढमाशिश्राय वटद्रुमम् ॥ २४ ॥
तदा चास्तमितो भानुरवस्थापतितस्य हि ।
श्रेष्ठिपुत्रस्य तस्योपकारं कर्त्तुमिवाक्षमः ॥ २५ ॥
कृत्वा दर्भतृणैरज्जुं तयाऽऽरुह्य च तं द्रुमम् ।
स ददर्शोत्तराशायामदूरे ज्वलितानलम् ॥ २६ ॥

१) ख ग अद्यापि ।

ततो वटात्समुत्तीर्य स भीतः शीतविह्वलः ।
हुताशनानुसारेण चम्पापुर्या ययौ बहिः ॥ २७ ॥
तत्रोपान्तेऽश्वपालानां कुर्व्वाणो वह्निसेवनम् ।
यावदासीदसौ हस्यमानस्तैर्दुष्टचेष्टितैः ॥ २८ ॥
तावत्तेन 'नरेणैत्य पूर्वादिष्टेन मन्त्रिणा ।
आत्मनः पार्श्वमानीतः कृतश्च निरुपद्रवः ॥ २९ ॥
गोपयित्वाऽतियत्नेन प्रभातसमयेऽमुना ।
अर्पितोऽ'मात्यवर्गस्य गृहे नीत्वा सगौरवम् ॥ ३० ॥
भोजनाच्छादनप्रायममात्योऽप्यस्य गौरवम् ।
चकार मदनस्यात्मगोपनं च दिवानिशम् ॥ ३१ ॥
ततोऽसौ चिन्तयामास किमयं मम सत्क्रियाम् ।
कुरुते निर्गमं चैव यत्नाद्रक्षति मन्दिरात् ॥ ३२ ॥
पप्रच्छ चान्यदाऽमात्यं तात वैदेशिकस्य मे ।
किमिदं माननं हन्त भवद्भिः क्रियतेऽधिकम् ॥ ३३ ॥
का नामैषा पुरी को वा देशः को वाऽत्र भूपतिः ।
इति सत्यं ममाख्याहि विस्मयोऽत्र प्रवर्त्तते ॥ ३४ ॥
अमात्योऽप्यब्रवीच्चम्पानाम्नीयं नगरी वरा ।
अङ्गाभिधानो देशश्च राजाऽत्र सुरसुन्दरः ॥ ३५ ॥
सुबुद्धिर्नाम तस्याहं माननीयो महत्तमः ।
मयाऽऽनीतोऽसि वत्स त्वं कारणेन गरीयसा ॥ ३६ ॥

(१) ख ग ङ- नरेणैवं । (२) ग -मात्यवर्यस्य ।

त्रैलोक्यसुन्दरी नाम राज्ञा पुत्री विवाहितुम् ।
प्रदत्ता मम पुत्राय स तु कुष्ठेन पीडितः ॥ ३७ ॥
परिणीय त्वया भद्र विधिना सा नृपाङ्गजा ।
दातव्या मम पुत्राय तदर्थं त्वामिहानयम् ॥ ३८ ॥
तच्छ्रुत्वा मङ्गलोऽवोचदकृत्यं किं करोत्वदः ।
क्व सा रूपवती बाला निन्द्यरोगी क्व ते सुतः ॥ ३९ ॥
कर्मेदं न करिष्यामि कथञ्चिदतिनिष्ठुरम् ।
कूपे क्षिप्त्वा जनं मुग्धं वरत्राकर्त्तनोपमम् ॥ ४० ॥
मन्त्र्यूचे चेन्न कर्मेदं करिष्यसि सुदुर्मते ।
तदा त्वां निजहस्तेन मारयिष्यामि निश्चितम् ॥ ४१ ॥
इति निस्त्रिंशमाकृष्य भणितोऽपि सुबुद्धिना ।
अकृत्यं नानुमेने तत् स कुलीनशिरोमणिः ॥ ४२ ॥
प्रधानपुरुषैर्मन्त्री निषिद्धस्तस्य मारणात् ।
अभाणि सोऽपि मन्यस्व भद्र त्वं मन्त्रिणो वचः ॥ ४३ ॥
ततोऽसौ चिन्तयामास भवितव्यमिदं खलु ।
अन्यथोज्जयिनी क्वाऽसौ ममेहागमनं क्व च ॥ ४४ ॥
इदमाकाशवाचाऽपि दैवत्या कथितं तदा ।
तत्करोम्यहमप्येवं यद्भाव्यं तद्भवत्यहो ॥ ४५ ॥
विचिन्त्येदं पुनः स्माह मङ्गलो मन्त्रिणं प्रति ।
यद्यवश्यमिदं कार्यं मयका कर्म निर्घृणम् ॥ ४६ ॥
तदाऽहमपि वः पार्श्वे नाथ नाथामि सर्वथा ।
मह्यं ददाति यद्राजा वस्तुजातं ममैव तत् ॥ ४७ ॥

स्थापनीयं [1]तु तत्सर्वमुज्जयिन्याः पुरोऽध्वनि ।
एवमस्त्विति तद्वाक्यं मेने मन्त्र्यपि बुद्धिमान् ॥ ४८ ॥
इति मङ्गलकुम्भोऽसौ सचिवः प्रत्यपद्यत ।
सर्वं च सज्जयामास क्रमाद्वैवाहिकं विधिम् ॥ ४९ ॥
अथ व्योम्नःप्रतिच्छन्दमिव मण्डपमुत्तमम् ।
आदेशकारकैः भूपः स्वानुरूपमकारयत् ॥ ५० ॥
कुमारकः कृतस्नानः कृतचन्दनलेपनः ।
सदशश्वेतवसनो हस्तविन्यस्तकङ्कणः ॥ ५१ ॥
दत्तकुङ्कुमहस्तोऽथ हस्त्यारूढो विभूषणैः ।
उत्तममेरुशृङ्गाग्ररूढकल्पद्रुमोपमः ॥ ५२ ॥
द्राघीयोभिर्वरस्त्रीणां जुलुलुध्वनिभिर्भृशम् ।
पञ्चस्वनैश्च विदधत् दिवं नादमयीमिव ॥ ५३ ॥
कृतशक्रधनुर्दण्डैर्मायूरातपवारणैः ।
वार्यमाणातपः प्राप मण्डपद्वारसन्निधिम् ॥ ५४ ॥
उत्तीर्य कुञ्जरात् तुङ्गात् कुलस्त्रीभिः कृतं तदा ।
अर्घमैष प्रतीयेष प्रद्योतन इव प्रगे ॥ ५५ ॥
समासन्ने ततो लग्ने हस्तिस्कन्धाधिरोपितः ।
स निन्ये भूपतेः पार्श्वं वस्त्राभरणभूषितः ॥ ५६ ॥
त्रैलोक्यसुन्दरी साऽथ दृष्ट्वा तं मन्मथोपमम् ।
अमंस्त तद्वरप्राप्त्या कृतार्थं स्वं मनस्विनी ॥ ५७ ॥

---

(1) च क्वि ।

ततश्च विप्रे पुण्याहं पुण्याहमिति जल्पति ।
चत्वारि परितो वह्निं भ्रमतुर्मण्डलानि तौ ॥ ५८ ॥
प्रथमे मण्डले राजा चारुवस्त्राण्यनेकशः ।
वरायादाद् द्वितीये च स्थाला[1]भरणसञ्चयम् ॥ ५९ ॥
तृतीये मणिहेमादि चतुर्थे च रथादिकम् ।
जायापत्योस्तयोरित्थं जज्ञे पाणिग्रहोत्सवः ॥ ६० ॥
कृतोद्वाहे वरे चास्मिन् वधूहस्तममुञ्चति[2] ।
उवाच नृपतिर्भूयो वत्स यच्छामि किं नु[3] ते ॥ ६१ ॥
ततश्च याचितस्तेन जात्यघोटकपञ्चकम् ।
तत्तस्मै शीघ्रमेवासौ प्रददौ प्रीतमानसः ॥ ६२ ॥
वाद्यमाने ततस्तूर्येऽभवद्धवलमङ्गलः ।
मन्त्रिणा स्वगृहं निन्ये समं वध्वा स मङ्गलः ॥ ६३ ॥
तत्रामात्यगृहजनस्तत्रं कृत्रमभाषत ।
कथं निर्वास्यतेऽद्यापि नायं वैदेशिको नरः ॥ ६४ ॥
त्रैलोक्यसुन्दरी साऽथ चलचित्तं निजं पतिम् ।
ज्ञात्वेङ्गितैस्ततस्तस्योपान्तं नैवामुचत् क्षणम् ॥ ६५ ॥
ततः क्षणान्तरेणासौ देहचिन्तार्थमुत्थितः ।
जलपात्रं गृहीत्वाऽऽशु तदनु प्राचलच्च सा ॥ ६६ ॥
कृतायामपि तस्यां तं शून्यचित्तं रहःस्थितम् ॥
उवाच प्रेयसी कान्त बाधते त्वां क्षुधा नु किम् ॥ ६७ ॥

(१) ख घ वस्त्रा- । (३) ङ. च ।
(२ ङ -हस्तं न मुञ्चति ।

ओमिति भणिते तेन दासीहस्तेन मोदकान् ।
आनाय्य स्वगृहात्तस्मै ददौ त्रैलोक्यसुन्दरी ॥ ६८ ॥
भुक्तेषु तेषु पानीयं पिबता तेन भाषितम् ।
अहो रम्यतरा एते मोदकाः सिंहकेसराः ॥ ६९ ॥
उज्जयिन्या नगर्याश्चेन्नीरमास्वाद्यतेऽमलम् ।
तदा तृप्तिर्भवेन्नूनं मोदकेष्वशितेष्वपि ॥ ७० ॥
तच्छ्रुत्वा राजपुत्री सा दध्यावाकुलचेतसा ।
अहो अघटमानं किं वाक्यमेष प्रजल्पति ॥ ७१ ॥
मातृगेहमथावन्त्यामार्यपुत्रस्य भावि वा ।
तदसौ दृष्टपूर्वत्वाज्जानात्यस्याः स्वरूपताम् ॥ ७२ ॥
ततश्च निजहस्तेन मुखपाटवकारणम् ।
पञ्चसौगन्धिकं तस्मै ताम्बूलं दत्तवत्यसौ ॥ ७३ ॥
सन्ध्याकाले पुनर्मन्त्रिमानुषैः प्रेषितोऽथ सः ।
त्रैलोक्यसुन्दरीमेवमूचे मतिमतां वरः ॥ ७४ ॥
गमिष्यामि पुनर्देहचिन्तायामुदरार्त्तिभाक् ।
त्वया क्षणान्तरेणागन्तव्यमादाय पुष्करम् ॥ ७५ ॥
निरगाच्च ततो मन्त्रिमन्दिरात्पुरुषांश्च तान् ।
पप्रच्छ राजदत्तं भोः क्वास्ति तद्वस्तु मामकम् ॥ ७६ ॥
तैश्च तद्दर्शितं सर्वमुज्जयिन्याः पथि स्थितम् ।
ततः सारतरं वस्तु निक्षिप्यैकरथे वरे ॥ ७७ ॥
तस्मिंश्च योजयित्वाऽश्वांश्चतुरः पृष्ठतस्तथा ।
बध्वैकं शेषकं वस्तु मुक्त्वा तत्रैव सोऽचलत् ॥७८॥ (युग्मम्)

दृष्टाश्चानिव ते ग्रामानुज्जयिन्यध्वगामराः[1] ।
प्रत्येकं कथयन्ति स्म नामग्राहं मुहुर्मुहुः ॥ ७९ ॥
ततो रथाधिरूढोऽसौ तेन मार्गेण बुद्धिमान् ।
स्तोकैरेव दिनैः प्राप्तस्तामेव नगरीं निजाम् ॥ ८० ॥
इतश्च पितरौ तस्य तमन्विष्य विलप्य च ।
बहुधा बहुभिर्वर्षैः गतशोकौ बभूवतुः ॥ ८१ ॥
गृहाभिमुखमायान्तं रथारूढं विलोक्य तम् ।
बभाषेऽथापरिज्ञाय जनन्यस्य ससम्भ्रमम् ॥ ८२ ॥
प्रेर्यते गृहमध्येन राजपुत्र कथं रथः ।
कर्त्तास्यभिनवं मार्गं किं त्वं त्यक्त्वा पुरातनम् ॥ ८३ ॥
इत्थं निषिध्यमानोऽपि न यावद्विरराम सः ।
आचख्यौ श्रेष्ठिनस्तावत् श्रेष्ठिन्याकुलिताशया ॥ ८४ ॥
श्रेष्ठ्यप्यस्य निषेधार्थं गृहाद्यावन्निरीयिवान् ।
तावद्रथात्समुत्तीर्य पित्रोः पादौ ननाम सः ॥ ८५ ॥
उपलक्ष्य ततस्ताभ्यामाश्लिष्टस्तनयो निजः ।
सद्यः प्रादुर्भवद्धर्षाऽश्रुपूरप्लावितेक्षणम् ॥ ८६ ॥
पप्रच्छ चोपविष्टः सन् वत्सर्द्धिः कुत ईदृशी ।
क्व वा कालमियन्तं त्वं स्थितोऽसि वद नन्दन ॥ ८७ ॥
ततश्चात्म[2]कथा तेन पित्रोरग्रे निवेदिता ।
वाक्[3]श्रुत्यपहारादि स्वस्यानागमनावधि ॥ ८८ ॥

---

१) ङ च छ -मा नराः ।  (३) घ वाचः ।
२) ख घ तत आत्म- ।

अहो पुत्रस्य सौभाग्यमहो पुत्रस्य दक्षता ।
अहो धैर्य्यमहोभाग्यमिति प्राशंसतामिमौ ॥ ८९ ॥
ततः प्राकारसंगुप्तं[1] स स्वगेहमकारयत् ।
अश्वानां रक्षणार्थं च मन्दुरादिनियन्त्रणम् ॥ ९० ॥
सोऽन्येद्युर्जनकं स्माह मम तात कलागमः ।
स्वल्पोऽस्त्यद्यापि तं[2] पूर्णं करिष्यामि त्वदाज्ञया ॥ ९१ ॥
ततश्चानुमतः पित्रा कलाचार्य्यस्य सन्निधौ ।
कलाऽभ्यासं चकारासौ स्वकीयमदनान्तिके ॥ ९२ ॥
इतश्च मन्त्रिणा तेन रात्रौ मङ्गलवेषभृत् ।
प्रेषितो वासभवने वधूपान्ते सुतो निजः ॥ ९३ ॥
शय्यारूढं च तं दृष्ट्वा दध्यौ त्रैलोक्यसुन्दरी ।
कोऽयं कुष्ठाभिभूताङ्गः समायातो ममान्तिकम् ॥ ९४ ॥
करस्पर्शमथो कर्त्तुमुद्यतेऽस्मिन् झटित्यपि ।
सा शय्यायाः समुत्थाय निर्ययौ भवनाद्बहिः ॥ ९५ ॥
दासीभिर्भणिता किं नु स्वामिन्यसि ससम्भ्रमा ।
साऽवदद्देवताकल्पो गतः क्वापि स मे पतिः ॥ ९६ ॥
प्रत्यूचुस्ता इदानीं स प्रविष्टोऽत्र पतिस्तव ।
साऽब्रवीन्नास्त्यसावत्र कुष्ठिकः कोऽपि विद्यते ॥ ९७ ॥
दासीमध्ये ततः सुप्ता तामतीत्य विभावरीम् ।
त्रैलोक्यसुन्दरी प्रातर्ययौ पितृगृहं निजम् ॥ ९८ ॥

(१) ग संयुक्तं ।
(२) ग स ।

सुबुद्धिरपि दुर्बुद्धिः सोऽथ मन्त्री महीपतेः ।
ययौ सकाशमन्येद्युश्चिन्ताश्याममुखः किल ॥ ९९ ॥
कृतप्रणतिमासीनमथैनं पृथिवीपतिः ।
हर्षस्थाने विषादः किं तवेत्यूचे कृताग्रहः ॥ २०० ॥
स जगाद महाराज विचित्रा कर्म्मणां गतिः ।
अस्माकं मन्दभाग्यानां वशात्परिणता कथम् ॥ १ ॥
चिन्तयत्यन्यथा जीवो हर्षपूरितमानसः ।
विधिस्त्वेष महावैरी कुरुते कार्यमन्यथा ॥ २ ॥
राजा प्रोवाच हे मन्त्रिन् उक्त्वा स्वं दुःखकारणम् ।
मामप्यमुष्य दुःखस्य संविभागयुतं कुरु ॥ ३ ॥
निःश्वस्य सचिवोऽप्यूचे देव दैवं करोति तत् ।
यद्वक्तुमपि नो शक्यमश्रद्धेयं च शृण्वताम् ॥ ४ ॥
स्वामिपादैः सप्रमादैर्दत्ता सूनोर्ममात्मजा ।
तस्यां तु परिणीतायां यद्वृत्तं तन्निशम्यताम् ॥ ५ ॥
यादृग् राज्ञा स्वयं दृष्टस्तादृगेव सुतो मम ।
अधुना कुष्ठरोगार्त्तो दृश्यते क्रियते नु किम् ॥ ६ ॥
तच्छ्रुत्वा भूपतिर्दध्यौ सा नूनं मम नन्दिनी ।
अलक्षणा तत्प्रभावात्[1] कुष्ठी जातोऽस्य पुत्रकः ॥ ७ ॥
स्वकर्मफलभोक्तारः सर्वे जगति जन्तवः ।
अयं हि निश्चयनयो यद्यप्यस्ति जिनोदितः ॥ ८ ॥

(१) ख ग ङ घ छ तत्प्रभावेन ।

तथापि व्यवहारोऽयं यो हेतुः सुखदुःखयोः ।
स एव क्रियते लोके[1] भाजनं गुणदोषयोः ॥ ९ ॥ (युग्मम्)
स्वकर्म्मपरिणामेन जज्ञे पुत्रोऽस्य कुष्ठिकः ।
जाता च तन्निमित्तत्वात्पुत्री मे दोषभाजनम् ॥ १० ॥
जवे च सचिवोऽनर्थमकार्षमहमीदृशम् ।
नादास्यं चेत्सुतां कुष्ठी नाभविष्यत्सुतोऽपि ते ॥ ११ ॥
अमात्योऽप्यब्रवीत् स्वामिन् हितकार्यं प्रकुर्वताम् ।
को दोषो भवतामत्र दोषो मत्कर्मणां पुनः ॥ १२ ॥
अथोत्थाय ययौ मन्त्री सा तु[2] त्रैलोक्यसुन्दरी ।
दृष्टाऽप्यनिष्टा संजाता राज्ञः परिजनस्य च ॥ १३ ॥
न कोऽप्येनामाललाप नाभ्यनन्दत् दृशाऽपि हि ।
एकत्र गुप्तगेहेऽस्थात् सा मातृगृहपृष्ठतः ॥ १४ ॥
अचिन्तयच्च दुष्कर्म्म किं मया विहितं पुरा ।
येन क्वापि ययौ नंष्ट्वा परिणीतः स मे पतिः ॥ १५ ॥
अन्यच्च लोकमध्येऽदः कलङ्कं समुपस्थितम् ।
किं करोमि क्व गच्छामि व्यसने पतिताऽस्मि हा ॥ १६ ॥
एवं चिन्तां प्रकुर्वन्त्यास्तस्याश्चित्ते स्थितं तदा ।
भवितोज्जयिनीपुर्य्यां प्राप्तो नूनं स मे पतिः ॥ १७ ॥
तदा च मोदकांस्तेन भुक्त्वा संजल्पितं किल ।
एते हि मोदका रम्याः किं त्ववन्त्या जलोचिताः ॥ १८ ॥

---

(१) घ ङ लोकैः ।
(२) ग ङ साऽनु ।

ततः केनाप्युपायेन तत्र गच्छाम्यहं यदि ।
तत्रान्विष्य मिलित्वा [1]च भवामि सुखभागिनी ॥ १९ ॥
अथान्येद्युरुवाचाम्बां हे मातर्जनको मम ।
एकवारं यथा वाक्यं शृणोति त्वं तथा कुरु ॥ २० ॥
तां दृष्ट्वाऽनादरपरामन्येद्युः सिंहनामकम् ।
सामन्तं ज्ञापयामास सा तमर्थं कृताञ्जलिः ॥ २१ ॥
सोऽथ राजकुले गत्वा नृपं नत्वोपविश्य च ।
इति विज्ञापयामास प्रस्तावे वदतां वरः ॥ २२ ॥
नृनाथ भवता मान्यचरी सम्प्रत्यसम्मता ।
वराकी वर्त्तते कष्टे सैषा[2] त्रैलोक्यसुन्दरी ॥ २३ ॥
अस्याः संमानदानादि दूरेऽस्त्वालपनं तथा ।
वाक्यश्रवणमात्रेण प्रसादोऽस्य विधीयताम् ॥ २४ ॥
पार्थिवोऽप्यश्रुपूर्णाक्षः प्रोचे सिंह पुराभवे ।
अनया विहितं किञ्चिदभ्याख्यानादि दुष्कृतम् ॥ २५ ॥
तदियं तत्प्रभावेन कलङ्किततनूरभूत् ।
दृष्टाऽप्यनिष्टतां प्राप्ता गाढमस्माकमप्यहो ॥ २६ ॥
वाक्यं तदस्य यत्किञ्चिदनयाऽस्ति विवक्षितम् ।
तद् ब्रवीतु न कष्टैरप्यात्मीयः परिभूयते ॥ २७ ॥
ततस्तदनुमत्यैत्य तत्र त्रैलोक्यसुन्दरी ।
उवाच तात मे वेषं कुमारोचितमर्पय ॥ २८ ॥

---

(१) ख ग घ ङ च छ ऽस्य ।
(२) ग ङ छ कष्टेनैषा ।

भूयो राजाऽब्रवीत् सिंहं किमिदं वक्त्यसौ वचः ।
सोऽवदद्देव युक्तं हि क्रमोऽस्ति यदयं किल ॥ २९ ॥
राज्ञां गृहेषु चेत्पुत्री गुरुकार्येण केनचित् ।
पुंवेषं याचते तस्यै दातव्यः स न संशयः ॥ ३० ॥
ततस्तदनुमत्याऽस्यै पुंवेषं पार्थिवो ददौ ।
आदिदेश च तं सिंहं तद्रक्षार्थं बलान्वितम् ॥ ३१ ॥
अभ्यधात्सुन्दरी भूयस्ताताज्ञा चेद्भवेत्तव ।
उज्जयिन्यां ततो यामि कारणेन गरीयसा ॥ ३२ ॥
कारणं कथयिष्यामि तज्जाते च समीहिते ।
अधुना कथिते तस्मिन् परिणामो न शोभनः ॥ ३३ ॥
हे पुत्रि[1] मम वंशस्य यथा नाभ्येति दूषणम् ।
तथा कार्य्यं त्वयेत्युक्त्वा विसृष्टा सा महीभुजा ॥ ३४ ॥
ततश्च सिंहसामन्तभूरिसैन्यसमन्विता ।
अखण्डितप्रयाणैः सा ययावुज्जयिनीं पुरीम् ॥ ३५ ॥
वैरिसिंहो नृपोऽथैवं शुश्राव जनतामुखात् ।
यच्चम्पायाः समागच्छन्नस्त्यत्र नृपनन्दनः ॥ ३६ ॥
अभियानादिसन्मानस्वागतप्रश्नपूर्वकम् ।
पुरे प्रवेश्य तनामावानीतो निजमन्दिरे ॥ ३७ ॥
पृष्टा चागमनार्थं सा प्रोवाच नगरीमिमाम् ।
द्रष्टुमाश्चर्यसंपूर्णामागतोऽस्मि कुतूहलात् ॥ ३८ ॥

(१) ग ङ ऊ पुत्रिके ।

ततः प्रोक्तो नरेन्द्रेण त्वया स्थेयं ममौकसि ।
सुरसुन्दरराजस्य मम गेहस्य नान्तरम् ॥ ३९ ॥
राजढौकितगेहे सा तस्थौ सबलवाहना ।
पत्तींश्चेत्यादिशत् स्वादु नीरस्थानं निरीक्ष्यताम् ॥ ४० ॥
पूर्वस्यां दिशि ते तत्तु ज्ञात्वा तस्यै न्यवेदयन् ।
तन्मार्गे कारितावासे ऽवात्सीत् सा ऽथ नृपाज्ञया ॥ ४१ ॥
गच्छती नीरपानार्थमन्यदा ऽश्वान्निरीक्ष्य तान् ।
सा दध्यौ मम तातस्य सत्का एते तुरङ्गमाः ॥ ४२ ॥
तेषामनुपदं प्रेष्य पुनर्भृत्यान्[1] वि[illegible]द सा ।
भर्त्तुर्गृहाभिधानादिसर्वशुद्धिं मनस्विनी ॥ ४३ ॥
कलाभ्यामपरं तं च ज्ञात्वा त्रैलोक्यसुन्दरी ।
उवाच सिंहसेन हि कथं ग्राह्यास्तुरङ्गमाः ॥ ४४ ॥
सिंहो ऽवादीत्त्वया ऽऽदिष्टोपायेनैव ततश्च सा ।
सच्छात्रं तं कलाचार्यं भोजनाय न्यमन्त्रयत् ॥ ४५ ॥
भोजनार्थमुपाध्याये तत्रायाते ददर्श सा ।
छात्रमध्ये स्वभर्त्तारं हृदयानन्ददायिनम् ॥ ४६ ॥
तस्मा आसनमात्मीयं स्थालं चादापयत्तदा ।
अकारयद्विशेषेण गौरवं भोजनादिषु ॥ ४७ ॥

(१) च भत्स्याद ।

ततो वस्त्राणि सर्वेभ्यो यथायुक्तमदत्त सा ।
तस्मै निजाङ्गलग्नं च वासोयुग्मं मनोहरम् ॥ ४८ ॥
उवाच च कलाचार्यमेतन्मध्यात् त्वदाज्ञया ।
यो जानाति स आख्यातु च्छात्रो मम कथानकम् ॥ ४९ ॥
सर्वैरपोर्थया छात्रैर्निर्दिष्टः सोऽथ मङ्गलः ।
उपाध्यायगिरा धीमान् वक्तुमेवं प्रचक्रमे ॥ ५० ॥
चरितं कल्पितं किं वा कथयामि कथानकम् ।
साऽवदच्चरितं ब्रूहि, पर्याप्तं कल्पितेन भोः ॥ ५१ ॥
मङ्गलश्चिन्तयामास सैषा त्रैलोक्यसुन्दरी ।
चम्पापुर्यां भाटकेन परिणीता हि या मया ॥ ५२ ॥
केनापि हेतुनेहागात् भूत्वा पुंवेषधारिणी ।
भवत्वेवं कथां तावत् कथयामि निजामहम् ॥ ५३ ॥
जगाद च कथा लोकप्रिया चित्रकरी भवेत् ।
सा च वृत्ता मदीयेऽङ्गे तामाख्यामि निशम्यताम् ॥ ५४ ॥
ततश्चात्मकथा तेनादितस्तत्र प्रकाशिता ।
तावद्यावदमात्येन गृहान्निर्वासितोऽस्म्यहम् ॥ ५५ ॥
अत्रान्तरे कृतालीककोपा राजसुताऽवदत् ।
अमुं गृह्णीत गृह्णीत रे रे मिथ्याभिभाषिणम् ॥ ५६ ॥
इत्युक्ते पत्तयस्तस्यास्तद्ग्रहार्थं समुद्यताः ।
तयैव वारिताः शीघ्रं स चानीतो गृहान्तरे ॥ ५७ ॥
अथैनमासनेऽध्यास्य सिंहमूचे नृपात्मजा ।
अयि येनाहमूढाऽस्मि स एवायं प्रियो मम ॥ ५८ ॥

किमत्र युज्यते कर्त्तुमित्युक्तः सोऽपि चाब्रवीत् ।
अयं तव भवेद्भर्त्ता[1] तदा सेव्योऽप्यशङ्कितम् ॥ ५८ ॥
सोचे सिंहं तवाद्यापि चित्ते यद्यस्ति संशयः ।
ततोऽस्य मन्दिरे गत्वा स्थालादीनि विलोकय[2] ॥ ६० ॥
तद्विधातुमथो सिंहो धनदत्तगृहं ययौ ।
सोऽग्रे छात्रमुखात् पुत्रापायं श्रुत्वाऽऽकुलोऽभवत् ॥ ६१ ॥
पुत्रस्य गौरवोदन्तमाख्यायैतेन बोधितः ।
दर्शयामास च स्थालादीनि तद्गणितोऽस्य सः ॥ ६२ ॥
वध्वाः स्वरूपकथनेनाह्लाद्य श्रेष्ठिनं ततः ।
सिंहः पुना राजपुत्र्याः समीपं समुपाययौ ॥ ६३ ॥
सिंहेनानुमता साऽथ कृत्वा सौविषमुद्गटम् ।
बभूव वल्लभा तस्य मङ्गलस्य महात्मनः ॥ ६४ ॥
ययौ च श्रेष्ठिनो वेश्म तत् युग्मं पार्थिवोऽपि तत् ।
आकार्य सर्ववृत्तान्तं पृष्ट्वा श्रुत्वा विसिस्मिये ॥ ६५ ॥
ततस्तत्रैव प्रासादे गत्वा राजाज्ञया पुनः ।
समं त्रैलोक्यसुन्दर्या विललास स मङ्गलः ॥ ६६ ॥
सुन्दर्या प्रेषितः सोऽथ सिंहः सबलवाहनः ।
लात्वा पुरुषवेषं तं ययौ चम्पापुरीं पुनः ॥ ६७ ॥
अमुना सर्ववृत्तान्ते कथिते जगतीपतिः ।
हृष्टोऽभाषिष्ट वत्साया अहो मे मतिकौशलम् ॥ ६८ ॥

(१) ख ग ङ छ अयं हि तव चेद्भर्त्ता ।
(२) ङ च गवेषय ।

अहो कुधीरमात्यस्य पापकर्मविधायिनः ।
येनादोषाऽपि मत्पुत्री सदोषा विहिता कथम् ॥ ६९ ॥
सिंहं पुनरपि प्रेष्योज्जयिन्यां निजनन्दिनीम् ।
सकान्तां स समानाय्य सच्चक्रे च यथाविधि ॥ ७० ॥
अमात्यं धारयित्वा तं मार्यमाणं महीभुजा ।
मङ्गलो मोचयामास गाढाभ्यर्थनया नृपात् ॥ ७१ ॥
जामातुरुपरोधेन मया मुक्तोऽसि पाप रे ।
इति विब्रुवता राज्ञा सोऽथ निर्वासितः पुरात् ॥ ७२ ॥
अपुत्रः सोऽथ भूपालो मेने जामातरं सुतम् ।
तत्रैवानाययामास तन्मातापितरावपि ॥ ७३ ॥
अन्येद्युर्मल्लिमामन्त्र्य संमत्योत्सवपूर्वकम् ।
मङ्गलकलसं राज्ये सुधीः स्थापयति स्म सः ॥ ७४ ॥
यशोभद्राभिधानानां सूरीणां चरणान्तिके ।
सुरसुन्दरभूपालः परिव्रज्यामुपाददे ॥ ७५ ॥
राज्ये संस्थापितः कोऽपि वणिग्जातिरितीर्ष्यया ।
प्रत्यन्तपार्थिवा राज्यं हर्तुं तस्योपतस्थिरे ॥ ७६ ॥
सेनया चतुरङ्गिण्या महितेन महौजसा ।
दृढपुण्यप्रभावेन जिताः सर्वेऽपि तेन ते ॥ ७७ ॥
शान्तामित्रस्य तस्याथ राज्यं पालयतः सतः ।
पत्न्यां त्रैलोक्यसुन्दर्यां सुतोऽभूज्जयशेखरः ७८ ॥
स च राजा निजे देशे जिनचैत्यान्यनेकशः ।
जिनार्चारथयात्राद्युत्सवादिधर्ममकारयत् ॥ ७९ ॥

अन्यदोद्यानमायातं जयसिंहाभिधं गुरुम् ।
गत्वा ववन्दे भावेन सकलत्रः सभूपतिः ॥ ८० ॥
पप्रच्छ च यथा केन कर्मणा भगवन्मया ।
प्राप्ता विडम्बनोद्दाहे देव्या प्राप्तं च दूषणम् ॥ ८१ ॥
सूरिरूचेऽथ भरते चेत्रेऽत्रैवास्ति पत्तनम् ।
क्षितिप्रतिष्ठितं नाम धनधान्यसमृद्धिमत् ॥ ८२ ॥
आसीत्तत्र सोमचन्द्राभिधानः कुलपुत्रकः ।
श्रीदेवी च तद्भार्याऽभूत् तौ मिथः प्रीतिशालिनौ ॥ ८३ ॥
सोमचन्द्रः प्रकृत्यामार्दवार्जवादिगुणान्वितः ।
मान्यः समस्तलोकानां तस्य भार्या च तादृशी ॥ ८४ ॥
इतस्तत्रैव नगरे जिनदेवाभिधः सुधीः ।
श्रावकोऽभूत्समं तेन तस्य मैत्री निरन्तरा ॥ ८५ ॥
जिनदेवो धनाकाङ्क्षी धने सत्यपि सोऽन्यदा ।
देशान्तरं गन्तुकामो निजं मित्रमभाषत ॥ ८६ ॥
धनायाहं गमिष्यामि मयि तत्र गते त्वया ।
मामकीनं धनं सप्तक्षेत्र्यां वाप्यं यथाविधि ॥ ८७ ॥
तत्रापि तस्य पुण्यस्य षष्ठांशो भवतादिति ।
दीनाराणां सहस्राणि दशतस्यार्पयत्करे ॥ ८८ ॥
गते देशान्तरे तस्मिन् सोमचन्द्रोऽथ तत्सुहृत् ।
व्ययति स्म यथास्थानं तद्द्रव्यं शुद्धचेतसा ॥ ८९ ॥
आत्मीयमपि तस्यानुमार्गणायं व्यधाद्धनम् ।
तज्ज्ञात्वा तस्य भार्याऽपि धर्मं भेजेऽनुमोदनात् ॥ ९० ॥

तस्मिन्नेव पुरे तस्याः सखी भद्राऽभिधाऽभवत् ।
नन्दस्य श्रेष्ठिनः पुत्री देवदत्तस्य गेहिनी ॥ ९१ ॥
देवदत्तः स कालेन कर्मदोषेण केनचित् ।
कुष्ठी जज्ञे ततो भद्रा तत्प्रिया विषसाद सा ॥ ९२ ॥
पुरःसख्यास्तयाऽन्येद्युस्तत्स्वरूपं निवेदितम् ।
तया च हासपरया भणिता सा ससंभ्रमम् ॥ ९३ ॥
हले त्वत्सङ्गदोषेण कुष्ठी जज्ञे पतिस्तव ।
ममापि दृष्टिं मागास्त्वमतोऽपसर दूरतः ॥ ९४ ॥
सा तेन वचसा दूना तस्थौ श्याममुखी क्षणम् ।
हास्यमेतदिति प्रोच्य तयैवाह्लादिता ततः ॥ ९५ ॥
स सोमचन्द्रः श्रीदेव्या तया सार्द्धं च भार्यया ।
साधुसंसर्गतः प्राप्तं श्राद्धधर्ममपालयत् ॥ ९६ ॥
अन्ते समाधिना मृत्वा सौधर्मे त्रिदशाविमौ ।
दम्पती समजायेतां पञ्चपल्योपमस्थितौ ॥ ९७ ॥
सौधर्मात्सोमचन्द्रात्मा च्युत्वाऽभूत् भूपतिर्भवान् ।
जीवश्च्युत्वा च श्रीदेव्या जज्ञे त्रैलोक्यसुन्दरी ॥ ९८ ॥
परद्रव्येण यत्पुण्यं भवतोपार्जितं तदा ।
तदेषा भाटकेनैव परिणीता नृपात्मजा ॥ ९९ ॥
हास्येनापि वयस्यायै यद्दत्तमनया पुरा ।
तदेतस्यामिह भवे कलङ्कः समभूद् ध्रुवम् ॥ ३०० ॥
तदाकर्ण्य विरक्तौ तौ दत्त्वा राज्यं स्वसूनवे ।
राजा राज्ञी च प्रव्रज्यां पार्श्वे जगृहतुर्गुरोः ॥ १ ॥

क्रमेण सोऽथ राजर्षिः सर्वसिद्धान्तपारगः ।
स्थापितो गुरुणा सूरिपदे परिकरावृतः ॥ २ ॥
त्रैलोक्यसुन्दरी साध्वी स्थापिता च प्रवर्त्तिनी ।
विपद्योभौ च तावन्ते ब्रह्मलोकमुपेयतुः ॥ ३ ॥
ततश्च्युतौ मनुष्यत्वं प्राप्यानिमिषतां पुनः ।
एवं भवे तृतीये तौ प्रापतुः पदमव्ययम् ॥ ४ ॥

॥ इति मङ्गलकलशकथानकम् ॥

श्रुत्वा धर्मकथामेतां प्रतिबुद्धो महीपतिः ।
गुरोः पार्श्वे स सम्यक्त्वं श्राद्धधर्ममुपाददे ॥ ५ ॥
विजहारान्यतः सूरी श्रीषेणनृपतिः पुनः ।
राज्यं तज्जैनधर्मं च पालयामास यत्नतः ॥ ६ ॥
राज्ञ एवोपदेशेन तत्प्रिया साऽभिनन्दिता ।
भेजे धर्मं विशेषेण भद्रकत्वं तथाऽपरे ॥ ७ ॥
इतश्च बलभूपेन कौशाम्बीस्वामिनाऽन्यदा ।
श्रीमतीकुक्षिसम्भूता श्रीकान्ता तनया निजा ॥ ८ ॥
श्रीषेणतनयस्येन्दुषेणस्यार्थे स्वयंवरा ।
प्रेषिता नगरे तत्र परिवारसमन्विता ॥ ९ ॥ ( युग्मम् )
रूपातिशयसम्पन्नां तां दृष्ट्वा नवयौवनाम् ।
उभावपि परिणेतुकामौ तौ नृपनन्दनौ ॥ १० ॥
अयुध्येतां मिथो देवरमणोद्यानमध्यगौ ।
सन्नद्धगाढकवचौ वन्येभाविव दारुणौ ॥ ११ ॥ ( युग्मम् )

स श्रीषेणनृपः स्वल्पकषायः स्वच्छमानसः ।
जिनोक्त्या भावितोऽत्यन्तं क्षमासारः प्रियंवदः ॥ १२ ॥
वैरायमाणौ ताविस्थं निरीक्ष्य निजनन्दनौ ।
निवारयितुमनलम्भूष्णुरेवं विचिन्तयत् ॥ १३ ॥ (युग्मम्)
अहो विषयलाम्पट्यं वैचित्र्यं कर्मणामहो ।
रागद्वेषावहो ग्रत्र अहो मोहविजृम्भितम् ॥ १४ ॥
महाप्राज्ञौ महात्मानौ भूत्वाऽपि मम नन्दनौ ।
यदेतावेककामिन्याः कृते विदधतुः कलिम् ॥ १५ ॥
अनयोर्दुश्चरित्रेण लज्जमानः सभान्तरे ।
मुखं नगरमुख्यानां दर्शयिष्याम्यहं कथम् ॥ १६ ॥
तदेतस्यामवस्थायां मरणं शरणं मम ।
इत्यभिप्रायमात्मीयं देव्याः कथयति स्म सः ॥ १७ ॥
ततस्ताभ्यां सममसौ स्मृतः पञ्चनमस्कृतिः ।
विषमिश्रोत्पलाघ्राणप्रयोगेण व्यपद्यत ॥ १८ ॥
सत्यभामाऽपि तेनैव विधिना जीवितं जहौ ।
बिभ्यती कपिलस्यास्य दुष्टशीलस्य सङ्गमात् ॥ १९ ॥
जम्बूद्वीपविदेहस्यान्तर्वत्युत्तरसंज्ञिते ।
कुरुक्षेत्रे ऽभवञ्जीवास्ते चत्वारोऽपि युग्मिनः ॥ २० ॥
श्रीषेणाद्यप्रियाजीवावाद्यं मिथुनकं तथा ।
द्वितीयं मिथुनं सिंहनन्दितासत्यभामयोः ॥ २१ ॥
इतस्तयोरिन्दुबिन्दुषेणयोर्युध्यमानयोः ।
एकस्तत्र कुतोऽप्येत्य चारणर्षिरदोऽवदत् ॥ २२ ॥

उत्तमान्वयसंभूतौ स्वयं चरमविग्रहौ ।
कुर्वाणावीदृशं कर्म लज्जेथे किं न भो युवाम् ॥ २३ ॥
दृष्ट्वाऽममञ्जसमिदं सभार्यो युवयोः पिता ।
विषाघ्राणप्रयोगेण मरणं समवाप सः ॥ २४ ॥
ययोरुपकृतस्येह नास्ति सीमा महीतले ।
तयोः पित्रोर्विनाशाय जातौ धिग् दुःसुतौ युवाम् ॥ २५ ॥
तदियं सौहृगोपीया दामिनी वृषदामिनी ।
त्यज्यतां कामिनी स्वैरगामिनी कलहावनी ॥ २६ ॥
इति तद्वचसा बुद्धौ त्यक्तयुद्धौ शुभाशयौ ।
तौ तं नत्वा मुनिमिवमुपश्लोकयतां मुदा ॥ २७ ॥
त्वं गुरुस्त्वं पिता माता त्वं बन्धुः स्निग्ध आवयोः ।
येनावां रक्षितौ रागद्वेषोपार्जितदुर्गतेः ॥ २८ ॥
विसृज्य [6]महिलामितां तौ गतौ निजमन्दिरम् ।
पित्रादीनां प्रेतकार्यं सर्वं विदधतुस्ततः ॥ २९ ॥
दत्त्वाऽथ गोत्रिणे राज्यं पार्श्वे धर्मरुचेर्मुनेः ।
नृणां चतुःसहस्रैस्तौ सार्द्धं जगृहतुर्व्रतम् ॥ ३० ॥
पालयित्वा चिरं दीक्षां कृत्वा च विविधं तपः ।
उत्पाद्य केवलं ज्ञानं तौ कैवल्यमुपेयतुः ॥ ३१ ॥

[6] ड० वनिता ।

श्रीषेणमुख्या मिथुनद्वयी सा भुक्त्वोत्तरप्राग्भवकुरौ सुखानि ।
पश्चात्तु सौधर्ममियाय कल्पं तत्रापि पल्यत्रितयायुरासीत् ॥३३२॥

इत्याचार्यश्रीअजितप्रभसूरिविरचिते श्रीशान्ति-
नाथचरित्रे पूर्वभवत्रयवर्णनो नाम
प्रथमः प्रस्तावः ।



# द्वितीयः प्रस्तावः ।

इतश्चात्रैव वैताढ्ये उत्तरश्रेणिभूषणम् ।
रथनूपुरचक्रवालाख्यमस्ति पुरं वरम् ॥ १ ॥
विद्याधरेन्द्रो ज्वलनजटी तत्राभवद्बली ।
स्वाहा वायुसखस्येव वायुवेगा च तत्प्रिया ॥ २ ॥
तत्कुक्षिसंभवो वैरिवारोल्बणतमोरविः ।
तस्यार्ककीर्त्तिरित्यासीत्पुत्रोऽर्कस्वप्नसूचितः ॥ ३ ॥
समधीतकलः सोऽथ विनयादिगुणान्वितः[1] ।
युवराजपदेऽस्थापि पित्रा संप्राप्तयौवनः ॥ ४ ॥
पुत्री तदनुजा चन्द्रलेखास्वप्नोपसूचिता ।
आसीत् स्वयंप्रभानाम्नी [2]ख्यातन्वारहिता परम् ॥ ५ ॥
तत्राभिनन्दनजगन्नन्दनौ मुनिपुङ्गवौ ।
अन्यद्युरागतौ व्योमचारिणौ पापहारिणौ ॥ ६ ॥
कन्या स्वयंप्रभा सा तु श्रुत्वा धर्मं तदन्तिके ।
बभूव श्राविका शुद्धसामाचारी शुभाशया ॥ ७ ॥
साधू विजह्रतुस्तौ क्ष्मां कन्या सा च स्वयंप्रभा ।
प्राप्ते पर्वदिनेऽन्येद्युः प्रपेदे पौषधव्रतम् ॥ ८ ॥

(१) ङ. च -न्वितः ।
(२) च रूपातिशयशालिनी ।

तस्य पारणके जैनबिम्बमभ्यर्च्य [1]वेश्मगम् ।
तच्छेषामर्पयामास गत्वा तातस्य सन्निधौ ॥ ९ ॥
शीर्षे शेषां तयोत्सङ्गे पुत्रीमाधाय भूपतिः ।
तद्रूपवयसी वीक्ष्य चेतस्येवमचिन्तयत् ॥ १० ॥
वरप्रदानयोग्येयं संजाता मम कन्यका ।
तद्भर्त्ता कोऽनुरूपोऽस्या भविष्यति नभश्चरः ॥ ११ ॥
कुरु पारणकं तावत् पुत्रीत्युक्त्वा विसृज्य ताम् ।
आकार्य मन्त्रिणश्चात्मचिन्तितं तदजिज्ञपत् ॥ १२ ॥
उवाच सुश्रुतस्तेषु देवरत्नपुरे वरे ।
[2]मयूरग्रीवस्तत्पुत्रोऽश्वग्रीवोऽस्ति खगेश्वरः ॥ १३ ॥
भरतार्द्धमहीभर्त्ता युक्तः पुत्र्या वरो हि सः ।
बहुश्रुतोऽवदन्नैतन्न युक्तं प्रतिभाति मे ॥ १४ ॥
यतोऽयं वर्त्तते वृद्धस्तदन्यः कोऽपि रूपवान् ।
वयःशीलकुलैस्तुल्यो वरः पुत्र्याः करिष्यते ॥ १५ ॥
ततो लब्धावकाशेन प्रोचे सुमतिमन्त्रिणा ।
यथा देवोत्तरश्रेण्यां पुरी नाम प्रभङ्करा १६ ॥
तत्र मेघधनो राजा तद्भार्या मेघमालिनी ।
पुत्रो विद्युत्प्रभः पुत्री ज्योतिर्माला तयोर्वरा ॥ १७ ॥
योग्यो विद्युत्प्रभः सोऽस्या युष्मत्पुत्र्याः पतिस्तथा ।
ज्योतिर्माला कुमारस्य पत्नी भवितुमर्हति ॥ १८ ॥

(१) च वेश्मनि ।
(२) ख घ मयूरग्रीवसूनुरश्वग्रीवोऽस्ति वरखेचरः ।
ग च मयूरग्रीवसूनुरश्वग्रीवोऽस्ति खेचरेश्वर ॥

भणितं च ततोऽन्येन श्रुतसागरमन्त्रिणा ।
देवास्या युज्यते कर्त्तुं कन्यकायाः स्वयंवरः ॥ १९ ॥
श्रुत्वेदं मन्त्रणं राजा मन्त्रिणो विससर्ज तान् ।
संभिन्नश्रोतःसंज्ञं चापृच्छन्नैमित्तिकोत्तमम् ॥ २० ॥
नैमित्तिकोऽवदद्राजन् यौ पोतनपुरेशितुः ।
पुत्रौ प्रजापते राज्ञस्त्रिपृष्ठाचलसंज्ञकौ ॥ २१ ॥
तावत्र भरते विष्णुबलभद्रौ भविष्यतः ।
प्रतिविष्णुममुं चाश्वग्रीवं व्यापादयिष्यतः ॥ २२ ॥
इति साधुमुखाद्वाक्यं मया श्रुतमतः परम् ।
स्वज्ञानेनापि विज्ञाय कथयामि महीपते ॥ २३ ॥
तुभ्यं विद्याधरेशत्वं स त्रिपृष्ठः प्रदास्यति ।
एषा स्वयंप्रभा चाग्रमहिषी तस्य भाविनी ॥ २४ ॥
ततश्च [1]परितुष्टोऽसौ राजाऽभ्यर्च्य विसृज्य तम् ।
प्रेषयामास दूतं च मारीचिं पोतने पुरे ॥ २५ ॥
गत्वा नत्वाऽमुनेत्युक्तः प्रजापतिनरेश्वरः ।
यदस्माकं विभुर्विद्याधरेन्द्रो ज्वलनाभिधः ॥ २६ ॥
कन्यां स्वयंप्रभानाम्नीं त्रिपृष्ठाय सुताय ते ।
प्रभो दित्सति तेनाहं प्रेषितोऽस्मि तवान्तिकम् ॥ २७ ॥
ऊचे प्रजापतिः कार्यमेतत् बहुमतं मम ।
वलित्वाऽऽगत्य दूतोऽपि तदाचख्यौ खभूभुजे ॥ २८ ॥

[1] अ परितुष्टेन राज्ञा ।

इतोऽश्वग्रीवभूपेनाश्वबिन्दुर्दृष्टप्रत्ययः ।
पृष्टो नैमित्तिको मृत्युर्मम भावी कुतो 'न्विति ॥ २९ ॥
सोऽवदच्चण्डवेगं तं यो दूतं धर्षयिष्यति ।
शालिक्षेत्रापकर्त्तारं हनिष्यति हरिं च यः ॥ ३० ॥
स तं हन्तेति श्रुत्वा तं सत्कृत्य व्यसृजन्नृपः ।
पुत्रौ प्रजापतेः क्रूराविति लोकाद्विवेद च ॥ ३१ ॥
तेनाथ प्रेषितो राज्ञा ययौ दूतोऽश्वलद्गतिः ।
प्रजापतिनृपास्थाने भवत्प्रेक्षणनिर्भरे ॥ ३२ ॥
सद्यः प्रेक्षणरङ्गस्य भङ्गं दृष्ट्वा कुमारकौ ।
त्रिपृष्ठाचलनामानौ तस्मै चुकुपतुर्भृशम् ॥ ३३ ॥
दूतः सत्कृत्य राज्ञाऽसौ विसृष्टश्चलितश्च सः ।
त्रिपृष्ठाचलयोरग्रे कथितस्तत्पदातिभिः ॥ ३४ ॥
ताभ्यां गत्वा मुष्टिपार्ष्णिप्रहारेण निपीडितः ।
तदङ्गभङ्गाविनयं स्मरयद्भ्यां मुहुर्मुहुः ॥ ३५ ॥
श्रुत्वा प्रजापती राजा सुतयोस्तद्विचेष्टितम् ।
तं दूतं क्षमयामास सच्चक्रे च विशेषतः ॥ ३६ ॥
तद्दूतधर्षणं चारमुखेनाश्वनृपोऽशृणोत् ।
पश्चात् स चण्डवेगोऽपि तत्समीपमुपागतः ॥ ३७ ॥
ज्ञातोदन्तं नृपं ज्ञात्वा सोऽथ तस्मै यथातथम् ।
आख्याय पुनरप्यूचे देवेदं बालचेष्टितम् ॥ ३८ ॥

(१) ख भरात् ।

प्रजापतिर्नृपस्त्वाज्ञां न ते लङ्घयति क्वचित् ।
तदेतस्योपरि क्रोधो न कर्त्तव्यो मनागपि ॥ ३८ ॥
शालिक्षेत्राण्यथो तस्य वारंवारेण पार्थिवैः ।
रक्ष्यन्ते स्म मृगारातेः प्रतिवर्षमुपद्रवात् ॥ ४० ॥
तस्मिन् वर्षे च तद्रक्षामन्यदूतमुखेन सः ।
प्रजापतिमवारेऽप्यकारयत् क्रुद्धमानसः ॥ ४१ ॥
पितरं प्रतिषिध्याथ कुमारौ बलशालिनौ ।
जग्मतुस्तत्र यत्रास्ति शालिक्षेत्रप्रदेशभूः ॥ ४२ ॥
शशंसुर्विस्मितास्तेऽथ शालिगोपकपूरुषाः ।
रक्ष्यन्ते शालयो ह्येते नृपैः सबलवाहनैः ॥ ४३ ॥
युवां कावपि वर्त्तेथे नवीनौ शालिरक्षकौ ।
निःसन्नाहौ समायातौ यौ सैन्यपरिवर्जितौ ॥ ४४ ॥
ऊचे त्रिपृष्ठो भोस्तावत्स सिंहो दर्श्यतां मम ।
यथा तद्रक्षणक्लेशं सर्वथा वारयाम्यहम् ॥ ४५ ॥
ततस्तैर्दर्शितस्तस्य सिंहो गिरिगुहाशयः ।
ययौ च तद्गुहाद्वारं त्रिपृष्ठोऽपि रथस्थितः ॥ ४६ ॥
रथचीत्कारनादेन जजागार स केशरी ।
प्रसारितास्यकुहरो गुहाया निर्जगाम च ॥ ४७ ॥
पदातिं तं समालोक्य कुमारोऽपि तथाऽभवत् ।
मुमोच खड्गरत्नं च तं निरीक्ष्य निरायुधम् ॥ ४८ ॥
कुमारचेष्टितं दृष्ट्वा दध्यौ सिंहोऽपि विस्मितः ।
अहो आश्चर्यमेकं तत् यदेकोऽयमिहागतः ॥ ४८ ॥

द्वितीयं पादचारित्वं तृतीयं खड्गमोचनम् ।
तदस्य दर्शयाम्यद्यावज्ञाया: फलमात्मन: ॥ ५० ॥
इत्युत्पत्याम्बरे रोषात् पतितो मस्तकोपरि ।
प्रचिक्षेप कुमारो द्राक् करौ केशरिणो मुखे ॥ ५१ ॥
एकेन पाणिनाऽऽदाय तस्यौष्ठमपरेण तु ।
अधरं दारयामास तं ततो जीर्णपोतवत् ॥ ५२ ॥
द्विधा कृत्वा विनिच्चिप्तं पृथिव्यां तत्कलेवरम् ।
स्फुरत्तदपि रोषेण प्रोचे सारथिनांजसा ॥ ५३ ॥
नरसिंहकुमारोऽयं पशुसिंहो भवान् पुन: ।
हतोऽसि सिंह सिंहेनाऽनुशयं भो: करोषि किम् ॥ ५४ ॥
प्रीतोऽपि वचसा तेन स मृत्वा नरकं गत: ।
प्राजापत्योऽपि तच्चर्माश्वग्रीवस्यार्पयत्तदा ॥ ५५ ॥
तेनैवादिष्टतत्रस्थविद्याधरनरैरथ ।
इति चाकथयद्यस्त्वं भुङ्क्ष्वान्धो मत्प्रमादत: ॥५६॥(युग्मम्)
दृष्ट्वाऽऽकर्ण्य च [१]तद्वाजिग्रीवोऽप्येवमचिन्तयत् ।
अलंभूष्णुर्ममाप्येष दोर्बलेनामुना खलु ॥ ५७ ॥
ज्ञात्वोदन्तं च कन्याया ज्वलनात्तामयाचत ।
सोऽपि कृत्वोत्तरं किञ्चित् तत्पुंसां तमबोधयत् ॥ ५८ ॥
नीत्वा प्रच्छन्नमेतां च पुरे पोतननामनि ।
सांवत्सरोपदिष्टेन त्रिपृष्ठेनोदवाहयत् ॥ ५९ ॥

---

(१　ख ग क तद्ध्रीयं ग्रीवो- ।

हरिश्मश्रुरथामात्यः परिणीतां स्वयंप्रभाम् ।
श्रुत्वा कुतश्चित्कथयामासाश्वग्रीवभूभुजे ॥ ६० ॥
तेनायं कुपितेनैवमादिष्टो यदिहानय ।
तौ त्रिपृष्ठाचलौ बध्वा खेचरं तं च मायिनम ॥ ६१ ॥
प्रेषितश्चामुना दूतः स गत्वा पोतने पुरे ।
ज्वलनं प्रत्यभाषिष्ट पटिष्ठवचनोद्धतः ॥ ६२ ॥
ननु भोः कन्यकारत्नं ढौकय स्वामिनो मम ।
किं न जानासि रत्नानां प्रभुरेव गतिर्भवेत् ॥ ६३ ॥
ज्वलनोऽप्यब्रवीद्दूत प्रदत्ता कन्यका मया ।
त्रिपृष्ठाय तदेतस्या एष रत्नाकरोऽधुना ॥ ६४ ॥
ऊचे त्रिपृष्ठो रे दूत परिणीता मया ह्यसौ ।
इमामिच्छन् स ते स्वामी निर्विण्णो जीवितात्किम् ॥ ६५ ॥
तद्दूतवचनात् श्रुत्वाऽश्वग्रीवः क्रोधदुर्द्धरः ।
विद्याधरभटान् प्रैषीत् हन्तुं तानात्मनो द्विषः ॥ ६६ ॥
ते पोतनपुरं प्राप्ताः प्रहरन्तोऽर्यनोदिताः ।
लीलयैव जिताः सर्वे त्रिपृष्ठेन महौजसा ॥ ६७ ॥
प्रोक्ताश्चेदं यथाऽऽख्येयं स्वग्रीवस्य तस्य भोः ।
चेच्छूरोऽसि तदागच्छ रथावर्त्तेऽस्तु नौ समित् ॥ ६८ ॥
तैश्च गत्वा तथाऽऽख्याते स विद्याधरसैन्ययुक् ।
तत्राययौ त्रिपृष्ठश्च [1]सभैन्यं श्वशुरान्वये ॥ ६९ ॥

(१) ख घ ससैन्यः ।

ततोऽश्वसैन्ययोर्युद्धे जाते विद्याधरैः कृताः ।
रक्षोव्याघ्रपिशाचाद्याः हिंस्राः परविनाशकाः ॥ ७० ॥
त्रिपृष्ठसेना तद्भीता पलायिष्ट ततः स्वयम् ।
डुढौके खेचरैर्योद्धुं रथारूढोऽचलानुजः ॥ ७१ ॥
शङ्खं च पूरयामास तन्नादेन निजं बलम् ।
युद्धसज्जं पुनरभूत् परानीकं च विद्रुतम् ॥ ७२ ॥
डुढौके स्वयमश्वोऽपि योद्धुं स्यन्दनसंस्थितः ।
त्रिपृष्ठेन समं सिंहः शरभेणेव सत्वरम् ॥ ७३ ॥
*दिव्यास्त्रैर्युयुधे सोऽथ त्रिपृष्ठस्तानि लीलया ।*
सर्वाण्युच्छेदयामास तमांसीव विकर्त्तनः ॥ ७४ ॥
*ततश्च सोऽमुचच्चक्रं त्रिपृष्ठाय भयावहम् ।*
तच्च वक्षसि तुम्बेन प्राजापत्यमताडयत् ॥ ७५ ॥
स्थितं तत्रैव तद्धृत्वोपादाय तमुवाच सः ।
कृत्वा मम नमस्कारं रे [1]स्वमारं निवारय ॥ ७६ ॥
अश्वग्रीवोऽवदन्मृत्युर्वरं वैरिप्रणामतः ।
तन्मुञ्च चक्रं को वक्रं दैवं नामानुकूलयेत् ॥ ७७ ॥
ततो मुक्तं त्रिपृष्ठेन च्छित्त्वा तस्य शिरोधराम् ।
पुनरागात् त्रिपृष्ठस्य समीपेऽसौ सुदर्शनम् ॥ ७८ ॥
प्रथमो वासुदेवोऽयमुत्पन्न इति वादिनः ।
उपरिष्टात् त्रिपृष्ठस्य पुष्पवृष्टिं व्यधुः सुराः ॥ ७९ ॥

(१) ग ङ -मारिम् ।

ततोऽसौ साधयामास भरतार्द्धमहीपतीन् ।
बभ्रे कोटिशिलां वामभुजाग्रेण च छत्रवत् ॥ ८० ॥
वासुदेवाभिषेकोऽस्य चक्रे भूचरखेचरैः ।
तेन चाकारि ज्वलनजटी विद्याधराधिपः ॥ ८१ ॥
अर्ककीर्तिस्तथा ज्योतिर्माला विद्युत्प्रभस्वसा ।
बभूव गेहिनी रम्या त्रिपृष्ठस्यैव शासनात् ॥ ८२ ॥
ययौ निजपुरं सोऽथ तस्य चात्यन्तवल्लभा ।
षोडशस्त्रीसहस्राणां मुख्या साऽभूत् स्वयंप्रभा ॥ ८३ ॥
इतः श्रीषेणजीवोऽसौ च्युत्वा सौधर्मकल्पतः ।
ज्योतिर्मालाकुक्षिसरस्यवातारीन्मरालवत् ॥ ८४ ॥
दृष्टोऽमितप्रभाव्यामसूरस्वप्नोऽम्बया तदा ।
जज्ञे च समये पुत्रोऽमिततेजोऽभिधोदितः ॥ ८५ ॥
अर्ककीर्त्तिः पिता सोऽथ परिव्रज्यामुपाददे ।
अभिनन्दनाभिधानस्यानगारस्य सन्निधौ ॥ ८६ ॥
जीवोऽथ सत्यभामायाश्च्युत्वा प्रथमकल्पतः ।
ज्योतिर्मालोदरे जाताऽर्ककीर्त्तेस्तनयाऽभवत् ॥ ८७ ॥
सुताराराजनीस्वप्नदर्शनात् साऽभिधीयते ।
सुतारेति सुताराक्षी चारुताकरुणशोभिता ॥ ८८ ॥
जीवोऽभिनन्दितायाश्च स्वर्गाच्युत्वाऽऽयुषः क्षये ।
देव्यां स्वयंप्रभानाम्न्यां त्रिपृष्ठस्य सुतोऽभवत् ॥ ८९ ॥
अभिषेको महालक्ष्म्या दृष्टः स्वप्ने यदम्बया ।
तेन श्रीविजयो नाम तस्य जज्ञे मनोरमम् ॥ ९० ॥

अपरोऽपि त्रिपृष्ठस्य विष्णोरजनि नन्दनः ।
स्वयंप्रभाप्रसूतो विजयभद्रोऽभिधानतः ॥ ८१ ॥
स सिंहनन्दिताजीवः सौधर्मत्रिदिवा[1]च्युतः ।
जज्ञे ज्योतिःप्रभानाम्नी त्रिपृष्ठस्यैव नन्दिनी ॥ ८२ ॥
अकार्यत्यन्तचार्वङ्ग्याः कृते तस्याः स्वयंवरः ।
विष्णुना दूतवदनैराहूताः [2]सुमहीभुजः ॥ ८३ ॥
अथार्ककीर्त्तिनाऽमात्यः प्रेषितः [3]केशवान्तिकम् ।
स एत्य विष्णुमानम्य व्याजहार कृताञ्जलिः ॥ ८४ ॥
देव मत्स्वामिनः पुत्री सुताराऽपि निजेच्छया ।
वृणुते वरमत्रैव ममागत्य त्वदाज्ञया ॥ ८५ ॥
हृष्टोऽभाषिष्ट गोविन्दो भवत्वेवं किमत्र भोः ।
वाच्यं यदर्ककीर्त्तेश्च ममावामस्य नान्तरम् ॥ ८६ ॥
ततः पुत्रीमुपादायामिततेजःसुतान्वितः ।
तत्रायथावर्ककीर्त्तिः पूजितो विष्णुनाऽथ सः ॥ ८७ ॥
अकारयत् त्रिपृष्ठोऽथ स्वयंवरणमण्डपम् ।
[4]मञ्चाननेकशस्तत्र नानाङ्कान्यासनानि च ॥ ८८ ॥
ततस्ते पार्थिवास्तेष्वासनेषु न्यषदन् क्रमात् ।
तेषां च मध्ये तौ विष्णुबलभद्रौ निषेदतुः ॥ ८९ ॥

(१) ख, म स्रुतः ।
(२) ख, म, द -स्तु ।
(३) ग, द केशवान्तिके ।
(४) द च मञ्चान्य ।

अत्रान्तरे कृतस्नाने श्वेतवासो(१)ऽतिशोभने ।
श्वेताङ्गरागपुष्पाढ्ये विशालशिबिकास्थिते ॥ १०० ॥
चामराभ्यां वीज्यमाने देव्याविव धरागते ।
ज्योतिःप्रभासुतारे ते कन्ये तत्रेयतुः शुभे ॥ १ ॥ (युग्मम्)
शिबिकायाः समुत्तीर्य स्वयंवरमहीगते ।
ते प्रेक्षांचक्रिरे भूपाः पुराऽदृष्टाङ्गना इव ॥ २ ॥
निरीक्ष्य निखिलान् राज्ञोऽमिततेजोगलेऽक्षिपत् ।
ज्योतिःप्रभा वरमालामन्या श्रीविजयस्य तु ॥ ३ ॥
अहो साधु वृतं साधु वृतमित्युच्चकैर्जगुः ।
हृष्टचित्ता महीपाला भूचराः खेचरा अपि ॥ ४ ॥
त्रिपृष्ठश्चार्ककीर्त्तिश्च तान्सत्कृत्य विसृज्य च ।
कारयामासतुः प्रीतौ विवाहं स्वस्वकन्ययोः ॥ ५ ॥
अर्ककीर्त्तिरथो ज्योतिःप्रभामादाय स्वस्नुषाम् ।
मुक्त्वा सुतारां सस्तोऽप्याजगाम निजं पुरम् ॥ ६ ॥
विरक्तचित्तः सोऽन्येद्युर्दत्त्वा राज्यं स्वसूनवे ।
पितुर्दीक्षाप्रदस्यैव मुनेः पार्श्वेऽग्रहीद्व्रतम् ॥ ७ ॥
त्रिपृष्ठे वासुदेवेऽथ परलोकं गते सति ।
सूरिः सुवर्णकुम्भाख्यः पोतनेऽन्येद्युरागयौ ॥ ८ ॥
श्रेयांसजिनशिष्यं तं परिवारसमन्वितम् ।
प्रययौ नन्तुमुद्याने बलभद्रोऽचलाभिधः ॥ ९ ॥

(१) ग ङ -शिरोभिते ।

तत्राचार्यं नमस्कृत्योपविश्य च यथास्थिति ।
शुश्राव देशनां तस्य मोहनिद्राविनाशनीम् ॥ १० ॥
पप्रच्छावसरे चैवं भगवन् विश्वविश्रुत: ।
मत्कनिष्ठो गुणैर्ज्येष्ठस्त्रिपृष्ठ: कां गतिं गत: ॥ ११ ॥
सूरिरूचे स नृशंस: पञ्चेन्द्रियवधे रत: ।
महारम्भपरो मृत्वा सप्तमं नरकं ययौ ॥ १२ ॥
तच्छ्रुत्वा विललापैवमचल: स्नेहमोहित: ।
हा विश्ववीर हा धीर किं तेऽभूद्गतिरीदृशी ॥ १३ ॥
गुरुणोक्तं मा विषीद शृणु पूर्वजिनोदितम् ।
यदस्य चरमो जीवो भविताऽत्र जिनेश्वर: ॥ १४ ॥
तत: श्रीविजयं राज्ये यौवराज्येऽपरं सुतम् ।
निवेश्य बलभद्रोऽस्य गुरो: पार्श्वेऽग्रहीद्व्रतम् ॥ १५ ॥
राज्ञ: श्रीविजयस्याथ राज्यं पालयत: सत: ।
सभास्थस्यान्यदाऽऽगत्य प्रतीहारो व्यजिज्ञपत् ॥ १६ ॥
प्रभो त्वन्मन्दिरद्वारे त्वद्दर्शनसमुत्सुक: ।
अस्ति नैमित्तिको नाम स आयातु प्रयातु वा ॥ १७ ॥
ततो राज्ञाऽनुमत्याऽसौ तेनानीत: सभान्तरे ।
दत्त्वाऽऽशीर्वचनं तस्मै यथासनमुपाविशत् ॥ १८ ॥
राजा प्रोवाच ज्ञानेन यत्पश्यसि शुभाशुभम् ।
तत्त्वं ब्रूहि निमित्तज्ञ करे यत्तेऽस्ति पुस्तिका ॥ १९ ॥
सोऽवदद्देव पश्यामि यदहं निजब्रह्मणा ।
तदल्पमपि नो शक्यं कथ्यते तु त्वदाज्ञया ॥ २० ॥

यदितः सप्तमे घस्रे पोतनाधिपतेर्ननु ।
निपतिष्यत्यचिरांशुः शीर्षोपरि न संशयः ॥ २१ ॥
तच्छ्रुत्वा परिषद्व्याहतेवाभूत्सुदुःखिता ।
भणितश्च कुमारेण गाढकोपपरेण सः ॥ २२ ॥
पतिष्यति यदा विद्युत् रे पोतनपुरेशितुः ।
पतिष्यति तदा शीर्षे त्वदीये किं नु दुर्मते ॥ २३ ॥
नैमित्तिकोऽवदन्मह्यं त्वं कुप्यसि कुमार किम् ।
यदत्र दृष्टं (१)संज्ञाने भवेत्तज्जातु नान्यथा ॥ २४ ॥
वस्त्राभरणरत्नानां वृष्टिर्मम भविष्यति ।
राज्ञा प्रोचे त्वया ह्येतन्निमित्तं शिक्षितं कुतः ॥ २५ ॥
सोऽब्रवीद्बलदेवस्य दीक्षाकाले मयाऽपि हि ।
प्रव्रज्या प्रतिपन्नाऽऽमौक्तिकयत्कालं च पालिता ॥ २६ ॥
अधीतं च तदा शास्त्रमेत(२)द्येन भणाम्यहम् ।
सर्वज्ञशासनमृते सम्यग् ज्ञानं न विद्यते ॥ २७ ॥
पश्चाच्च विषयासक्तोऽभूवं राजन् पुनर्गृही ।
धनाशयेहागतोऽस्मि कृतदारपरिग्रहः ॥ २८ ॥
ज्ञात्वा सत्यं निमित्तं तत् राजलोकोऽखिलस्तदा ।
स्वस्वामिरक्षणोपायचिन्तया व्याकुलोऽभवत ॥ २९ ॥
तत्रैको न्यगदन्मन्त्री यत् स्वामी मम वासरान् ।
यानारूढः समुद्रान्तर्ध्रियतेऽतिप्रयत्नतः ॥ ३० ॥
द्वितीयः स्माह पानीये विद्युद्यद्यपि न स्फुरेत् ।

(१) ङ. मज्जस्थाने । (२) ख घ. च दृष्टं ।

तथाऽपि यानपात्रे तां पतन्तीं को निवारयेत् ॥ ३१ ॥
तस्माद्वैताढ्यशैलस्यातिगूढे कन्दरागृहे ।
प्रक्षिप्य रक्ष्यते स्वामी विद्युत्पातभयात्किल ॥ ३२ ॥
तृतीयोऽप्यवदन्नायमुपायोऽपि शुभावहः ।
प्रत्युतापायहेतुः स्यात् दृष्टान्तोऽत्र निशम्यताम् ॥ ३३ ॥
बभूव विजयपुरे रुद्रसोमाभिधो द्विजः ।
तद्भार्या ज्वलनशिखा शिखी नाम्ना तयोः सुतः ॥ ३४ ॥
तस्मिंश्च नगरे कश्चित् राक्षसो मांसलोलुपः ।
भूरि मानुषरूपाणि मारयामास प्रत्यहम् ॥ ३५ ॥
एकैकं मानुषं तेऽहं दास्याम्येवं वधीः स्म मा ।
सह तेन व्यवस्थेति कृता तत्पुरभूभुजा ॥ ३६ ॥
चक्रे च सर्वपौराणां नामान्तर्गतगोलकान् ।
तन्मध्यान्नित्यमेकैकमाकृष्याख्यां निराक्ष्यते ॥ ३७ ॥
यस्मिन् दिने च यन्नाम दृश्यते तत्र निर्गतम् ।
स तस्मै दीयते तस्य शेषरक्षाविधित्सया ॥ ३८ ॥
अन्येद्युर्द्विजपुत्रस्य तस्य नाम विनिर्ययौ ।
तच्छ्रुत्वा जननी तस्याक्रन्दं चक्रे सुदुःखिता ॥ ३९ ॥
तस्याः क्रन्दितमाकर्ण्य तत्रासन्नगृहस्थितैः ।
भूतैः माऽभाणि सदयैः खेदं हे अम्ब मा कृथाः ॥ ४० ॥
भविष्यति यदा दत्तो [1]राक्षमाय सुतस्तव ।
आनेष्यामस्तदा हत्वा तमवश्यं तवान्तिकम् ॥ ४१ ॥

(१) ग ङ राक्षसस्य ।

इत्युक्ता मुदिता साऽभूत् तत्पुत्रः सोऽथ भूभुजा ।
प्रदत्तो रक्षसे तस्माद्भूतैरपि¹ हृतश्च तैः ॥ ४२ ॥
समर्पितश्च तस्मात्तुस्तया तन्मृत्युभीतया ।
स पर्वतगुहामध्ये क्षेपित्वा पिदधे तथा ॥ ४३ ॥
तत्राप्यजगरेणायं तत्क्षणेन गिलितो निशि ।
न शक्यमन्यथा कर्तुं कर्म केनापि देहिनाम् ॥ ४४ ॥
तस्मादवश्यंभावी हि योऽसौ भावो भविष्यति ।
किन्तु दुरितोपशान्त्यै करिष्यामस्तपो वयम् ॥ ४५ ॥
सन्त्रावादीच्चतुर्थोऽथ सत्यमेतेन भाषितम् ।
किन्तु यद्वर्त्तते चित्ते मम तत्कथयामि वः ॥ ४६ ॥
पोतनाधिपतेर्मूर्ध्नि विद्युत्पातोऽमुनोदितः ।
नैमित्तिकेन न पुना राज्ञः श्रीविजयस्य भोः ॥ ४७ ॥
ततः सप्त दिनान्यत्रापरः स्वामी विधीयते ।
नैमित्तिकोऽपि तद्वाक्यं प्रशंसत्साधु साध्विति ॥ ४८ ॥
उवाच चास्य कार्यस्य कथनार्थमिहागमम् ।
इदं च क्रियतां किन्तु किमन्यैर्दुर्विचिन्तितैः ॥ ४९ ॥
राजा जिनालयस्थास्तपोनियमतत्परः ।
तिष्ठत्वेष यतो ह्यापन्नक्रामति सुमहत्यपि ॥ ५० ॥
राज्ञोचे यस्य कस्यैव स्वामित्वं हि विधास्यते ।
सोऽपि यास्यति पञ्चत्वं तदेवं क्रियते कथम् ॥ ५१ ॥

¹ ग -पहृतश्च ।

ऊचुश्च मन्त्रिण: स्वामिन् यद्येतत्संमतं तव ।
तदाभिषेको यक्षस्य प्रतिमाया विधास्यते ॥ ५२ ॥
चेद्दैवतानुभावेन न स्यादापत्ततो वरम् ।
नो चेत्काष्ठमयी यक्षप्रतिमैव विनश्यति ॥ ५३ ॥
राजाऽथ युक्तमित्युक्त्वा गत्वा च जिनमन्दिरे ।
सर्वान्त:पुरसंयुक्त: प्रपेदे पौषधव्रतम् ॥ ५४ ॥
संस्तारकनिषण्णश्च तपोनियमसंयमै: ।
पूतात्मा मुनिवत्तस्थौ नमस्कारपरायण: ॥ ५५ ॥
अन्ये च मन्त्रिसामन्तप्रमुखा: भूपते: पटे ।
निवेश्य यक्षप्रतिमां तस्थुस्तस्या: समीपगा: ॥ ५६ ॥
तत: सप्तमे घस्रेऽब्दै: क्षणाद् व्याप्तं नभस्तलम् ।
ववर्ष च घनो गर्जारवव्याप्तदिगन्तर: ॥ ५७ ॥
मुहुर्विद्योतमानोऽथ विद्युद्दण्डस्तथाऽपतत् ।
तस्मिन्नेव यक्षबिम्बे निर्भाग्ये यमदण्डवत् ॥ ५८ ॥
तत्रोपसर्गे तेनैव विधिना प्रलयं गते ।
नैमित्तिकगिरा राजा पुनरागान्निजं गृहम् ॥ ५९ ॥
सर्वान्त:पुरनारीभिर्हृष्टचित्ताभिरर्चित: ।
वस्त्रालङ्कारस्तोमै: स नैमित्तिकपुङ्गव: ॥ ६० ॥
राज्ञाऽपि भूरि द्रव्यणार्चितो विससृजे च स: ।
यक्षस्य प्रतिमा रत्नमयी नव्या च कारिता ॥ ६१ ॥
पूजा च जिनबिम्बानां श्रेय:सन्ततिकारिणी ।
राज्ये पुनर्जन्मनीव स्वस्याकारि तथोत्सव: ॥ ६२ ॥

सोऽथ श्रीविजयो राजा समं देव्या सुतारया ।
ययौ क्रीडार्थमन्येद्युर्वनं ज्योतिर्वनाभिधम् ॥ ६३ ॥
तत्र भर्त्रा सहाद्रीणां छायावत् सुतलेषु सा ।
विहरन्ती ददर्शैकं सुतारैणं मनोहरम् ॥ ६४ ॥
कुरङ्गं स्वर्णवर्णाङ्गं तं विलोक्य सुलोचनम् ।
सोचे स्वपतिमानीय नाथैनं त्वं समार्पय ॥ ६५ ॥
तद्ग्रहार्थं स्वयं राजा स्वप्रियास्नेहमोहितः ।
दधावे सोऽपि वेगेनोत्पत्येयाय नभस्तलम् ॥ ६६ ॥
अत्रान्तरेऽस्य प्रियया दष्टया कुक्कुटाहिना ।
एह्येहि लघु हे नाथेति पूत्कृते गुरुस्वरम् ॥ ६७ ॥
तदाकर्ण्य झटित्येव विनिवृत्तो महीपतिः ।
ददर्शेनां विलपन्तीं विषवेदनयाऽर्दिताम ॥ ६८ ॥
ततः प्रयुक्ता वेगेन मन्त्रतन्त्रादिका क्रिया ।
साऽप्यभून्निष्फला तत्र चिप्तं बीजमिवोषरे ॥ ६९ ॥
क्षणान्तरेण सा देवी म्लानास्या मीलितेक्षणा ।
पश्यतोऽपि महीभर्तुर्बभूव गतजीविता ॥ ७० ॥
ततो मुमूर्च्छ भूपालः पपात च महीतले ।
कथञ्चिल्लब्धसंज्ञः सन् स एवं विललाप च ॥ ७१ ॥
हा गीर्वाणप्रियाकारे महोदारे विवेकिनि ।
हा सुतारे गुणाधारे प्रीतिसारे क्व तिष्ठसि ॥ ७२ ॥
एवं विलप्य बहुधा राजाऽभूत्मरणोद्यतः ।
वृत्तान्तं ज्ञापितश्चासुं राजलोकः पदातिभिः ॥ ७३ ॥

राज्ञः स्वयंप्रभा माता भ्राता च विजयाह्वयः ।
तच्छ्रुत्वा दुःखितौ गाढं यावदेतौ बभूवतुः ॥ ७४ ॥
नभोमार्गेण तत्रैत्य तावदेको नरोऽवदत् ।
अलं देवि विषादेन शृणु वार्त्तां स्वयंप्रभे ॥ ७५ ॥
रथनूपुरनाथेन पूजितोऽमिततेजसा ।
संभिन्नश्रोता मत्तातो नैमित्तिकवरोऽस्ति 'हि ॥ ७६ ॥
तत्पुत्रोऽहं दीपशि'खोऽन्यदौवौं तु प्रचेलतुः ।
ज्योतिर्वनं प्रति क्रीडां कर्त्तुं तावदपश्यताम् ॥ ७७ ॥
पुरश्चमरचञ्चेशाशनिघोषेण भूभुजा ।
ह्रियमाणां गतत्राणां तां सुतारां नृपप्रियाम् ॥ ७८ ॥
इत्यूचतुश्च तं दुष्ट धृष्ट दुश्चेष्ट पाप रे ।
अस्मत्स्वामिस्वसारं त्वमपहृत्य क्व यास्यसि ॥ ७९ ॥
तया च भणितावावां प्रयासेनालमत्र वाम् ।
गत्वा संबोध्यतां राजा वेतालिन्या विमोहितः ॥ ८० ॥
मर्त्तुकामस्तया सार्द्धं सुतारारूपया ततः ।
आवाभ्यां बोधितो राजा सा च दुष्टा प्रणाशिता ॥ ८१ ॥
देव्युदन्ते च विज्ञाते सोऽस्ति तत्रापणोद्यतः ।
तदाज्ञयाऽहमागां वस्तत्स्वरूपं च शंसितुम् ॥ ८२ ॥
ततः स्वयंप्रभादेव्या सत्कृतोऽसौ पुनर्ययौ ।
राज्ञः समीपं राजाऽपि ताभ्यां निन्ये स्वपत्तनं ॥ ८३ ॥

(१) ग सः ।

(२) ग -स्वसदा च तौ ।

प्रतिपत्तिं विधायाथ संपृष्टोऽमिततेजसा ।
राजा श्रीविजय: सर्वं स्ववृत्तान्तं न्यवेदयत् ॥ ८४ ॥
तच्छ्रुत्वा सोऽपि संक्रुद्धोऽशनिघोषाय सत्वरम् ।
मारीचिनामकं दूतं शिक्षां दत्त्वा विसृष्टवान् ॥ ८५ ॥
गत्वा चमरचञ्चायां स दूतस्तमभाषत ।
आनीताऽस्ति त्वयाऽज्ञानात् भगिनी स्वामिनो मम ॥८६॥
राज्ञी श्रीविजयस्याढ्यो सुतारेति सती वरा ।
अर्प्यतां साधुना शीघ्रमनर्थं माऽऽत्मन: कृथा: ॥८७॥ (युग्मम्)
उवाचाशनिघोषोऽपि सगर्वोद्धरकन्धर: ।
रे दूतार्पयितुं नाम किमानीताऽस्त्यमी मया ॥ ८८ ॥
मत्तो य: कश्चिदप्येनामनात्मज्ञो जिहीर्षति ।
दीप्ते मत्खड्गदीपेऽस्मिन् शलभत्वं स यास्यति ॥ ८९ ॥
इत्युक्त्वा याहयित्वा च कण्ठे निर्वासितोऽमुना ।
स्वस्थानमगमद्दूत(१)स्तदर्थोऽस्य शशंस च ॥ ९० ॥
तत: श्रीविजयायादात् विद्यां शस्त्रनिवारिणीम् ।
बन्धमोचनिकां चैवामिततेजोनरेश्वर: ॥ ९१ ॥
एकैकां साधयामास स सप्तदिवसै: पृथक् ।
सिद्धविद्यस्ततश्चारिविजयाय चचाल स: ॥ ९२ ॥
कुमारा रश्मिवेगाद्या: सुता अमिततेजस: ।
अनु श्रीविजयं चेलु: शतसंख्या महौजस: ॥ ९३ ॥

(१) ख म च न तदर्थस्य । ग तदार्यस्य ।

अन्यैश्च भूयः सुभटैः विद्याभुजबलोर्जितैः ।
समं श्रीविजयः प्रापाशनिघोषपुरान्तिकम् ॥ ८४ ॥
महाज्वालाभिधां विद्यां परविद्याच्छिदाकरीम् ।
ययौ साधयितुं चार्किनृपो हिमवति स्वयम् ॥ ८५ ॥
सहस्ररश्मिना ज्येष्ठपुत्रेण परिवारितः ।
तत्र मासिकभक्तेन विद्यां साधयति स्म सः ॥ ८६ ॥
इतः ससैन्यमायान्तं श्रुत्वा श्रीविजयं नृपम् ।
प्रैषीदशनिघोषः स्वान् पुत्रान् सबलवाहनान् ॥ ८७ ॥
ततः प्रववृते घोरः समरः सैन्ययोस्तयोः ।
विद्याबलवतोः स्वस्वस्वामिनोर्जयकाङ्क्षिणोः ॥ ८८ ॥
विद्याजनितमायाभिर्युद्ध्यमानं सकौतुकम् ।
नाहारयदेकमपि द्वयोर्मध्याद्बलं तयोः ॥ ८९ ॥
मासं यावत् युधं कृत्वाऽमिततेजः कुमारकैः ।
पुत्रा अशनिघोषस्य प्रौढा अपि पराजिताः ॥ २०० ॥
ततश्चाशनिघोषेऽस्मिन् युध्यमाने स्वयं रणे ।
द्रढीयांसोऽप्यभज्यन्त पुत्रास्तेऽमिततेजसः ॥ १ ॥
स्वयं श्रीविजयो राजाऽप्यढौकिष्ट रणे तदा ।
शक्यन्ते नेतरैरत्तुमिक्षवः सह दन्तिभिः ॥ २ ॥
क्रुद्धः श्रीविजयः सोऽथ खड्गेनाहत्य तं द्विषम् ।
द्विधा चक्रे ततो जाताऽशनिघोषद्वयो 'पुनः ॥ ३ ॥

साऽपि द्विधा कृता जज्ञे ऽशनिघोषचतुष्टयी ।
एवं च खण्ड्यमानोऽसौ मायया शतधाऽभवत् ॥ ४ ॥
यावच्छ्रीविजयो राजा निर्विघ्नस्तद्वधेऽभवत् ।
तावत्तत्र सिद्धविद्योऽमिततेजा स आययौ ॥ ५ ॥
अपहाय ततो मायां नश्यन्तं तद्भयेन तम् ।
दृष्ट्वाऽऽदिदेशार्किनृपो विद्यां विद्यामुखीमिति ॥ ६ ॥
दूरादप्येष पापीयानानेतव्यस्त्वया स्फुटम् ।
साऽथ तत्पृष्ठतो लग्ना ययौ सीमनगं च सः ॥ ७ ॥
तत्र श्रीवृषभस्वामिजिनमन्दिरसन्निधौ ।
उत्पन्नकेवलज्ञानं वन्द्यमानं सुरासुरैः ॥ ८ ॥
निरीक्ष्य बलदेवर्षिं स तं शरणमाश्रयत ।
देवताऽप्यमितायाख्यद् वलित्वा तं तथास्थितम् ॥९॥(युग्मम्)
देवीं सुतारामादाय त्वमागच्छेममान्तिकम् ।
इति मारीचिमाज्ञाप्य साऽथ श्रीविजयान्वितः ॥ १० ॥
सर्वसैन्ययुतो भेरीभाङ्कारैः पूरयन् दिशः ।
बलभद्रमुनिं नन्तुं तत्र सीमनगं ययौ ॥ ११ ॥ ( युग्मम् )
गत्वा जिनालये नत्वा स्तुत्वा च प्रथमं जिनम् ।
अभ्यर्णे बलदेवर्षेरजस्मतुस्तावुभावपि ॥ १२ ॥
देवीमादाय मारीचिरथागात्तत्र सत्वरम् ।
अर्पिताऽक्षतचारित्रा राज्ञः श्रीविजयस्य सा ॥ १३ ॥
उत्थायाशनिघोषोऽथ क्षमयामास तौ नृपौ ।
संमानितश्च ताभ्यां संजातास्ते गतमत्सराः ॥ १४ ॥

अत्रान्तरे केवलिना प्रारब्धा धर्मदेशना ।
कृतभव्यजनश्रोत्रसुधापूरप्रदेशना ॥ १५ ॥

*तद्यथा* —

रागद्वेषवशीभूता दुराकूतास्तनूभृतः ।
नयन्त्यनर्थकं जन्म कृत्वाऽनर्थपरम्पराम् ॥ १६ ॥
न मोक्षप्रापणे शक्ता याभ्यां विहितबन्धनाः ।
रागद्वेषावमू शत्रू यूयं त्यजत भो जनाः ॥ १७ ॥
श्रुत्वा तां देशनां सम्यक् प्रतिबुद्धा नृणां गणाः ।
केचिदाददिरे दीक्षां श्रावकत्वं तथाऽपरे ॥ १८ ॥
पप्रच्छाशनिघोषस्तं सुतारेयं मया प्रभो ।
रागोद्रेकं विना हृत्वा नीता निजगृहे कथम् ॥ १९ ॥
केवल्यूचे पूर्वभवे पुरे रत्नपुराभिधे ।
श्रीषेणनामा भूपोऽभूत् जीवोऽस्यामिततेजसः ॥ २० ॥
इत्यादि तद्भवान् सर्वान् कथयित्वाऽब्रवीत्पुनः ।
तदाऽभूः कपिलस्त्वं हि सत्यभामा च त्वत्प्रिया ॥ २१ ॥
सत्यभामा सुतारेयं संजाता कपिलस्तु सः ।
भवं भ्रान्त्वा मनुष्यत्वं कुले लब्ध्वा तपस्विनाम् ॥ २२ ॥
कृत्वा बालस्तपस्तत्र मृत्वाऽभूस्त्वं ततस्त्वया ।
जज्ञे पूर्वस्वसम्बन्धाद्राजन् रागं विनाऽप्यसौ ॥२३॥ (युग्मम्)
त्वय्यसौ विगतस्नेहा पुरातनभवेऽप्यभूत् ।
अतस्त्वमपि मन्दानुरागोऽस्यां हि प्रवर्त्तसे ॥ २४ ॥

स्वस्वपूर्वभवान् श्रुत्वाऽमिततेजोनृपादयः ।
हृष्टा ऊचुरहो नास्त्यसाध्यं किमपि ब्रह्मणः ॥ २५ ॥
पृष्टोऽथ केवली विद्याधरेणाऽमिततेजसा ।
भव्योऽहमथवाऽभव्यः प्रभो मे कथ्यतामिति ॥ २६ ॥
केवल्यूचे नवमे त्वं भवे राजन्नितो भवात् ।
भविष्यस्यत्र भरते पञ्चमः सार्वभौमराट् ॥ २७ ॥
षोडशश्च जिनेन्द्रोऽयं राजा श्रीविजयः पुनः ।
पुत्रो भूत्वा गणधरस्तवैवाद्यो भविष्यति ॥ २८ ॥
हृष्टौ श्रुत्वा ततस्तस्य पार्श्वे केवलिनो मुनेः ।
सम्यक्त्वमूलः सुश्राद्धधर्मस्ताभ्यामुपाददे ॥ २९ ॥
संस्थाप्य स्वात्मजं राज्येऽशनिघोषो विरक्तधीः ।
तस्य केवलिनः पार्श्वे प्रव्रज्यां समुपाददे ॥ ३० ॥
राज्ञः श्रीविजयस्याम्बा देवी सा च स्वयंप्रभा ।
तत्पादान्ते प्रवव्राज भूरिनारीसमन्विता ॥ ३१ ॥
अथ केवलिनं नत्वा स्वपरीवारसंयुतौ ।
स्वं स्वं स्थानं जग्मतुः श्रीविजयामिततेजसौ ॥ ३२ ॥
देवपूजागुरूपास्तितपःप्रभृतिकर्मभिः ।
द्योतयन्तौ श्रावकत्वं तौ कालमतिनिन्यतुः ॥ ३३ ॥
पुण्यात्माऽमिततेजाश्च[1] स प्रासादमकारयत् ।
पञ्चवर्णवररत्ननिर्मितं जिनमन्दिरम् ॥ ३४ ॥
अन्यदा तत्समीपेऽसौ कारिते पौषधालये ।

(१) ध म - स प्रासादान्तरकारयत् ।

आसीनो धर्ममाचष्ट विद्याधरसभान्तरे ॥ ३५ ॥
अत्रान्तरे चारणर्षिद्वितयं नभसा व्रजन् ।
सनातनजिनान्नन्तुं तं ददर्श जिनालयम् ॥ ३६ ॥
तच्चैत्यवन्दनाहेतोरवतीर्णौ ततश्च तौ ।
उपविश्यासने राज्ञा वन्दितौ भक्तिपूर्वकम् ॥ ३७ ॥
तत्रैकः साधुराचख्यौ राजन् जानासि चेत्स्वयम् ।
तथापि धर्ममाख्यातुमुचितो नस्ततः शृणु ॥ ३८ ॥
मानुष्यकादिसामग्रीं लब्ध्वा ज्ञात्वा भवस्थितिम् ।
धर्मो निरन्तरं कार्यो निरन्तरसुखार्थिभिः ॥ ३९ ॥
सनसाऽप्यन्तरं तस्य कृतं स्यात्सुखमन्तरा ।
जातं मत्स्योदराख्यस्य धनदस्येव निश्चितम् ॥ ४० ॥
पृच्छति स्म ततो राजा भक्तिभाक् रचिताञ्जलिः ।
मुने मत्स्योदरः कोऽयं कथ्यतां तत्कथा मम ॥ ४१ ॥
मुनिरूचेऽत्र भरतक्षेत्रे त्रिदशपूःसमम् ।
विख्यातमस्ति कनकपुरं नाम पुरं भुवि ॥ ४२ ॥
द्विषत्कोपानलप्रौढीकृततेजाः सुवर्णवत् ।
बभूव तत्र कनकरथो नाम्ना महीपतिः ॥ ४३ ॥
तस्याग्रमहिषी रूपसम्पदा रतिजित्वरी ।
कनकश्रीर्विनयादिगुणैर्नारीवराऽभवत् ॥ ४४ ॥
औदार्यादिगुणाधारो रत्नसारोऽभिधानतः ।
अभूत्तत्र राजमान्यः [1]श्रेष्ठी धर्मिष्ठधुर्यकः ॥ ४५ ॥

(१) ख श्रेष्ठिनां धर्मधुर्य्यकः ।

अनर्घ्यशीलरत्नाढ्या रत्नचूलेति तस्य तु ।
जज्ञे प्रिया प्रियालापा लज्जादिस्त्रीगुणान्विता ॥ ४६ ॥
अभिमानधनो धीमान् धर्मोपार्ज्जनतत्परः ।
तयोः पुत्रः कलापात्रं बभूव धनदाभिधः ॥ ४७ ॥
इतश्च तस्मिन्नगरे कितवः सिंहलाभिधः ।
रेमे कपर्दकैर्नित्यं पुरदेव्या निकेतने ॥ ४८ ॥
स द्यूतक्रीडया नित्यं तावद्देवार्जयद्धनम् ।
कदर्यभोजनं किञ्चित् यावन्मात्रेण जायते ॥ ४९ ॥
अन्यदा मन्दभाग्यत्वात् स जिगाय न किञ्चन ।
ततश्च दृष्टधीकृष्टो देवतामित्यभाषत ॥ ५० ॥
तव देवकुले नित्यं रममाणस्य मे न यत् ।
द्रव्यं सम्पद्यते तत्ते विक्रिया कटपूतने ॥ ५१ ॥
तदद्य प्रकटीभूय द्रव्यं किञ्चित्प्रयच्छ मे ।
अन्यथाऽहं करिष्यामि तवानर्थं महत्तरम् ॥ ५२ ॥
देवतोवाच रे दुष्ट त्वत्पित्रा किं त्वयाऽथवा ।
द्रव्यमस्त्यर्पितं मे यत् याचसे सहसैव तत् ॥ ५३ ॥
ततः पाषाणमुद्यम्य[1] सोऽवोचद्देहि मे धनम ।
कृताऽप्यानाय नोचेत्त्वां [2]व्यङ्गयिष्यामि निश्चितम् ॥ ५४ ॥
दृष्ट्वा च देवता नास्याकृत्यं किञ्चिन्न विद्यते ।
दत्तेनैव धनेनायं तुष्येन्नह्यन्यथा पुनः ॥ ५५ ॥

(१) स ज मत्पाश्च ।
(२) ज भङ्गयिष्यामि ।

ततो गाथामनाथं सा पत्रं तस्यार्पयत्करे ।
सोऽवदत्पत्रखण्डेन रे रण्डे किं करोम्यहम् ॥ ५६ ॥
देवतोवाच गाथेयं विक्रेतव्या त्वया खलु ।
दीनाराणां सहस्रं हि लप्स्यसे त्वं ममाज्ञया ॥ ५७ ॥
तत्पत्रं तद्गिराऽऽदाय वीथीमध्ये ययावसौ ।
इत्युवाच च गाथेयं लभ्यते गृह्यतामहो ॥ ५८ ॥
तद्दस्त्वसारमालोक्य वणिग्भिर्जातकौतुकैः ।
पृष्टो मूल्यमयाचिष्ट स दीनारसहस्रकम् ॥ ५९ ॥
तदसम्भाव्यमूल्यत्वादगृह्णति जनेऽखिले ।
श्रेष्ठिपुत्रस्य तस्याट्टे स ययौ क्रमयोगतः ॥ ६० ॥
तस्यार्पितेन तन्मूल्यमाख्यातं सोऽथ पत्रकम् ।
गृहीत्वा वाचयामास गाथां तल्लिखितामिति ॥ ६१ ॥
[1]जं किरि*विहिणा लिहियं तं चिय परिणमइ सयललोयस्स ।
इय भाविऊण† धीरा विहुरेवि न कायरा हुंति ॥ ६२ ॥

(१) यत् किल विधिना लिखितं तदेव परिणमति सकललोके ।
इति भावयित्वा धीरा विधुरेऽपि न कातरा भवन्ति ॥

* क ख घ ज ड चिय । † क ख ग घ जाणेवि णु ।

श्रीमुनिदेवसूरयः स्वकृतपद्यशान्तिनाथचरित्रे संस्कृतबद्धां इमां गाथां एवं लिलिखुः

विधिना लिखितं यत्तद्भूणां परिणमत्यलम ।
धीरा भवन्ति स्मात्वैव विधुरेऽपि न कातरा ॥
सर्ग २ श्लो० ९९०

दध्यौ धन्योऽथ गाथेयं लक्षेणापि न लभ्यते ।
दीनाराणां सहस्रेण समर्घा गृह्यते ततः ॥ ६३ ॥
तद् याचितमथो तस्मै दत्त्वा मूल्यं महामतिः ।
स्वीकृत्य पत्रकं तच्च मुहुर्मुहुरवाचयत् ॥ ६४ ॥
अत्रान्तरे पिता तस्य तत्रागात्तमभाषत ।
त्वया व्यवहृतं किञ्चित् अद्य नोवेति शंस मे ॥ ६५ ॥
प्रत्यासन्नवणिक्पुत्रैः सहासैरिति जल्पितम् ।
श्रेष्ठिंस्तव पुत्रेणाद्य व्यवहारः कृतो महान् ॥ ६६ ॥
दीनाराणां सहस्रेण यदेकाऽग्राहि गाथिका ।
वर्द्धयिष्यत्यसौ लक्ष्मीं वाणिज्यकलयाऽनया ॥ ६७ ॥
रुष्टः श्रेष्ठाप्यभाषिष्ट त्वमितो याहि दुष्ट रे ।
शून्यैव हि वरं शाला पूरिता न तु तस्करैः ॥ ६८ ॥
एवं विमाननां प्राप्तो धनदोऽपि तदाऽऽपणात् ।
उत्थाय निर्ययौ चित्ते गाथार्थं तं विचिन्तयन् ॥ ६९ ॥
पुरान्निसृत्य कौबेर्यां दिश्यासन्नवनान्तरे ।
दिनावसानसमये प्राप्तो मानधनो हि सः ॥ ७० ॥
गम्भीरं सरसं स्वच्छं सद्वृत्तं सत्त्वशोभितम् ।
दृष्टं सरोवरं तेन तत्रैकं साधुचित्तवत् ॥ ७१ ॥
तत्र स्नात्वाऽम्बु पीत्वा च न्यग्रोधस्य तरोस्तले ।
तस्यासन्ने स सुष्वाप रात्रौ तत्पत्रसंस्तरे ॥ ७२ ॥
अत्रान्तरे च तत्रागात् व्याध एको धनुर्धरः ।
हन्तुं वनचरान् जीवान् जलपानार्थमागतान् ॥ ७३ ॥

ईषन्निद्रायमाणेऽथ सचित्ते श्रेष्ठिनन्दने ।
जज्ञे चलयति स्वाङ्गं शुष्कपत्रभवो ध्वनिः ॥ ७४ ॥
अयं वनचरो जीवः कोऽपि यातीति लुब्धकः ।
विव्याधैनं शरेणांक्षौ ह्रदीवासज्जनो गिरा ॥ ७५ ॥
वेध्यं विद्धमिति व्याधस्तत्समीपमुपागमत् ।
धनदोऽपि प्रहारार्त्तो गाथामुच्चरति स्म ताम् ॥ ७६ ॥
तच्छ्रुत्वा लुब्धको दध्यौ हा मया मूढचेतसा ।
निर्विघ्नः पथिकः कोऽपि सुप्तो बाणेन ताडितः ॥ ७७ ॥
ऊचे च भद्र कुत्राङ्गे मया विद्धोऽस्यजानता ।
इत्युदित्वा तस्य पादादाचकर्ष स सायकम् ॥ ७८ ॥
पट्टबन्धं व्रणे तत्र कुर्वाणं तं न्यवारयत् ।
निजं स्थानं प्रयाहीति धनदो विससर्ज तम् ॥ ७९ ॥
निर्गच्छति व्रणाद्रक्ते जाते च रजनीक्षये ।
भारण्डपक्षिणा निन्ये स संस्थितधियाऽम्बरे ॥ ८० ॥
मुक्तोऽथ वारिधेर्मध्यद्वीपे खादितुमुद्यतः ।
जीवन्तं तं च विज्ञाय ययावुड्डीय पक्ष्यसौ ॥ ८१ ॥
उत्थाय धनदो यावद् ऐक्षताशाः समन्ततः ।
तावत्तत्राटवीं भीमामपश्यत्सानुपोज्झिताम् ॥ ८२ ॥
दध्यौ च क्व पुरं तत्स क्व चेयं भीषणाऽटवी ।
अथवा चिन्तया सेऽलं दैवचिन्ता बलीयसी ॥ ८३ ॥
क्षुत्तृष्णापीडितः सोऽथ भ्रमंस्तत्र फलाशया ।
ददर्शैकं पुरं शून्यं पतितावाससञ्चयम् ॥ ८४ ॥

दृष्ट्वा च कूपकं किञ्चित्कृच्छ्रादाकृष्य तज्जलम् ।
पीत्वा च वारयामास तृष्णामथ शरीरगाम् ॥ ८५ ॥
विधाय प्राणयात्रां च फलैः कदलिसंभवैः ।
पुरादपि ततो दूरं भीतभीतो ययावसौ ॥ ८६ ॥
अत्रान्तरे च मार्त्तण्डो निस्तेजा अस्तमीयिवान् ।
प्राप्ता मयाऽप्यवस्थेति धनदं बोधयन्निव ॥ ८७ ॥
अस्तं गते [1]दिवानाथे तमसा क्लेशितं जगत् ।
विशिष्टज्ञानविरहादज्ञानेनेव सर्पता ॥ ८८ ॥
गिरेः कस्यापि निकटे वह्निमुत्पाद्य दारुणा ।
तस्य तापेन निःशीतः स व्यतीयाय यामिनीम् ॥ ८९ ॥
प्रभातसमये वह्निप्रदेशोर्वीं ददर्श सः ।
जातां स्वर्णमयीं सद्यो दध्यौ चैवं सविस्मयः ॥ ९० ॥
नूनं सुवर्णद्वीपोऽयं यदियं ज्वलितानलात् ।
जातरूपमयी जाता सद्य एव वसुन्धरा ॥ ९१ ॥
पातयामि ततः [2]स्वर्णमिति ध्यात्वाऽमुना कृताः ।
[3]इष्टिकानां समक्षाटाः स्वर्णीभूताश्च तेऽग्निना ॥ ९२ ॥
भ्रमन्नन्यदारण्यात् निकुञ्जे कुत्रचिद्गिरेः ।
रत्नजातमयं तस्मानिनाय स्वर्णसन्निधौ ॥ ९३ ॥
एवं सुवर्णरत्नानां राशिस्तेन कृतो बहुः ।
कदल्यादिफलैः प्राणयात्रां चक्रे च सोऽन्वहम् ॥ ९४ ॥

(१) ग ङ च ज दिवाधीशे । (३) ख च ञ मृत्तिकामयम् ।
(२) ख च ञ स्वर्णं राशिस्तेन कृतो बहुः ।

*सार्थवाहः सुदत्ताख्योऽन्यदा तद्देशमाययौ ।*
*याने जलेन्धनं तस्य त्रुटितं पूर्वसञ्चितम् ॥ ९५ ॥*
दृष्ट्वा तं द्वीपमेतेन प्रेषिता निजपूरुषाः ।
जलेन्धनकृते तत्र ददृशुर्धनदं च ते ॥ ९६ ॥
कस्त्वं भो रित्यपृच्छंस्तावोचद्वनचरोऽस्मि सः ।
तैरुक्तस्तर्हि पानीयस्थानं किमपि दर्शय ॥ ९७ ॥
तेनामी दर्शितस्तेषां कूपस्तेऽपि तदन्तिके ।
ददृशुस्तत्सुवर्णादि पुरा यत्तेन सञ्चितम् ॥ ९८ ॥
कस्येदमित्यपृच्छंश्च धनदं सोऽप्युवाच तान् ।
मामकीनमिदं वित्तं स्थानं नयति यस्त्वदः ॥ ९९ ॥
यच्छामि तस्य तुर्यांशमित्युक्ते सार्थपोऽपि सः ।
तत्रागाद्धनदस्तस्य प्रणामाद्यौचितिं व्यधात् ॥३००॥(युग्मम्)
सार्थवाहस्तमालिङ्ग्य पृष्ट्वा च कुशलादिकम् ।
तज्जातरूपरत्नानां नयनं प्रतिपन्नवान् ॥ १ ॥
प्रापय्य भृत्यकैस्तान्यत्तं सर्वाण्यप्रवहणे निजे ।
गणयित्वा धनदोऽपि तानि तेषां समार्पयत् ॥ २ ॥
दृष्ट्वा बहु धनं तत्र सार्थेशश्चलिताशयः ।
आदिदेश [1]निजनरान् कूपेऽमी क्षिप्यतामिति ॥ ३ ॥
तैस्ततो धनदोऽभाणि कर्ष भोः कूपकाज्जलम् ।
वयं सम्यग्न जानीमः त्वं च तत्कृतपूर्व्यसि ॥ ४ ॥

---

(१) ख ग घ ङ त नरांस्तान् स्वान् ।

तत्कर्तुमुद्यतस्तैः स क्षिप्तः कूपे कृपोज्झितैः ।
हन्यते बन्धुरप्यर्थलुब्धैरन्यस्य का कथा ॥ ५ ॥
पर्णाञ्चितायां तन्मध्ये मेखलायां पपात सः ।
नैषदप्यङ्गजा पीडा ततोऽभूत्तस्य भाग्यतः ॥ ६ ॥
गाथां तां चिन्तयन् सोऽथ कूपपार्श्वान्यलोकयत् ।
दृष्ट्वैकदेशे विवरं तत्राविक्षच्च कौतुकात् ॥ ७ ॥
चारुसोपानपङ्क्त्याऽसौ गत्वा किञ्चिदधस्ततः ।
ऋजुनैव पथा गच्छन् पश्यंश्चित्राण्यनेकशः ॥ ८ ॥
ददर्शैकं देवकुलं तस्य मध्ये प्रभावतीम् ।
तार्क्ष्यारूढां चक्रपाणिं देवीं चक्रेश्वरीं तथा ॥ ९ ॥ (युग्मम्)
नत्वा तां परया भक्त्या शीर्षे विरचिताञ्जलिः ।
एवं विज्ञापयामास धनदो वदतां वरः ॥ १० ॥
जय श्रीऋषभस्वामिजिनशासनदेवते ।
दुष्टारिष्टहरे स्तोतुः सर्वसम्पत्करे जय ॥ ११ ॥
दिष्ट्या कष्टार्दितेनाद्य हे देवि त्वं मयेक्षिता ।
भवतां तावकीनौ तच्चरणौ शरणं मम ॥ १२ ॥
तद्भक्तिमुदिता सोचे सर्वं भव्यं भविष्यति ।
अग्रे गतस्य ते वत्स मत्तोऽप्यर्थय किञ्चन ॥ १३ ॥
सोऽवदत् मयका देवि किं न प्राप्तं महीतले ।
दृष्टे त्वद्दर्शने पुण्यरहितानां सुदुर्लभे ॥ १४ ॥
ततो महाप्रभावानि पञ्चरत्नानि देवता ।
करे तस्यार्पयामास तत्प्रभावं शशंस च ॥ १५ ॥

एकं सौभाग्यकरणं द्वितीयं श्रीनिकेतनम् ।
तृतीयं रोगहृत्सद्यश्चतुर्थं विषनाशनम् ॥ १६ ॥
इदं च पञ्चमं रत्नमापत्पर्यन्तकारकम् ।
इत्युक्त्वाऽन्तर्दधे देवी धनदोऽप्यग्रतो ययौ ॥ १७ ॥
दृष्ट्वैकत्रादरे संरोहिणीं चौषधिमुत्तमाम् ।
दीर्घां क्षुरिकया जङ्घां न्यधाद्रत्नानि तत्र च ॥ १८ ॥
संरोहिण्या महौषध्या रोहयित्वाऽथ तद्व्रणम् ।
पुरश्च गच्छन् पातालपुरमेकं ददर्श सः ॥ १९ ॥
तत्रावलोकयामास भक्ष्यभोज्यसमाकुलाः ।
मन्दिराट्टाऽऽवलीश्चित्रा मानुषैः परिवर्जिताः ॥ २० ॥
प्रदेशेऽन्यत्र सोऽद्राक्षीत् नरेन्द्रभवनं महत् ।
गवाक्षगोपुरप्रांशुप्राकारपरिशोभितम् ॥ २१ ॥
प्रविश्य कौतुकेनात्र गतः सप्तमभूमिकाम् ।
ददर्श बालिकामेकां रूपाज्जितसुराङ्गनाम् ॥ २२ ॥
तां दृष्ट्वा विस्मयापन्नं ज्ञातुकामं च तत्कथाम् ।
बभाषे कन्यका तं भोः कुतः स्थानात्त्वमागतः ॥ २३ ॥
इहागतस्य ते प्राणसंशयो भद्र वर्त्तते ।
तद् गच्छ शीघ्रमन्यत्र यावत्ते कुशलं किल ॥ २४ ॥
धनदोऽथाब्रवीत् सुभ्रु मोद्वेगं कुरु शंस मे ।
किमिदं नगरं किं वा विजनं भवती च का ॥ २५ ॥
सा तस्य धैर्यरूपाभ्यां विस्मिता पुनरब्रवीत् ।
अस्ति चेत्कौतुकं तत्त्वं शृणु सुन्दर कारणम् ॥ २६ ॥

इहास्ति भरते रम्यं नाम्ना श्रीतिलकं पुरम् ।
महेन्द्रराजो नाम्नाऽभूत्तत्र राजा पिता मम ॥ २७ ॥
अन्यदा विग्रहीतस्यान्यभूपैस्तस्य सन्निधौ ।
आगत्य व्यन्तरः कश्चित् सस्नेहं तमभाषत ॥ २८ ॥
त्वं पूर्वभवमित्रं मे तदाख्याहि करोमि किम् ।
सोऽवदत् कुरु साहाय्यं शत्रून् मम विनाशय ॥ २९ ॥
व्यन्तरोऽप्यब्रवीन्नैते शक्या हन्तुं मया सखे ।
यतो मदधिकैरेतेऽधिष्ठिता व्यन्तरैः खलु ॥ ३० ॥
करोमि किन्तु साहाय्यमित्युक्त्वा तेन मत्पिता ।
सपौरः सपरीवार इहानीतो झटित्यपि ॥ ३१ ॥
पुरं चाकारि तेनेदं पातालपुरनामकम् ।
प्रवेशनिर्गमावेककूपेनैवास्य सुन्दर ॥ ३२ ॥
रक्षार्थं कूपकस्यापि द्वितीयं विहितं पुरम् ।
ततः प्रवहणैरत्र नानावस्तुसमागमः ॥ ३३ ॥
एवं गच्छति कालेऽत्र राक्षसः कश्चिदन्यदा ।
कूपप्रवेशसोपानपङ्क्तिं भङ्क्त्वा समाययौ ॥ ३४ ॥
मांसलुब्धः स दुष्टात्मा प्रवृत्तः खादितुं जनान् ।
कियद्भिश्च दिनैश्चक्रे पुरमेतदमानुषम् ॥ ३५ ॥
बहिः पुरस्य लोकोऽपि तेनारब्धो निपातितुम् ।
स चाधिरुह्य यानेषु ययावन्यत्र कुत्रचित् ॥ ३६ ॥
एवं च विहिता तेन शून्येयं नगरद्वयी ।
एकैव रक्षिताऽहं तु परिणेतुं दुरात्मना ॥ ३७ ॥

इतो दिनात्सप्तमेऽह्न्यतीते तेन मे पुरः ।
इति प्रोचे यथा भद्रे प्रचण्डो राक्षसोऽस्म्यहम् ॥ ३८ ॥
मानुषामिषलुब्धेन मयेहागत्य मारितः ।
नगरे निखिलो लोको रक्षिता त्वं तु कारणात् ॥ ३९ ॥
सप्तमे दिवसे लग्नं शुभग्रहनिरीक्षितम् ।
तत्र त्वां परिणेष्यामि करिष्यामि स्वगेहिनीम् ॥ ४० ॥
तदद्य सप्तमदिनं समयोऽयं तदागतेः ।
यावन्नायात्यसौ तावत् याहि त्वं सुन्दराकृते ॥ ४१ ॥
धनदः स्माह मुग्धे त्वं मा भैषीः शृणु संप्रति ।
हतः स्वपापैरेवासौ मरिष्यति करेण मे ॥ ४२ ॥
सोचे तर्हि च तन्मृत्युसमयं कथयामि ते ।
पूजाकाले स विद्याया मारणीयस्त्वया खलु ॥ ४३ ॥
तस्मिंश्च समयेनासावुत्तिष्ठति न जल्पति ।
अयं च खड्गो मत्तातसत्को ग्राह्यस्त्वया तदा ॥ ४४ ॥
आगान्निशाचरः सोऽथ गृहीत्वा नृशवं करे ।
विलोक्य धनदं चाग्रे सप्रहासमदोऽवदत् ॥ ४५ ॥
अहो आश्चर्यमायातं भक्ष्यमद्य मम स्वयम् ।
इत्युदित्वाऽवज्ञयैव मुमोच मृतकं च तत् ॥ ४६ ॥
विद्यां पूजयितुं यावत् प्रवृत्तोऽसौ तदाऽमुना ।
इत्युक्तः खड्गमाकृष्य त्वां हनिष्याम्यरेऽधुना ॥ ४७ ॥
अवज्ञया हसन् सोऽथ कृतपूजो निपातितः ।
तेन खड्गेन सद्योऽपि पातयित्वा शिरो भुवि ॥ ४८ ॥

तेनैव कृतयोद्वाहसामग्र्या परिणीतवान् ।
धनदो रूपयुक्तां तां नाम्ना तिलकसुन्दरीम् ॥ ४९ ॥
भोगान् भुङ्क्त्वा तया सार्धं दिनानि कतिचित्ततः ।
तां सारवस्तु चादायाययौ तत्रैव कूपके ॥ ५० ॥
वलित्वा च समानीतं तेन वस्तु मनःप्रियम् ।
भूयश्चक्रेश्वरी मार्गे वन्दिता भक्तिपूर्वकम् ॥ ५१ ॥
आगात्प्रवहणं किञ्चित् तदा तद्द्वीपसन्निधौ ।
तस्मिंश्च कूपके तस्मान्नरा नीरार्थमाययुः ॥ ५२ ॥
रज्जुः क्षिप्ताऽथ तैस्तत्र तां धृत्वा धनदोऽवदत् ।
पतितोऽस्म्यत्र कूपे तत् मामुत्तारयतानघाः ॥ ५३ ॥
तैश्च तद्द्वदत्तस्य सार्थवाहस्य सत्वरम् ।
आख्यातं सोऽपि तत्रागात्कौतुकात्पूर्णमानसः ॥ ५४ ॥
बद्ध्वा वरत्रया कूपे प्रक्षिप्ता मञ्चिका ततः ।
तस्यामारुह्य धनदो बहिः कूपाद्विनिर्ययौ ॥ ५५ ॥
तं दृष्ट्वा सुन्दराकारं वस्त्राभरणभूषितम् ।
अतीव विस्मितः सार्थवाहः पप्रच्छ गौरवात् ॥ ५६ ॥
कोऽसि त्वं भद्र कूपेऽत्र पतितोऽस्यथवा कथम् ।
सोऽवदन्मम भार्याऽपि पतिताऽस्त्यत्र सार्थप ॥ ५७ ॥
अन्यच्च देवतादत्तं वस्तु रत्नादिकं च 'नः ।
कृष्ट्वा तत्कथयिष्यामि सर्वशुद्धिं तवात्मनः ॥ ५८ ॥

' ञ तत् ।

एवं कुर्वति तेनोक्तो विदधे सोऽपि तत्तथा ।
विसिष्मिये तु सार्थेशो दृष्ट्वा तिलकसुन्दरीम् ॥ ५८ ॥
भूयोऽपि चामुना पृष्टः शशंस धनदोऽप्यदः ।
सार्थवाह वणिक् जात्या भरतक्षेत्रवास्यहम् ॥ ६० ॥
चलितः कटाहद्वीपं प्रति यानेन सप्रियः ।
भग्नं च वारिधौ यानं ततोऽत्रागां प्रियान्वितः ॥ ६१ ॥
पतिता मत्प्रिया ह्यस्मिन् कूपे नीरेक्षणाकुला ।
अहमप्यपतं चास्याः स्नेहबद्धो भवे यथा ॥ ६२ ॥
जलान्तःपतितौ नावां तत्तीरे किन्तु भाग्यतः ।
तुष्टा ददौ च रत्नानि तत्र मे जलदेवता ॥ ६३ ॥
कथितं च तयैवं यत् यानमत्र समेष्यति ।
तत्राधिरुह्य गच्छेस्त्वं निजस्थानं सुखेन भोः ॥ ६४ ॥
कथितेयं निजा वार्त्ता सार्थवाह मया 'तव ।
त्वमप्यात्मकथां ब्रूहि यतः सख्यं प्रवर्द्धते ॥ ६५ ॥
सोऽवदद्देवदत्ताख्यो भरतादहमप्यहो ।
कटाहद्वीपमगमं चलितश्च गृहं प्रति ॥ ६६ ॥
तदेहि भद्र त्वमपि गच्छावः सममेव यत् ।
आरोपय निजं वस्तु मम याने प्रियां तथा ॥ ६७ ॥
धनदोऽप्यब्रवीदेवं कुरु सार्थपते यतः ।
षष्ठांशं ते प्रदास्यामि वस्तुनोऽस्य गृहं गतः ॥ ६८ ॥

---

१ ख घ ङ च ततः ।

धनेन किमसारेण गौरव्योसि त्वमेव मे ।
तद्दस्त्वारोपितं याने सार्थेशेनेति जल्पता ॥ ६८ ॥
मार्गे [१]चागच्छतस्तस्य सार्थेशस्य दुरात्मनः ।
चचाल चित्तं ललनां तां विलोक्य धनं तथा ॥ ७० ॥
रात्रौ [२]पुरीषव्युत्सर्गनिमित्तं मञ्चिकागतः ।
प्रक्षिप्तः सार्थवाहेन धनदोऽथ महोदधौ ॥ ७१ ॥
दूरं गतेन तेनोचे धनदोऽद्यापि नैति यत् ।
गतः शरीरचिन्तार्थं तन्नूनं पतितोऽर्णवे ॥ ७२ ॥
नरैश्चान्वेषयामास तं चिरं कैतवादसौ ।
पश्चादाश्वासयामास तत्प्रियां प्रियभाषणैः ॥ ७३ ॥
अन्यस्मिंश्च दिने तेन सोचे तिलकसुन्दरी ।
संस्थितस्त्वत्पतिर्भद्रे तत्पत्नी मे भवानघे ॥ ७४ ॥
तच्छ्रुत्वा चिन्तयामास सा चैवं बुद्धिशालिनी ।
मत्पतिर्मेऽङ्गलुब्धेन नूनं व्यापादितोऽमुना ॥ ७५ ॥
ममैष शीलविध्वंसं करिष्यति बलादपि ।
ततः कृत्वोत्तरं किञ्चित्कालक्षेपोऽत्र युज्यते ॥ ७६ ॥
विचिन्त्यैवमुवाचैवं[३] संप्राप्तस्य पुरं तव ।
अनुज्ञाता मद्भर्त्रा भविष्यामि गृहिण्यहम ॥ ७७ ॥

---

(१) ग च ड ऽत्था- ।
(२) ग च ड शरीरचिन्ताया- ।
(३) ग च ञ -चैनं ।

हृष्टः सोऽप्यनुमेने तदिति ध्यायन् यथा नृपम् ।
तोषयित्वा [1]स्वदानेन करिष्यामि समीहितम् ॥ ७८ ॥
इतः स धनदस्तेन प्रक्षिप्तो जलधेर्जले ।
पूर्वभग्नस्य [2]पोतस्य लेभे खण्डं विधेर्वशात् ॥ ७९ ॥
गाढं तदुरसाऽऽश्लिष्य क्षुभ्यमाणस्तरङ्गकैः ।
पञ्चभिर्वासरैः प्राप्तः स्वपुरासन्नकूलकम् ॥ ८० ॥
हृष्टाशयो निजपुरं पश्यन्नूर्ध्वमुखो दृशा ।
गिलितो गुरुमत्स्येन फलकेन सहैव सः ॥ ८१ ॥
दध्यौ च पतितो मत्स्यजठरे नरकोपमे ।
रे जीव देवदोषेण गाथां भावयतां ततः ॥ ८२ ॥
यद्वा पूर्वभवाचीर्णकर्मदोषेण केनचित् ।
पतन्त्यसौख्यं मय्येव च्छिद्रं जीर्णवृताविव ॥ ८३ ॥
इति ध्यात्वा स सस्मार मणिमापन्निवारकम् ।
तत्प्रभावेन मत्स्योऽसौ गृहीतस्तत्र धीवरैः ॥ ८४ ॥
स्फाटिते जठरे तस्य दृष्टोऽसौ तैः सविस्मयैः ।
प्रक्षालितश्च नीरेण कथितश्च महीपतेः ॥ ८५ ॥
राजाऽपि विस्मितमनास्तमानाय्यात्मसन्निधौ ।
पप्रच्छ किमिदं भद्राघटमानं तवाऽभवत् ॥ ८६ ॥
अयि कोऽसि कथं वा त्वं पतितोऽसि झषोदरे ।
इति सत्यं ममाख्याहि वर्त्तते कौतुकं महत् ॥ ८७ ॥

(१) ङ सुदानेन ।
(२) ग घ ङ च यानस्य ।

धनदोऽप्यवदत्तावद्वणिग्जातिमवेहि माम् ।
भग्ने याने फलहकं संप्राप्यागामिह प्रभो ॥ ८८ ॥
निरीक्ष्यमाणो नगरं मत्स्येन गिलितोऽस्म्यहम् ।
गृहीतः स तु कैवर्तैर्जठरं चास्य दारितम् ॥ ८९ ॥
दृष्टश्च तस्य मध्येऽहं ततस्तैभिः सविस्मयैः ।
भवत्पार्श्वं समानीतो राजन्निति कथा मम ॥ ९० ॥
स्वर्णचालितनीरेण स्नपितः सोऽथ भूभुजा ।
मत्स्योदराभिधानश्च स्थापितो निजसन्निधौ ॥ ९१ ॥
तत्प्रार्थितेन तेनासौ विदधे च स्थगीधरः ।
निनाय दिवसानेवं स्वस्वरूपमवेदयन् ॥ ९२ ॥
सुदत्तः सार्थवाहोऽथ तस्य पूर्वोपकारकृत् ।
वातप्रेरितपोतेन तत्रान्येद्युः समाययौ ॥ ९३ ॥
गृहीत्वा प्राभृतं सोऽपि प्रतीहारनिवेदितः ।
आययौ नृपतेः पार्श्वे निपसाद च कृतानतिः ॥ ९४ ॥
राजाऽपि वणिजस्तस्य प्रियालापं स्वयं व्यधात् ।
दापयामास ताम्बूलं स्थगीधरकरेण च ॥ ९५ ॥
विज्ञाय सोऽथ तत्तस्य दृशौ भूत्वा सुखाग्रतः ।
स सुदत्तोऽपि धनदमुपलक्षयति स्म तम् ॥ ९६ ॥
परं सोऽघटमानत्वात्किंचित्सन्देहतत्परः ।
भणितो भूभुजा यत्तेऽद्वैदानं भवतादिति ॥ ९७ ॥
महाप्रसाद इत्युक्त्वा निजस्थानं गतोऽन्यदा ।
पप्रच्छ पुरवास्तव्यं पुरुषं कश्चिदित्यसौ ॥ ९८ ॥

अयं स्थगीधरो राज्ञः किमु भद्र क्रमागतः ।
तेनापि कथितं तस्य तत् स्वरूपं यथातथम् ॥ ९९ ॥
अत्रान्तरे च मातङ्गो गौरव्यस्तस्य भूपतेः ।
आगाद् गीतरतिर्नाम्ना सार्थवाहस्य सन्निधौ ॥ ४०० ॥
ततो गातुं प्रवृत्तोऽसौ निजवृन्दसमन्वितः ।
रञ्जितः सार्थवाहोऽपि तद्गीतकलयाऽग्रया ॥ १ ॥
दानेन तोषयित्वैनमूचे भो यदि मामकम् ।
कार्यं साधयसि त्वं तत् द्रव्यं यच्छामि ते बहु ॥ २ ॥
सोऽवदत्साधयिष्यामि सर्वं कथय मे स्फुटम् ।
वशो यस्य महीपालस्ततः किं मे सुदुष्करम् ॥ ३ ॥
सार्थवाहोऽब्रवीत्तर्हि त्वयैकान्ते महीपतिः ।
एवं वाच्यो यथा मत्स्योदरोऽयं मम बान्धवः ॥ ४ ॥
अङ्गीकृतेऽथ तत्कार्ये स तस्मै प्रीतमानसः ।
सङ्घाटांश्चतुरः स्वर्णेष्टिकानां प्रददौ सुधीः ॥ ५ ॥
ययौ च नृपतेः पार्श्वं सभासीनस्य तस्य तु ।
मातङ्गोऽपि [1]समभ्येत्य पुरो गातुं प्रचक्रमे ॥ ६ ॥
तद्गीतरञ्जितो राजा स्थगीधरमवोचत ।
देहि ताम्बूलमेतस्मै गान्धर्विकवराय भोः ॥ ७ ॥
ताम्बूलं ददतस्तस्य लगित्वा कण्ठकन्दले ।
चिराद् दृष्टोऽसि हे भ्रातरिति जल्पन् रुरोद सः ॥ ८ ॥

---

(1) ग च तदाऽभ्येत्य ।

किमेतदिति भूपेन पृष्टो मत्स्योदरः सुधीः ।
इत्युपायं विचिन्त्योचे देवायं सत्यमूचिवान् ॥ ९ ॥
अस्मिंश्च नगरे पूर्वं मातङ्गोऽभूत्पिताऽऽवयोः ।
महागायन इत्युर्वीपतेः प्रणयभाजनम् ॥ १० ॥
तस्याभूतामुभे भार्ये तयोरावां सुतौ प्रभो ।
मनागनिष्टा मे माता तदनिष्टोऽप्यहं पितुः ॥ ११ ॥
सुदीर्घदर्शिना तेन निप्तानि जनकेन मे ।
जङ्घान्तः पञ्चरत्नानि तत्प्रहारश्च रोहितः ॥ १२ ॥
भणितं चेति यद्वत्स विपद्येतानि भक्षयेः ।
सर्वाङ्गेष्वपि तेनास्य [1]संनिप्तानि घनानि तु ॥ १३ ॥
ततो विदार्य जङ्घां स्वां तानि रत्नान्यदर्शयत् ।
प्रत्ययार्थं महीभर्तुर्धनदो मतिमद्वरः ॥ १४ ॥
ततो गोतरतो राजादेशाद्दङ्घा पदातिभिः ।
विदारयितुमारब्धो जजल्पैवं सदीनवाक् ॥ १५ ॥
स्वामिन्नेष न मे भ्राता किं त्विदं कर्म गर्हितम् ।
रैदानात्सार्थवाहेन पाप्मना कारितोऽस्म्यहम् ॥ १६ ॥
प्रतीतिर्यदि ते देव मद्गिरा नहि जायते ।
तदानायय तत्स्वर्णमङ्काटांस्तान्ममौकसः ॥ १७ ॥
राजाऽप्यालोकयामास मत्स्योदरमुखं पुनः ।
प्रत्यूचे पार्थिवं सोऽपि सत्यमेतदपि प्रभो ॥ १८ ॥

---

[1] ग घ ट ड त थ संन्निप्तानि तानि तु ।

पुनः प्रोवाच भूपालः परमार्थं निवेदय ।
*मत्स्योदर महाश्चर्यकारि सर्वमिदं यतः ॥ १८ ॥*
सोऽवदत्तर्हि विद्यन्ते यानेऽस्य वणिजो मम ।
सपादाष्टशती स्वर्णसङ्घाटानां महीपते ॥ २० ॥
पञ्चदश सहस्राणि रत्नानां च प्रभावताम् ।
इति विज्ञाय गोस्वामिन् यत्कर्त्तव्यं कुरुष्व तत् ॥ २१ ॥
अभिज्ञानमिदं चात्र यतः सर्वेऽपि सम्पुटाः ।
स्वनामाङ्काः कृताः सन्त्युपलक्षणकृते मया ॥ २२ ॥
भूपपृष्टेन तेनाथ तन्नामोदीरितं निजम् ।
राज्ञाऽप्यानायितास्तेऽथ सङ्घाटाः श्वपचौकसः ॥ २३ ॥
द्विधा कृतेषु तेष्वन्तर्दृष्ट्वा तां धनदाभिधाम् ।
सद्यश्चुकोप मातङ्गवर्गाय‌ाभ्यामवनीपतिः ॥ २४ ॥
हन्यमानौ च तौ मत्स्योदरेणैव विमोचितौ ।
सोऽथ कल्याणनीरेण स्नात्वा शुचिरभूत्पुनः ॥ २५ ॥
वणिग्[१]पार्श्वात् निजं वस्त्वादाय मातङ्गतोऽपि च ।
तयोः कृत्वोचितं चाभूद्धनदो धनदोपमः ॥ २६ ॥
पृष्टोऽथ भूभुजा भूयः स जगादात्मनः कथाम् ।
सत्यां यथाऽत्र वास्तव्यो देवाहं श्रेष्ठिनन्दनः ॥ २७ ॥
[२]गाथा मयैका दीनारसहस्रेणात्मसात्कृता ।
ततो निष्कासितः पित्रा ततो देशान्तरं गतः ॥ २८ ॥

(१) घ ङ ञ पार्श्वे ।
(२) घ ज मया गाथैका । ग मयैका गाथा । च मयैकगाथा ।

इत्यादि सकलां वार्तां कथयित्वाऽब्रवीन्नृपम् ।
देवाद्यापि प्रकाश्योऽहं नावश्यं कस्यचिद्यतः ॥ २९ ॥
मम वित्तकलत्रापहारकार्यपरोऽपि चेत् ।
सार्थवाह इहायाति ततो भव्यं भवेत्प्रभो ॥ ३० ॥
सार्थेशो देवदत्तोऽपि तत्रान्येद्युः समाययौ ।
सार्द्धं तिलकसुन्दर्या स आगाच्च नृपान्तिकम् ॥ ३१ ॥
ढौकयित्वा रत्नजातमुपविष्टो महीभुजा ।
अयं मत्स्योदरप्रोक्तो वणिगित्युपलक्षितः ॥ ३२ ॥
मत्स्योदरोऽपि तं दृष्ट्वा तथा तिलकसुन्दरीम् ।
जिज्ञासुस्तदभिप्रायं गोपिता[1]ज्ञोऽभवत् तदा ॥ ३३ ॥
आललापाथ भूपालः सार्थवाहं ससंभ्रमः ।
भद्र त्वं कुत आयातः का चेयं बालिका वरा ॥ ३४ ॥
सोऽवोचत कटाहाख्यद्वीपादत्रागतोऽस्म्यहम् ।
इयं च जलधेरन्तर्द्वीपे लब्धा मयैकका ॥ ३५ ॥
सुवस्त्राहारताम्बूलालङ्कारैः सत्कृताऽपि हि ।
राजंस्तवानुमत्यैव भवेन्मम गृहिण्यसौ ॥ ३६ ॥
राजा प्रोवाच हे सुभ्रु किं तेऽयं रोचते वरः ।
अथवा त्वामयं कामी बलादेव रिरंसते ॥ ३७ ॥
साऽवादीत्कोऽस्य पापस्य गृह्णीयादभिधामपि ।
गुणरत्ननिधिः[2] सिन्धौ प्रक्षिप्तो येन मे पतिः ॥ ३८ ॥

(१) ग घ ङ च ज -ज्ञोऽभवत् क्षणात् ।
(२) ग घ ङ च ज -र्षनि ।

अनेन प्रार्थिता स्वामिन्नकार्षमिदमुत्तरम् ।
यतो राजप्रदत्ताऽहं भविष्यामि प्रिया तव ॥ ३९ ॥
निस्त्राणया मयैतस्मात् शीलमेवं हि रक्षितम् ।
अधुना तु करिष्यामि प्रवेशं ज्वलितानले ॥ ४० ॥
स्त्रीणामवश्यं मार्त्तो स्याद्भर्त्तुः सङ्गे हुताशनः ।
स एव शरणं तासां विरहे तस्य युज्यते ॥ ४१ ॥
भणिता भूभुजा सैवं मा कार्षीर्मृत्युसाहसम् ।
यतोऽहं दर्शयिष्यामि परिणीतपतिस्तव ॥ ४२ ॥
सोचे नरेन्द्र नो कर्त्तुं परिहासस्तवोचितः ।
क्वास्ति मे स धवो यो हि प्रक्षिप्तोऽगाधवारिधौ ॥ ४३ ॥
ततस्ताम्बूलदानार्थमुत्थाप्य धनदं नृपः ।
प्रोचे भद्रे स्वभर्त्तारमम् दृष्ट्वा विलोकय ॥ ४४ ॥
तमालोक्योपलक्ष्यापि साऽसंभाव्यसमागमम् ।
यावदद्यापि नो हर्षप्रकर्षं तादृशं दधौ ॥ ४५ ॥
अवदद्धनदस्तावद्देवास्याः स पतिः स्फुटम् ।
यः शून्यागारसंस्थायाः कुतोऽप्यागादतर्कितः ॥ ४६ ॥
अनयैवार्पितो यस्य खड्गो राक्षसघातकृत् ।
राक्षसश्च हतो येनोदूढयं चानुरागिणी ॥ ४७ ॥
इत्यादि सर्ववृत्तान्ते कथिते सति मूलतः ।
सूर्यालोकेऽब्जिनीवाभूत्सा सद्यो विकसन्मुखी ॥ ४८ ॥
जाता मत्स्योदरस्यैषा पुनर्जाया नृपाज्ञया ।
मार्यमाणश्च सार्थेशो नृपात्तेनैव मोचितः ॥ ४९ ॥

अनन्यसदृशं सर्वमलङ्कारादि वस्तु तत् ।
धनदो वणिजाऽऽनीतं दर्शयामास भूपतेः ॥ ५० ॥
कृतान्यकृत्यः सोऽन्येद्युरनुज्ञाप्य धराधिपम् ।
भूयसा परिवारेण प्रययौ पितृमन्दिरम् ॥ ५१ ॥
राजमान्योऽयमित्यस्यामनादिस्वागतक्रियाम् ।
विधाय व्याजहारैवं रत्नसारोऽप्युदारधीः ॥ ५२ ॥
धन्योऽहं यस्य गेहे त्वमागमो नृपवल्लभः ।
तद्ब्रूहि वस्तु येनार्थः सर्वस्वमपि ते मम ॥ ५३ ॥
धनदोऽप्यवदत्तात सत्यमेतद्ब्रवीषि यत् ।
परं पृच्छाम्यहं किञ्चित्कारणेन गरीयसा ॥ ५४ ॥
यस्तेऽभूद्धनदो नाम तनयः क्व नु सोऽधुना ।
शुद्धिं जानासि तस्य त्वं क्वाप्यसौ विद्यते न वा ॥ ५५ ॥
वचः श्रुत्वाऽस्य साकूतं सुताकारं च वीक्ष्य तम् ।
सुतोदन्तमथ श्रेष्ठी सवितर्को न्यवेदयत् ॥ ५६ ॥
गाथा सुतेन दीनारसहस्रेणाददे मम ।
तदर्थं परुषं किञ्चिद्वचनं भणितो मया ॥ ५७ ॥
अभिमानवशात्क्वापि गृहान्निःसृत्य सोऽगमत् ।
गतस्याभूद्बहुः कालः शुद्धिं जानामि नास्य तत् ॥ ५८ ॥
आकृत्या वचसा चैवं मन्येऽहं त्वं स एव हि ।
त्वयि गोपयति स्वं च कुर्वे सन्देहमप्यहो ॥ ५९ ॥
सदृशा बहवो लोका दृश्यन्तेऽत्र महीतले ।
ततस्त्वमपि मत्पुत्रसदृशोऽपि भविष्यसि ॥ ६० ॥

धनदः स्माह हे तात स एवास्मि सुतस्तव ।
तस्यांह्रौ दक्षिणे चिह्नं दृष्ट्वा ज्ञातोऽमुनाऽप्यसौ ॥ ६१ ॥
पितुः पादौ ननामायं गाढं सोऽप्यालिलिङ्ग तम् ।
हर्षाश्रुपूरपूर्णाक्षो जगाद च सगद्गदम् ॥ ६२ ॥
हा पुत्रात्रागतेनापि किं त्वयाऽऽत्मा निगूहितः ।
नोत्कण्ठा किमु ते पित्रोश्चिरान्मिलितयोरपि ॥ ६३ ॥
क्वास्थाः कालमियन्तं त्वमनुभूतं त्वया किमु ।
दुःखं सुखं वा हे वत्स देशान्तरगतेन हि ॥ ६४ ॥
धनदोऽप्यश्रुपूर्णाक्षः सङ्क्षेपादात्मनः कथाम् ।
पित्रोर्निवेदयामास क्षमयामास तौ तथा ॥ ६५ ॥
इदं चोवाच हे तात पार्थिवान्मां विमोचय ।
यथाऽहं तव वध्वाश्चागच्छावो निजमन्दिरम् ॥ ६६ ॥
गत्वा राजकुले सोऽथ तमर्थं निरमापयत् ।
सह पुत्रेण भूपालमप्याकारयति स्म च ॥ ६७ ॥
ततो गजेन्द्रमारूढो धनदः प्रेयसीयुतः ।
अनुगम्यमानो भूपेनागान्निजनिकेतनम् ॥ ६८ ॥
पुत्रे देशान्तरायाते गृहप्राप्ते च भूपतौ ।
हृष्टः प्रावर्त्तयत् श्रेष्ठी स महोत्सवमुत्तमम् ॥ ६९ ॥
अत्रान्तरे नृपसुतो नृपस्योत्सङ्गसंस्थितः ।
यावदासीन्मनस्तोषं जनयन्निजलीलया ॥ ७० ॥
तावदारामिकः कश्चिदुद्धृत्य स्वकरण्डकात् ।
कुसुमान्यार्पयद्राज्ञस्तनयस्तानि चाग्रहीत् ॥ ७१ ॥

तेषामन्तर्गतेनायं दष्टो राजाहिनाऽमुना ।
नासाग्रे [1]घ्राणमानोऽपि फूत्करोति ततश्च सः ॥ ७२ ॥
राजाऽपि पुष्पमध्यस्थं तं दृष्ट्वाऽहिं सुदुःखितः ।
प्रोचे गारुडिकं भद्र कुर्व्वेनं गतवेदनम् ॥ ७३ ॥
सोऽवादीद्राजसर्पोऽयं सर्वसर्पशिरोमणिः ।
तत्कर्त्तुं युज्यतेऽस्माकमत्र मन्त्रक्रिया नहि ॥ ७४ ॥
ततश्चक्रेश्वरीदत्तमणिनीरेण निर्विषम् ।
तं चक्रे धनदः सद्यो मुमुदे च महीपतिः ॥ ७५ ॥
ततः संमान्य धनदं समागत्य निजं गृहम् ।
नृपोऽप्यकारयद्वर्द्धापनं पुत्रस्य जन्मवत् ॥ ७६ ॥
अथासौ नृपतेः पुत्रः क्रमात्संप्राप्तयौवनः ।
निर्ययौ गजमारूढो राजपाटिकयाऽन्यदा ॥ ७७ ॥
पुरस्य पश्यता शोभां दृष्टा तेन मनोहरा ।
तनया शूरराजस्य श्रीप्रिया नाम कन्यका ॥ ७८ ॥
निरीक्ष्योद्भटरूपां तां कुमारो मारपीडितः ।
बभूव सा च तं दृष्ट्वा तेपदप्यनुरागिणी ॥ ७९ ॥
कुमारो विरहे तस्या गृहे प्राप्तो रतिं गतः ।
मित्रैश्च तदभिप्रायो महीभर्तुर्निवेदितः ॥ ८० ॥
महत्तरकः पार्थिवादिष्टो गत्वा शूरनृपान्तिके ।
कुमारार्थे ययाचे तां श्रीप्रियां वरकन्यकाम ॥ ८१ ॥

(1) ग ड च ट फूत्करोति स्म दष्टोऽस्मीति ततश्च सः ।

परमानुग्रहं सोऽथ मन्यमानोऽतिगौरवम् ।
चक्रे यावदमात्यस्य तावत्सा बालिकाऽवदत् ॥ ८२ ॥
यदि दास्यथ मां तस्मै यूयं तात तदा ध्रुवम् ।
आत्महत्यां करिष्यामि तच्छ्रुत्वा विषसाद सः ॥ ८३ ॥
ऊचे च सचिवं तावत् यात यूयं नृपान्तिकम् ।
कन्यकामनुनीयेमां कथयिष्याम्यहं पुनः ॥ ८४ ॥
मन्त्री गत्वा तदाचख्यौ राज्ञः शूरोऽपि कन्यकाम् ।
बभाण ¹सा तु श्रीषेणा नेच्छति स्मैव तं पतिम् ॥ ८५ ॥
तेनाथ पार्थिवस्येदं कथितं पार्थिवोऽपि तत् ।
सुतस्याख्यत्सोऽपि गाढं बभूव मदनातुरः ॥ ८६ ॥
अत्रान्तरे च संप्राप्तो धनदो राजसन्निधौ ।
पप्रच्छैवं महाराज यूयं चिन्तातुरा नु किम् ॥ ८७ ॥
राजाऽपि तनयावस्थास्वरूपं पर्यकीर्त्तयत् ।
तच्छ्रुत्वा श्रेष्ठिसूः स्माह्रालं विषादेन भूपते ॥ ८८ ॥
देवीचक्रेश्वरीदत्तमणिर्माहात्म्यतः क्षणात् ।
साधयिष्याम्यदःकार्यमित्युक्त्वा मणिमानयत् ॥ ८९ ॥
आर्पयच्च² कुमारस्याराधयामास सोऽपि तम् ।
धनदाख्यातविधिना तस्य तुष्टो मणिस्ततः ॥ ९० ॥
सा शूरनन्दनी तस्मिन्ननुरागं नृपात्मजे ।
दध्यौ तं च समोपस्थां सन्तीं स्निग्धमजिज्ञपत् ॥ ९१ ॥

(१) ग ङ च ट ऽधीशा तु ।
(२) च ज स्य ।

साऽऽचख्यौ तत्पितुः सोऽपि गत्वाऽशंसन्महीभुजः ।
राजाऽपि तनयस्याख्यत् ततः स्वस्थो बभूव सः ॥ ८२ ॥
सांवत्सरमथाकार्य्य विवाहदिनमुत्तमम् ।
राजाऽपृच्छत्स चाचख्यौ तद्द्वितीयदिने शुभम् ॥ ८३ ॥
लग्ने दोषोज्झिते तस्मिन् शुभग्रहनिरीक्षिते ।
शकुनैर्विहितोत्साहो विवाहः समभूत्तयोः ॥ ८४ ॥
स कुमारस्तया सार्द्धं भेजे वैषयिकं सुखम् ।
अथान्येद्युर्नृपस्योग्रा शिरःशूलव्यथाऽभवत् ॥ ८५ ॥
रोगापहारिसुमणेः प्रभावाद्धनदोऽपि ताम् ।
तत्पीडां शमयामास दुःसाध्यां भिषजामपि ॥ ८६ ॥
ततश्च पार्थिवो दध्यावस्याहो सदृशः पुमान् ।
नास्ति कोऽपि महीपीठे गुणरत्नमहोदधिः ॥ ८७ ॥
भाग्योदयेन केनापि सम्पन्नोऽयं सखा मम ।
इति ध्यात्वाऽधिकं मेने स्वसुतादपि तं सदा ॥ ८८ ॥
चतुर्ज्ञानधरः पद्भ्यां पवित्रितवसुन्धरः ।
आगात्तत्र पुरेऽन्येद्युः सूरिः शीलंधराभिधः ॥ ८९ ॥
जग्मुस्तद्वन्दनार्हन्तोः पौराः सर्वेऽपि भक्तितः ।
दृष्ट्वा तान् ज्ञातवृत्तान्तो रथस्थो धनदोऽप्यगात् ॥ ५०० ॥
कृत्वा नतिं यथास्थानमासीनेषु जनेषु च ।
सूरिः शीलंधरः सोऽथ विदधे धर्मदेशनाम् ॥ १ ॥

जीवानामिह संसारे विना धर्मेण नो सुखम् ।
त्यक्त्वा प्रमादं भो भव्यास्तद्धर्मं कुरुतादरम् ॥ २ ॥
कुर्वन् कलङ्कयेत् धर्मं मनसाऽप्यन्तरा हि यः ।
सहणाक इवाप्नोति स सौख्यं दुःखमिश्रितम् ॥ ३ ॥
पप्रच्छ धनदः कोऽसौ भगवन्सहणाभिधः ।
कुर्वताऽपि कथं तेन धर्मो नाम कलङ्कितः ॥ ४ ॥
सूरिः प्रोचेऽत्र भरते पुरे रत्नपुराभिधे ।
शुभदत्ताभिधः श्रेष्ठी वसति स्म महाधनः ॥ ५ ॥
भार्या वसुन्धरा तस्य सहणाकश्च तत्सुतः ।
सोमश्रीर्नाम तस्यापि बभूव सहचारिणी ॥ ६ ॥
अन्यदा रथमारुह्योद्यानिकायां ययावसौ ।
उद्याने मण्डपस्तत्र [1]विस्तीर्णश्च विनिर्मितः ॥ ७ ॥
खाद्य-भोज्य-लेह्य-पेय भेदैस्तत्र चतुर्विधम् ।
बुभुजे स वराहारं मित्रैः सह यदृच्छया ॥ ८ ॥
ततस्ताम्बूलमादाय पञ्चसौगन्धिकं वरम् ।
क्षणं दृष्टिकृतानन्दं प्रेक्ष्य प्रेक्षणकं तथा ॥ ९ ॥
इह पादपसङ्कीर्णं फलपुष्पर्द्धिबन्धुरम् ।
उद्यानमीक्षमाणोऽसौ ददर्शैकं महामुनिम् ॥ १० ॥ युग्मम्
स मित्रपरितो गत्वा ववन्दे तं तपोधनम् ।
सोऽपि ध्यानं विमुच्यास्मै धर्मलाभाशिषं ददौ ॥ ११ ॥

[1] मण्डपस्तत्र सुविस्तीर्णश्च निर्मितः ।

तद्धर्मदेशनां श्रुत्वा प्रतिबुद्धः[1] स शुद्धधीः ।
सम्यक्त्वमूलं तत्पार्श्वे गृहिधर्ममुपाददे ॥ १२ ॥
पुनः साधुं नमस्कृत्य स गतो निजमन्दिरम् ।
द्रव्येण कारयामास जिनमन्दिरमुत्तमम् ॥ १३ ॥
पश्चाच्च चिन्तयामास बहुद्रव्यव्ययो मया ।
कृतो धर्मरसाधिक्यपराधीनतया कथम् ॥ १४ ॥
स एवं विगतोत्साहो भूत्वा कत्यपि वासरान् ।
ततो लोकानुरोधेनाकारयत्प्रतिमामपि ॥ १५ ॥
प्रतिष्ठां कारयामास तस्याश्च श्वेतभिक्षुभिः ।
न्यवारयज्जीवमारिं ददौ दानं यथोचितम् ॥ १६ ॥
पुनर्दध्यावहो धर्मे बहुद्रव्यव्ययं व्यधाम् ।
उपार्जितधनात्तुर्यभाग एवात्र युज्यते ॥ १७ ॥
फलं भावि नवाऽस्येति सन्देहो मे प्रवर्त्तते ।
शास्त्रे च श्रूयते स्तोकव्ययस्यापि फलं महत् ॥ १८ ॥
स एवं संशयानोऽपि चक्रे पूजादिसत्क्रियाम् ।
अन्येद्युर्गृहमायातावपश्यच्च तपोधनौ ॥ १९ ॥
स्वयमेतौ शुभाहारैर्भक्त्याय प्रत्यलाभयत् ।
गतयोश्च तयोश्चिन्तां चक्रे धन्योऽहमित्यसौ ॥ २० ॥
निशात्यये च यामिन्यामन्यदाऽचिन्तयत्पुनः ।
अप्रत्यक्षफलेनेह कृतेन श्रमसा हि किम् ॥ २१ ॥

१. ग व ह -द्ध ।
२. ग ड च ह विधिपूर्वकम् ।

अपरेद्युर्मुनिद्वन्द्वं दृष्ट्वा मलमलीमसम् ।
स एवं चिन्तयामास धिगहो मलिनाविमौ ॥ २२ ॥
यद्येतै निर्मलं वेषमकरिष्यन्महर्षयः ।
ततोऽभविष्यत् किं नाम जैनधर्मस्य दूषणम् ॥ २३ ॥
अथवा हा मया दुष्टं चिन्तितं मुनिपुङ्गवाः ।
भवन्त्येवंविधा यस्मात्संयमेनैव निर्मलाः ॥ २४ ॥
एवं च शुभभावेन शुभं कर्म समार्जयत् ।
सोऽशुभेनाशुभं कर्मार्जयति स्मान्तराऽन्तरा ॥ २५ ॥
आयुःक्षये विपद्याभूत्स देवो भुवनाधिपः ।
ततश्च्युत्वा समुत्पन्नः स त्वं धनदनामकः ॥ २६ ॥
कृत्वा कृत्वाऽन्तरा धर्मो यत्त्वया दूषितस्तदा ।
सुखानि दुःखमिश्राणि लब्धानीह ततः स्फुटम् ॥ २७ ॥
तच्छ्रुत्वा मूर्च्छितः पृथ्व्यां पपात धनदः क्षणम् ।
जातिस्मृत्या निजं पूर्वभवभावं ददर्श च ॥ २८ ॥
उवाच च प्रभो सत्यं यद् युष्माभिः प्ररूपितम् ।
ततो बन्धूननुज्ञाप्य ग्रहीष्याम्यनगारताम् ॥ २९ ॥
इत्युदित्वा गृहे गत्वा पितरावेवमूचिवान् ।
हे अंब तात मां दीक्षाकृते विसृजतं युवाम् ॥ ३० ॥
ताभ्यां निवार्यमाणोऽपि न यावद्विरराम सः ।
तावत्तावूचतुर्दीक्षामादास्यावस्त्वया सह ॥ ३१ ॥
राज्ञः पार्श्वे ययौ सोऽथ स्वाभिप्रायं शशंस च ।
सोऽप्यूचेऽहमपि समं ग्रहीष्यामि व्रतं त्वया ॥ ३२ ॥

धनदः स्माह गार्हस्थ्ये मम स्वामी भवानभूत् ।
भविष्यति यतित्वेऽपि संयोगोऽयं मनःप्रियः ॥ ३३ ॥
ततो राज्ञा सुतो राज्ये स्थापितः कनकप्रभः ।
धनदस्य सुतः श्रेष्ठिपदे चैव धनावहः ॥ ३४ ॥
ततः सार्द्धं महीभर्त्रा पितृभ्यां भार्यया तथा ।
उपाददे परिव्रज्यां धनदो गुरुसन्निधौ ॥ ३५ ॥
गृहीत्वा द्विविधां शिक्षां कृत्वा च विविधं तपः ।
मृत्वा सर्वेऽपि ते जग्मुः पुण्यात्मानः सुरालयम् ॥ ३६ ॥
ततश्च्युत्वा मनुष्यत्वं प्राप्य श्रमणतां तथा ।
क्षेत्रे महाविदेहे ते संप्राप्ताः परमं पदम् ॥ ३७ ॥

॥ इति मत्स्योदरकथा ॥

धनदस्य कथामेतां श्रुत्वा विद्याधराधिप ।
धर्मो निरन्तरं कार्यस्त्वयेत्यूचे मुनिः स तु ॥ ३८ ॥
तच्छ्रुत्वाऽमिततेजाः स गुर्वाज्ञां शिरसा दधत् ।
उत्थाय नमति स्मांह्री भूयोऽपि मुनिवर्ययोः ॥ ३९ ॥
चारणश्रमणौ तौ च समुत्पत्य विहायसा ।
तपोमाहात्म्यसम्पन्नौ जग्मतुः स्थानम्[1]ीप्सितम् ॥ ४० ॥
नरखेचरराजौ श्रीविजयामिततेजसौ ।
गमयामासतुः कालं तावथो धर्मतत्परौ ॥ ४१ ॥
तौ यात्रात्रितयं धर्म्यां चक्रतुः प्रतिवत्सरम् ।
तत्र स्यात् शाश्वतं यात्राद्वयमेका त्वशाश्वती ॥ ४२ ॥

(१) च-मुत्तमम् ।

चैत्रस्य विमले पक्षे यात्रैका शाश्वती भवेत् ।
द्वितीया चाश्विनीमासे प्रसिद्धाऽष्टाह्निकाऽभिधा ॥ ४३ ॥
देवा विद्याधराश्चैते द्वीपे नन्दीश्वराभिधे ।
यात्रे कुर्युर्नराः स्वस्वस्थानचैत्येषु संमदात् ॥ ४४ ॥
तृतीयामपि तौ यात्रां चक्रतुः सोमपर्वते ।
बलर्षिकेवलोत्पत्तिस्थाने नाभेयमन्दिरे ॥ ४५ ॥
बहून्यब्दसहस्राणि कृत्वा तौ राज्यमन्यदा ।
गत्वा मेरौ ववन्दाते सनातनजिनक्रमान् ॥ ४६ ॥
नन्दनाख्ये वने तत्र चारणश्रमणावुभौ ।
विपुलमहामतिसंज्ञौ चोपविष्टावपश्यताम् ॥ ४७ ॥
नत्वा श्रुत्वा च तद्वाख्यां पृष्टौ ताभ्यामिमौ मुनी ।
भगवन्तौ कियदायुरावयोरिति कथ्यताम् ॥ ४८ ॥
षड्विंशतिदिनान्यायुः शेषमस्तीति जल्पितौ ।
ताभ्यां तावाकुलीभूतौ पुनरेवं जजल्पतुः ॥ ४९ ॥
विषयामिषगृध्नाभ्यां नैयत्कालं कृतं व्रतम् ।
संप्रत्यल्पायुषावावां करिष्यावो हहा किम् ॥ ५० ॥
मुनिभ्यां भणितावेतौ विनष्टं युवयोर्नु किम् ।
व्रतं गृह्णीतमद्यापि युवां स्वर्गापवर्गदम् ॥ ५१ ॥
ततः स्वस्वपुरं प्राप्तौ सुतौ राज्ये निधाय तौ ।
पार्श्वे जगृहतुर्दीक्षामभिनन्दनसन्मुनेः ॥ ५२ ॥

(१) ग ज ड -पौ सन्तौ ।

स्थितावनशनेनैतौ पादपोपगमेन च ।
सस्मार जनकस्यौजस्तदा श्रीविजयो मुनिः ॥ ५३ ॥
ततश्च तपसाऽनेन भूयासमहमप्यहो ।
पिता मम इति व्यक्तं निदानमकरोदसौ ॥ ५४ ॥
एवं कृतनिदानोऽसावन्योऽकृतनिदानकः ।
मृत्वा तौ प्राणते कल्पे समुत्पन्नौ महर्द्धिकौ ॥ ५५ ॥
विमाने नन्दिकावर्त्ते स्वस्तिकावर्त्तके तथा ।
दिव्यचूलमणिचूलाभिधानौ सुरसत्तमौ ॥ ५६ ॥ (युग्मम्)
तत्रादौ सुरकृत्यजातमखिलं कृत्वा स्थितैर्वेदिनौ
दिव्यं वैषयिकं ततः खलु निषेवाते सुखं तौ मुदा ॥
कुर्वाणौ जिनचैत्यवन्दनविधिं यात्रां च नन्दीश्वरे
गाढं चक्रतुरुज्ज्वलं शुभमतौ सम्यक्त्वरत्नं निजम् ॥ ५७ ॥

इत्याचार्यश्रीअजितप्रभविरचिते श्रीशान्तिनाथचरित्रे
चतुर्थपञ्चमभववर्णनो नाम द्वितीयः प्रस्तावः ॥

---

## तृतीयः प्रस्तावः ।

इतोऽस्य जम्बूद्वीपस्य पूर्वविदेहमध्यगे ।
विजये रमणीयाख्ये सुभगायां महापुरि ॥ १ ॥
वृत्तगाम्भीर्य्यमर्यादाश्रीगुणैर्जितसागरः ।
प्रौढप्रतापयुक्तोऽभूत् राजा स्तिमितसागरः ॥ २ ॥ (युग्मम्)
भार्या वसुन्धरी तस्यानर्घ्यशीलवसुन्धरा ।
द्वितीयाऽनुद्धरी नाम बभूव स्त्रीगुणान्विता ॥ ३ ॥
दिव्यचूलः सुरः सोऽथ च्युत्वा प्राणतकल्पतः ।
राज्ञः पत्न्या वसुन्धर्या उदरे समवातरत् ॥ ४ ॥
गजपद्मसरश्चन्द्रवृषस्वप्नास्तया तदा ।
चत्वारो हलभृज्जन्मसूचका वीक्षिताः शुभाः ॥ ५ ॥
समये सुषुवे साऽथ तनयं कनकप्रभम् ।
अपराजित इत्याख्यां चक्रे तस्य पिता शुभम् ॥ ६ ॥
अन्यदाऽनुद्धरीकुक्षौ सरसीव सितच्छदः ।
समुत्पन्नः सुतस्तेन मणिचूलो दिवश्च्युतः ॥ ७ ॥
सिंहार्ककुम्भसिन्धुश्रीरत्नोच्चयहुताशनान् ।
प्रविशतो मुखेऽद्राक्षीत् सप्त स्वप्नानसौ तदा ॥ ८ ॥
कथयामास तान् भर्त्तुः सोऽपि पप्रच्छ तद्विदम् ।
सोऽवदत्ते सुतो विष्णुर्भावी स्वप्नैरिमैर्नृप ॥ ९ ॥

अग्रेतनेसुतश्चायं बलभद्रो भविष्यति ।
इत्युक्त्वाऽगात् गृहे राज्ञा विसृष्टः स्वप्नपाठकः ॥ १० ॥
समये सुषुवे साऽपि देवी कृष्णप्रभं सुतम् ।
अनन्तवीर्य इत्याख्यां पिता तस्य विनिर्ममे ॥ ११ ॥
काले कृतकलाभ्यासौ रूपलावण्यशालिनौ ।
उद्यौवनौ कुमारौ तौ पिता कन्ये विवाहितौ ॥ १२ ॥
अन्येद्युस्तत्पुरोद्याने विशिष्टज्ञानसंयुतः ।
स्वयंप्रभो नाम मुनिरागत्य समवासरत् ॥ १३ ॥
इतोऽश्ववाहनां कृत्वा परिश्रान्तः स भूपतिः ।
विश्रामार्थं तमुद्यानमाययौ नन्दनोपमम् ॥ १४ ॥
[1]क्षणमेकं स विश्रान्तस्तत्राशोकतरोस्तले ।
ददर्श मुनिवर्यं तं ध्यानाचलकलेवरम् ॥ १५ ॥
तं त्रिःप्रदक्षिणीकृत्य नमस्कृत्य च भक्तितः ।
निषद्य च यथास्थानं स शुश्रावेति देशनाम् ॥ १६ ॥
कषायाः कटवो वृक्षा दुःशीनं तत्प्रसूनकम् ।
फलं च पापकर्मेह परलोके च दुर्गतिः ॥ १७ ॥
संसारोद्विग्नचित्तेन निर्वाणसुखमिच्छता ।
कषायाः परिहर्त्तव्यास्तदेतेऽनर्थकारणम् ॥ १८ ॥
अथोचे पार्थिवः सत्यं महात्मन्निदमेव हि ।
परमेवं समाख्याहि कतिभेदा भवन्ति ते ॥ १९ ॥

(१) ख ग च क्षणमेकं शयितस्तत्राशोकस्य तरोस्तले ।

मुनिर्जगौ कोप मान-माया-लोभाभिधा इमे ।
चत्वारः स्युस्तथाऽमीषां भेदाः प्रत्येकशोऽप्यमी ॥ २० ॥
आद्योऽनन्तानुबन्ध्यप्रत्याख्यानो द्वितीयकः ।
प्रत्याख्यानस्तृतीयस्तु तुर्यः संज्वलनाभिधः ॥ २१ ॥
निश्चलोऽचलरेखेव दारुणो दुःखदायकः ।
भवेत्तत्रादिमो राजन् कोपोऽनन्ताऽनुबन्धकः ॥ २२ ॥
पृथ्वीरेखासमोऽप्रत्याख्यानो नाम्ना द्वितीयकः ।
प्रत्याख्यानस्तृतीयस्तु रेणुरेखासमो मतः ॥ २३ ॥
तुर्यः संज्वलनो नीररेखातुल्यः प्रकीर्त्तितः ।
एवं मानोऽद्रास्थिकाष्ठतृणमस्तम्भसन्निभः ॥ २४ ॥
माया वंशीमिषशृङ्गगवांमूत्रावलेहवत् ।
लोभः कृमिरागपङ्काञ्जनहारिद्ररागवत् ॥ २५ ॥
जन्मवर्षचतुर्मासस्थितयः स्युः क्रमात्त्रयः ।
तुर्यः पक्षस्थितिस्ते च श्वभ्रादिगतिहेतवः ॥ २६ ॥
एवं कषायास्ते राजन् षोडशापि प्रकीर्त्तिताः ।
गाढसंरम्भविहिताः स्युर्यके गाढदुःखदाः ॥ २७ ॥
संरम्भेण विना स्तोकभवान् दुःखं ददत्यलम् ।
ततश्चाल्पेऽपि नो कार्याः कषाया नृपते त्वया ॥ २८ ॥
राजन्नल्पीयसोऽपि स्यात् दुष्कृतस्य फलं महत् ।
मित्रानन्दादिसत्त्वानां यथादृष्टं मनीषिभिः ॥ २९ ॥
मित्रानन्दादयः केऽमी इत्युक्तो भूभुजा पुनः ।
स्वयंप्रभमुनिः स्माह तत्कथा श्रूयतामिति ॥ ३० ॥

सुरसद्मसमानर्द्धि नानाऽद्भुतमनोहरम् ।
अस्तीहामरतिलकं नगरं भुवि विश्रुतम् ॥ २१ ॥
रूपलक्ष्म्याऽतिशायिन्याऽभिभूतमकरध्वजः ।
मकरध्वजनामाऽभूत् भूपतिस्तत्र विक्रमी ॥ २२ ॥
पत्न्यां मदनसेनायां पद्मकेसरनामकः ।
तस्य पद्मसरःस्वप्नसूचितस्तनयोऽभवत् ॥ २३ ॥
राज्ञः पत्न्या तयाऽन्येद्युर्विन्नुवत्या शिरोरुहान् ।
विलोक्य पलितं दूत आगाद्देवेति जल्पितम् ॥ २४ ॥
ततः संभ्रान्तचित्तस्य कुर्वाणस्य दिगीक्षणम् ।
भूयः पत्युस्तयाऽऽख्यातं पाण्डुकेशं प्रदर्शितम् ॥ २५ ॥
दूतोऽयं धर्मराजेन प्रेषितः पलितच्छलात् ।
आगच्छति जराकृत्यं कुरुष्वेति वदन्निव ॥ २६ ॥
ततश्च पार्थिवो दध्यौ मम पूर्वैर्महात्मभिः ।
अदृष्टपलितैरेव धर्ममेवा व्यधीयत ॥ २७ ॥
धिग् मां राज्यलुब्धं तु [1]स्थितिविच्छेदकारिणम् ।
यस्य मे विषयासक्तस्यैव जातो जरागमः ॥ २८ ॥
इति चिन्ताविषण्णास्यं पतिं दृष्ट्वा सनर्मवाक् ।
उवाचैवं पुना राज्ञी तद्भावाविदुरा सका ॥ २९ ॥
नाथ त्वं वृद्धभावेन लज्जसे यदि सर्वथा ।
ततोऽहं कारयिष्यामि पटहोद्घोषणामिमाम् ॥ ४० ॥

---

[1] स्व प च मति-।

तत: पूर्वभवे राजन्! यद्दृसङ्गिर्निबध्यते।
[1]रुदङ्गिर्वेद्यतेऽवश्यं तत्कर्मेह शरीरिभि:॥ ८९॥

तन्निशम्य महीपोऽसौ मुमूर्च्छ प्रियया सह।
तत्पूर्वविहितं सर्वं जातिस्मृत्या विवेद [2]स:॥ ९०॥

ऊचे च यत्प्रभो! प्रोक्तं युष्माभिर्ज्ञानभास्करै:।
तज्जातिस्मरणेनाभूत् प्रत्यक्षमधुनाऽपि मे॥ ९१॥

तदेतस्यामवस्थायां विद्यते यस्य योग्यता।
कृत्वा प्रसादं युष्माभि: स धर्मो मम कथ्यताम्॥ ९२॥

गुरु: प्रोवाच सञ्जाते तनये ते महीपते!।
प्रव्रज्या भवितेदानीं गृहिधर्मस्तवोचित:॥ ९३॥

ततो द्वादशभेदेन गृहिधर्मो विवेकिना।
प्रपन्नोऽमरदत्तेन भूभुजा प्रियया सह॥ ९४॥

पुन: पप्रच्छ भूपालो यत्तदा तेन जल्पितम।
मृतकेन तदाख्याहि कारणं विस्मयोऽत्र मे॥ ९५॥

गुरुणोक्तमसौ पान्थ: [3]शम्बाशाही महीपते!।
[4]मृत्वा भ्रान्त्वा भवं तत्र वटेऽभूद् व्यन्तर: क्रमात्॥ ९६॥

मित्रानन्दं समुद्दीक्ष्य स्मृत्वा वैरं च तत्कृतम्।
अवतीर्य्य शवस्यास्ये तेन तज्जल्पितं वच:॥ ९७॥

(१) घ ङ ज थ रुदद्भि-।

(२) ङ ट ण थ द च।

(३) छ ण द भिक्षा-।

(४) ण द विपद्य व्यन्तरो जज्ञे वटे तस्मिन् स्वकर्मणा।

इत्थं विच्छिन्नसन्देहोऽमरदत्तो महीपतिः ।
सूरिं नत्वा स्वसदनमाययौ सपरिग्रहः ॥ ९८ ॥
अज्ञानमोहितप्राणिप्रतिबोधविधौ रतः ।
धर्मघोषमुनीन्द्रोऽपि विजहार महीतले ॥ ९९ ॥
समये रत्नमञ्जर्या देव्याः सूनुरजायत ।
तदेव समभूत् तस्य नाम यद् गुरुणोदितम् ॥ ४०० ॥
धात्रीभिः पालितः सोऽथ समतिक्रान्तशैशवः ।
समधीतकलो विश्वम्भराधारक्षमोऽभवत् ॥ १ ॥
स एव सुगुरुस्तत्र पुनरन्येद्युराऽऽययौ ।
उद्यानपालकस्तस्याऽऽगतिं राज्ञे शशंस च ॥ २ ॥
निवेश्य तनयं राज्ये ततोऽसौ प्रियया सह ।
गुरूणामन्तिके तेषां परिव्रज्यामुपाददे ॥ ३ ॥
राज्ञः सपरिवारस्य दत्त्वा दीक्षामथो गुरुः ।
तस्याऽन्येषां च बोधार्थं शिक्षामेवंविधां ददौ ॥ ४ ॥
भवाम्भोधिपतज्जन्तुनिस्तारणतरी क्षमा ।
कथञ्चित् पुण्ययोगेन प्रव्रज्या प्राप्यतेऽङ्गिभिः ॥ ५ ॥
प्रव्रज्यां प्रतिपद्यापि स्युर्ये के विपर्येषिणः ।
जिनरक्षितवद् घोरे ते पतन्ति भवार्णवे ॥ ६ ॥
स्युर्ये के निरपेक्षास्तु विषयेष्वर्थिता अपि ।
जिनपालितवत्तेऽत्र भवन्ति सुखभाजिनः ॥ ७ ॥
पृष्टो राजर्षिणा तेन ततः कथयति स्म सः ।
सूरिः सिद्धान्तकथितां भविष्यन्तीं तयोः कथाम् ॥ ८ ॥

चम्पापुर्यां प्रसिद्धायां जितशत्रुरभून्नृपः ।
बभूव धारिणी नाम्नी तत्प्रिया रूपशालिनी ॥ ९ ॥
अभवत्तत्र माकन्दी नाम्ना श्रेष्ठी महाधनः ।
प्रशान्तः सरलस्त्यागी बन्धुकैरवचन्द्रमाः ॥ १० ॥
[1]भद्रा नाम्नी च तद्भार्या [2]तत्सुतौ क्रमजावुभौ ।
जिनपालितनामाऽऽद्यो द्वितीयो जिनरक्षितः[3] ॥ ११ ॥
यानमारुह्य कुर्वद्भ्यां परदेशे गताऽऽगतम् ।
वारानेकादशामूभ्यां निस्तीर्णः सरितां पतिः ॥ १२ ॥
अर्जितं हि धनं भूरि ततस्तावतिलोभतः ।
गन्तुकामौ पुनस्तत्रापृच्छतां पितरं निजम् ॥ १३ ॥

---

(१) ट थ सद्धर्मकर्मनिपुणो गुरौ देवे च भक्तिमान् ।
दानशीलतपोभावधर्मं करोत्यनारतम् ॥ ११ ॥
भद्रा नाम्नी च तद्भार्या रूपलावण्यसंयुता ।
सतीत्वं पालयन्ती सा विनयादिगुणान्विता ॥ १२ ॥
तत्कुक्षिसम्भवौ शान्तौ तनयौ क्रमजावुभौ । इत्येवं पाठः ।

(२) ज ण द तत्पुत्रौ ।

(३) इतिश्लोकानन्तरं ट थ पुस्तके
विद्याविनयसौन्दर्यलावण्यादिगुणाश्रितौ ।
शैशवाद् यौवनं प्राप्तौ पित्रा तौ परिणायितौ ॥ १४ ॥
द्विसप्ततिकलायुक्तौ द्रव्योपार्जनतत्परौ ।
स्वदेशे परदेशे च यातायातौ सदैव तौ ॥ १५ ॥ इत्येवं पाठः ।

सोऽवदद् विद्यतेऽग्रेऽपि 'हे वत्सौ ! प्रचुरं धनम् ।
निजेच्छया त्यागभोगौ तेनैव कुरुतं युवाम् ॥ १४ ॥
इयं च द्वादशी वेला भवेत् सोपद्रवाऽप्यसौ ।
ततो न युज्यते वार्द्धौ प्रयातुमिति मे मतिः ॥ १५ ॥
अथ तावूचतुस्तात ! मा वादीरीदृशं वचः ।
भाविन्येषाऽपि नौयात्रा क्षेमेण त्वत्प्रसादतः ॥ १६ ॥
ततस्तेन विसृष्टौ तावत्याग्रहपरायणौ ।
क्रयाणकं जगृहतुर्गणिमादि चतुर्विधम् ॥ १७ ॥
सामग्रीं सकलां कृत्वा जलादीनां च संग्रहम् ।
यानमारुह्य चार्णोधौ ततः प्रविशतः स्म तौ ॥ १८ ॥
तयोर्महासमुद्रान्तर्गतयोरभवत् क्षणात् ।
अकालदुर्दिनं व्योम्नि जगर्ज च बलाहकः ॥ १९ ॥
विलासामकृद् विद्युदूर्मयश्च जजृम्भिरे ।
वातश्च प्रबलो जज्ञे यानं तेन ननर्त तत् ॥ २० ॥
स्फुटितं च क्षणादेव विधुरेऽधीरचित्तवत् ।
विपन्नस्तद्गतो लोकस्तौ यानाधिपती पुनः ॥ २१ ॥
लब्ध्वा फलहकं किञ्चित् तद् गाढं परिरभ्य च ।
तीरमासेदतू रत्नद्वीपस्य दिवसैस्त्रिभिः ॥ २२ ॥ (युग्मम्) ।
नालिकेरीफलैस्तत्र प्राणयात्रां विधाय तौ ।
तत्तैलाभ्यङ्गयोगेन रूढदेहौ बभूवतुः ॥ २३ ॥

---

(१) क भ ट घ तनयौ ।

ततस्तत्राऽऽययौ रत्नद्वीपदे[1]वीति देवता ।
नृशंसा निर्घृणा पापी कृपाणं बिभ्रती शितम् ॥ २४ ॥
ऊचे चैवमहो सार्द्धं मया विषयसेवनाम् ।
चेद् युवां कुरुथः प्राणकुशलं वां ततो भवेत् ॥ २५ ॥
अन्यथाऽनेन खड्गेन शिरश्छेत्स्यामि निश्चितम् ।
इत्युक्ते भयभीताङ्गौ तावप्येवं जजल्पतुः ॥ २६ ॥
भिन्नप्रवहणावावां देवि ! त्वां शरणाऽऽश्रितौ ।
यदादिशसि किञ्चित्त्वं कर्तास्वस्तदसंशयम् ॥ २७ ॥
प्रासादमात्मनो नीत्वा तौ ततः प्रीतमानसा ।
अपजह्रे तयोरङ्गात् पुद्गलानशुभानसौ ॥ २८ ॥
बुभुजेऽथ समं ताभ्यां स्वैरं वैषयिकं सुखम् ।
ताभ्यां सुधाफलाहारं ददौ च प्रतिवासरम् ॥ २९ ॥
एवं च तस्थुषोर्यावद् गताः कत्यपि वासराः ।
तयोस्तत्रान्यदा तावत् तयैवं भणिताविमौ ॥ ३० ॥
सुस्थितेनाऽहमादिष्टाऽधिष्ठात्री लवणोदधेः ।
यथा त्रिः सप्तकृत्वस्त्वं भद्रे ! शोधय वारिधिम् ॥ ३१ ॥
तृणकाष्ठाशुचिप्रायं भवेद् यत् तत्र किञ्चन ।
सर्वं नीत्वा तदेकान्ते परित्याज्यं ममाज्ञया ॥ ३२ ॥
ततस्तत्र मया गम्यं युवामत्रैव तिष्ठतम् ।
कुर्वन्तौ सत्फलैरेभिः प्राणवृत्तिं शुभाशयौ ॥ ३३ ॥

[1] घ -देव्यधिदेवता ।

कथञ्चिद्द्विजनत्वाद्वां यद्यत्रोत्पद्यतेऽरतिः ।
पूर्वदिग्वनखण्डे तद्गन्तव्यमपशङ्कितम् ॥ ३४ ॥
सर्वदाऽवस्थितौ तत्र ग्रीष्मप्रावृट्सुसंश्रितौ ।
उभावृतू विनोदाय युवयोरपि भाविनौ ॥ ३५ ॥
न चेत् तत्राऽपि वां चित्तं रमेत कथमप्यहो ।
तदोत्तरवनखण्डे गन्तव्यं हि ममाज्ञया ॥ ३६ ॥
तत्राप्यवस्थितौ नित्यं शरद्धेमन्तनामकौ ।
भविष्यत ऋतू नाम स्वाधीनौ युवयोरपि ॥ ३७ ॥
तत्राऽपि नो रतिश्चेद्वां तत्प्रतीचीवनान्तरे ।
गम्यं तत्राऽपि शिशिरवसन्ताख्यावृतू स्थिरौ ॥ ३८ ॥
ततः प्रासाद एवाऽत्राऽऽगम्यमौत्सुक्यसम्भवे ।
दक्षिणस्या वनेऽमुष्मिन् गन्तव्यं न कथञ्चन ॥ ३९ ॥
यतस्तत्रामितच्छायो भुग्नकायो द्विजिह्वकः ।
अस्ति दृष्टीविषः सर्पो वर्णीभूतोऽवनिस्त्रियः ॥ ४० ॥
एवमुक्त्वा ययावेषा माकन्दितनयौ च तौ ।
वनखण्डत्रये तस्मिन् गच्छतः स्म पुरोदिते ॥ ४१ ॥
अथाचिन्तयतां चैवं दक्षिणस्या दिशो वने ।
पौनःपुन्येन गच्छन्तौ तयाऽऽवां वारितौ कथम् ॥ ४२ ॥
चिन्तयित्वेति साशङ्कौ 'यावन्तौ तत्र गच्छतः ।
प्रविवेश तयोस्तावद् घ्राणे गन्धः सुदुःसहः ॥ ४३ ॥

---

(१) ग यावत्तौ दक्षिणां गतौ । ज द यावत्तत्रैयतुस्तकौ ।

स्थगयित्वोत्तरीयेण नासारन्ध्रे ततश्च तौ ।
राशिं नरकरङ्काणां वने तस्मिन्नपश्यताम् ॥ ४४ ॥
भयभीतौ विशेषेणाऽऽलोकयन्तावटो वनम् ।
नरमेकं च तौ प्रेक्षाञ्चक्राते शूलिकागतम् ॥ ४५ ॥
जीवन्तं विलपन्तं च दृष्ट्वा पपृच्छतुश्च तम् ।
कस्त्वं भद्र ! कथं वा तेऽवस्थेयं के त्वमी शवाः ॥ ४६ ॥
सोऽप्यवोचत [1]कायन्दीपुर्वास्तव्योऽस्म्यहं वणिक् ।
भग्नं वारिनिधौ यानं वाणिज्येनाऽऽगतस्य मे ॥ ४७ ॥
[2]ततश्चेहागतो रत्नद्वीपदेव्याऽभिकामितः ।
स्तोकापराधेऽप्यन्येद्युस्तयैवं निहितोऽस्म्यहम् ॥ ४८ ॥
तयैवं [3]विहताश्चैतेऽनया प्रक्रियया शवाः ।
तद् युवां कुत आयातौ प्राप्तौ चास्या गृहे कथम् ॥ ४९ ॥
ततस्तावात्मनो वार्तां निवेद्य तमपृच्छताम् ।
भद्र ! नौ जीवनोपायः कोऽप्यस्त्येवंस्थिते सति ॥ ५० ॥
सोऽवदच्छैलको नाम्ना यक्षः पूर्ववनेऽस्ति भोः ! ।
सोऽश्वरूपधरः पर्वदिनेष्वेवं प्रजल्पति ॥ ५१ ॥
कं रक्षामि नरं कं वा विपदं तारयाम्यहम् ।
तद् गत्वा यक्षराजं तं भक्त्याऽऽराधयतं युवाम् ॥ ५२ ॥

(१) ङ ज, काकन्दीपुर्या वास्तव्योऽहं वणिक् । ज ञ ट ठ ढ ण त थ द, कायन्दी-पुर्य्यश्चानामहं वणिक् । च, कायन्दीपुर्यस्त्यस्यामहं वणिक् ।

(२) ङ ञ ण इतश्चे-

(३) ण निहता-

उद्घोषणायां जातायामावां रक्षेति जल्पतम् ।
इति शिक्षां तयोर्दत्त्वा स नरः संस्थितस्ततः ॥ ५३ ॥
पूजयामासतुः पुष्पैर्यक्षं गत्वा च तत्र तौ ।
आवां निस्तारयेत्याशु तदुक्तौ च जजल्पतुः ॥ ५४ ॥
उवाच शैलको निस्तारयिष्यामि युवामहम् ।
एकं त्ववहितौ भूत्वा वाक्यं संशृणुतं मम ॥ ५५ ॥
युवयोर्गच्छतोः पृष्ठे देवता सा समेष्यति ।
सानुरागसकामानि जल्पिष्यति वचांस्यपि ॥ ५६ ॥
अनुरागं ततस्तस्यां युवां यदि करिष्यथः ।
ततश्चोल्लालयित्वाऽहं प्रक्षेप्स्यामि महोदधौ ॥ ५७ ॥
यदि वा निरपेक्षौ हि तस्यां ननु भविष्यथः ।
ततः क्षेमेण चम्पायां प्रापयिष्यामि निश्चितम् ॥ ५८ ॥

॥ किं बहुना ॥

संमाननं न दृष्ट्याऽपि तस्याः कार्यं कथञ्चन ।
न भेत्तव्यं भयं तस्यां दर्शयन्त्यामपि स्फुटम् ॥ ५९ ॥
व्यवस्थयाऽनया त्वं भोः ! शक्तौ निर्वाहितुं यदि ।
तन्ममाऽऽरूहतं पृष्ठं शीघ्रं येन नयाम्यहम् ॥ ६० ॥
ततस्तत्पृष्ठमारूढौ तावङ्गीकृत्य तद्वचः ।
उत्पत्य नभसा सोऽपि ययौ मध्येमहोदधेः ॥ ६१ ॥
अत्रान्तरे च देवी साऽपश्यन्ती तौ स्ववेश्मनि ।
बभ्राम वनखण्डेषु तत्राऽप्येतौ ददर्श न ॥ ६२ ॥

ततो ज्ञानोपयोगेन ज्ञात्वा तद्गमनं तयोः ।
दधावे खड्गमादाय पृष्ठे कोपपराऽसकौ ॥ ६३ ॥
दृष्ट्वा च तावुवाचैवं रे ! किं याथो विमुच्य माम् ।
पुनरागच्छतं स्वस्य जीवितं वाञ्छतो यदि ॥ ६४ ॥
नोचेदनेन खड्गेन पातयिष्यामि वां शिरः ।
तयेत्युक्तोऽथ यक्षेण भणितौ ताविदं पुनः ॥ ६५ ॥
मम पृष्ठे स्थितावस्या मा भैष्टं भोः ! कथञ्चन ।
इति संधीरितावेतौ स्थिरचित्तौ बभूवतुः ॥ ६६ ॥
ततोऽनुकूलवाक्यानि जजल्पैवमसौ यथा ।
मां मुक्त्वैकाकिनीं दीनां क्व प्रियौ प्रस्थितौ युवाम् ॥ ६७ ॥
इत्यादिदीनवचनैस्तया भणितयोरपि ।
न चचाल तयोश्चित्तं यक्षावष्टम्भशालिनोः ॥ ६८ ॥
ततोऽसौ भेदनिष्णाता प्रत्यूचे जिनरक्षितम् ।
मम प्रियो विशेषेण त्वमेवासि महाशय ! ॥ ६९ ॥
ईक्षणाऽऽलापसंमानक्रियासाम्येऽपि देहिनाम् ।
चित्ताह्लादकरं प्रेम कस्मिंश्चिदपि जायते ॥ ७० ॥
एवं ममाऽपि कुर्वत्या युवाभ्यां सह सङ्गतिम् ।
जिनरक्षित ! सद्भावे स्नेहस्त्वय्येव निश्चलः ॥ ७१ ॥
तदेहि देहि हे कान्त ! ममैकान्तरतेः सुखम् ।
अन्यथाऽहं मरिष्यामि त्वद्वियोगरुजाऽर्दिता ॥ ७२ ॥
नाथानाथां म्रियमाणां दृष्ट्वा मां किं न वीक्षसे ।
ददाति रागिणी प्राणानित्यर्थे संशयो नु किम् ॥ ७३ ॥

तत्कूटमोहितः सोऽथ तत् सत्यमिति चिन्तयन् ।
दृष्ट्याऽऽलोकयते स्मास्या दुर्गतेरिव संमुखम् ॥ ७४ ॥
यक्षेणोल्लालयित्वाऽथ क्षिप्तः सोऽथ स्वपृष्ठतः ।
तया नीरमसंप्राप्तस्त्रिशूलेन प्रतीच्छितः ॥ ७५ ॥
लभस्व पाप ! रे सद्यो मम वञ्चनजं फलम् ।
इत्युदित्वा च खड्गेन खण्डयित्वा निपातितः ॥ ७६ ॥
ततश्च कूटकपटरचनानाटिका नटी ।
प्रत्याययितुमारेभे चाटुभिर्जिनपालितम् ॥ ७७ ॥
यक्षेण भणितः सोऽथ यद्यस्या वचने रुचिः ।
भविष्यति गतिस्तत्ते कनिष्ठस्येव निश्चितम् ॥ ७८ ॥
जातो निश्चलचित्तोऽसौ तं कूटमवधूय तत् ।
क्षेमेण सह यक्षेण प्राप्तः चम्पापुरीं निजाम् ॥ ७९ ॥
वलिता व्यन्तरी साऽथ यक्षोऽपि वलितः सकः ।
क्षामितः कृतकृत्येन श्रेष्ठिपुत्रेण भक्तितः ॥ ८० ॥
गेहे गत्वा स्वलोकस्य मिलितो जिनपालितः ।
कथयामास तद्बन्धुमरणं शोकमङ्कुलम्[1] ॥ ८१ ॥
मृतकार्याणि तस्याऽथ माकन्दी स्वजनान्वितः ।
विधाय पालयामास गृहवासं सुतश्च सः ॥ ८२ ॥
अन्यदा समवासार्षीत् तत्र वीरजिनेश्वरः ।
तं नन्तुं जग्मतुश्चैतौ माकन्दिजिनपालितौ ॥ ८३ ॥

(१) ङ च छ शोकसंकुल ।

श्रुत्वा तदन्तिके धर्मं प्रतिबुद्धौ महाशयौ ।
जातव्रतपरीणामौ जिनं नत्वेयतुर्गृहम् ॥ ८४ ॥
पौत्रे भारं कुटुम्बस्य विन्यस्य सुतसंयुतः ।
स श्रेष्ठी परिवव्राज श्रीवीरजिनसन्निधौ ॥ ८५ ॥
पित्रा समन्वितः सोऽथ जिनपालितसंयुतः ।
स्वकार्यसाधको जज्ञे तपः कृत्वा सुदुश्चरम् ॥ ८६ ॥
कथयित्वा कथामेतां धर्मघोषमुनीश्वरः ।
राजर्षेरमरस्योपनयं कथयति स्म सः ॥ ८७ ॥
यथा तौ वणिजौ तद्वद् जीवाः संसारिणोऽखिलाः ।
रत्नद्वीपदेवतेवाऽविरतिः परिकीर्तिता ॥ ८८ ॥
तथाऽविरतिजं दुःखं यथाऽस्याः शवसञ्चयः ।
शूलागतनरो यद्वद् हितभाषी गुरुस्तथा ॥ ८९ ॥
यथा तेन तत्स्वरूपमनुभूतं निवेदितम् ।
तथैवाविरतेर्दुःखं गुरुराख्याति देहिनाम् ॥ ९० ॥
यथाऽसौ शैलको यक्षस्तारकः संयमस्तथा ।
समुद्र इव संसारस्तरणीयोऽमुना ध्रुवम् ॥ ९१ ॥
यथा तस्या वशीभूतो विनष्टो जिनरक्षितः ।
तथैवाऽविरतेर्जन्तुर्वशीभूतो विनश्यति ॥ ९२ ॥
देवतोक्तिनिराकाङ्क्षी यक्षादेशमखण्डयन ।
क्षेमेण स्वपुरं प्राप्तो यथाऽसौ जिनपालितः ॥ ९३ ॥
विरतोऽविरतेस्तद्वच्चारित्रमविराधयन् ।
निष्कर्मा जायते प्राणी निर्वाणसुखभाजनम् ॥ ९४ ॥

तद् भोः ! प्रपद्य श्रामण्यं पुनर्भोगेषु नो मनः ।
कर्त्तव्यमिति सन्दिष्टे गुरुणा मुमुदे मुनिः ॥ ९५ ॥
समर्पिता प्रवर्तिन्यास्ततोऽसौ रत्नमञ्जरी ।
कृत्वोदारं तपस्तौ द्वौ संप्राप्तौ परमं पदम् ॥ ९६ ॥

॥ इति मित्रानन्दामरदत्तकथानकं समाप्तम् ॥

स्वयंप्रभमुनेर्धर्मोपदेशमतिपावनम् ।
श्रुत्वैवं प्रतिबुद्धोऽसौ राजा स्तिमितसागरः ॥ ९७ ॥
अनन्तवीर्यं भूपत्वे, कुमारत्वेऽपरं सुतम् ।
विन्यस्यास्य मुनेः पार्श्वे स दीक्षां समुपाददे ॥ ९८ ॥
विराध्य मनसा किञ्चित् सोऽन्तकालेऽनगारताम् ।
मृत्वाऽधो भुवने जज्ञे चमरेन्द्रोऽसुराऽधिपः ॥ ९९ ॥
इतोऽपराजितानन्तवीर्ययोर्विभुताजुषोः ।
विद्याधरेण केनाऽपि मैत्री समभजायत ॥ ५०० ॥
दत्ता विद्यास्तेन ताभ्यां विहायोगमनक्षमाः ।
सर्वा तत्साधनोपायसामग्री च निवेदिता ॥ १ ॥
बर्बरीति चिलातीति गीतनाट्यकलाविदौ ।
तयोर्बभूवतुर्दास्यौ विनोदास्पदमद्भुतम् ॥ २ ॥
अन्यदा स्थानमासीनौ सन्नाट्यक्रियया तयोः ।
अभूतां व्याकुलौ यावत् तौ बन्धू रङ्गनिर्भरौ ॥ ३ ॥
तावत् तत्र ब्रह्मचारी स्वेच्छाचारी कलिप्रियः ।
सम्यग्दर्शनपुण्यात्मा नारदर्षिरुपाययौ ॥ ४ ॥

नासाव[1]भ्युत्थितस्ताभ्यामाक्षिप्ताभ्यां ततश्च सः ।
रुष्टो व्यचिन्तयदिमौ चेटीनाट्येन मोहितौ ॥ ५ ॥
वित्तो मामपि नायातं ततोऽमू चेटिके ध्रुवम् ।
महामाने कलापात्रे हारयिष्यामि केनचित् ॥६॥ (युग्मम्)
विद्याधराधिराजस्य त्रिखण्डविजयेशितुः ।
प्रतिविष्णोर्दमितारेः सकाशे स ययौ ततः ॥ ७ ॥
अभ्युत्थानादिसत्कारं कृत्वाऽसावासनस्थितम् ।
पप्रच्छ तं मुनिं दृष्टं पृथिव्यां किञ्चिदद्भुतम् ॥ ८ ॥
सोऽवदच्छृणु राजेन्द्र ! सुभगायाः पुरो विभोः ।
अनन्तवीर्यभूपस्य समीपे गतवानहम् ॥ ९ ॥
[2]तद्बर्बरिचिलात्याख्यचेट्योर्नाट्यक्रिया वरा ।
मयाऽवलोकिता तत्र विश्वविस्मयकारिणी ॥ १० ॥
किं विद्याभिः प्रचण्डाभिः किं राज्येन किमाज्ञया ।
ते विना तव भूपेति गदित्वा नारदो ययौ ॥ ११ ॥
तेनाऽथ प्रेषितो दूतः स गत्वा तत्र सत्वरम् ।
इदमूचे तयोरग्रे स्वस्वामिबलगर्वितः ॥ १२ ॥
हंहो भवन्ति रत्नानि राजगामीनि निश्चितम् ।
चेट्यौ नाट्यविधायिन्यौ तदेते अर्प्यतां प्रभोः ॥ १३ ॥

---

(१) द अर्चित- ।

(२) त ठ तद्बर्बरिचिलात्याख्ये चेट्यौ नाट्यक्रियावरे ।
मया विलोकिते तत्र विश्वविस्मयकारिके ॥ १० ॥

तावेवमूचतुर्भद्र ! युक्तं त्वं ननु जल्पसि ।
आलोच्यैतत् करिष्यावो याहि त्वं स्वामिनोऽन्तिके ॥ १४ ॥
दूतं विसृज्य तावेवं मन्त्रयांचक्रतुर्यथा ।
विद्याबलेन नौ तावत् करोत्येष पराभवम् ॥ १५ ॥
आवामपि ततो विद्याः साधयित्वा स्वचित्तगाः ।
दर्पमस्य हरिष्याव इति चिन्तयतोस्तयोः ॥ १६ ॥
पूर्वजन्मसाधितास्ताः स्वयमेवोपतस्थिरे ।
प्रणमित्वा सिद्धमात्मानं विविशुश्च तदन्तिके ॥ १७॥(युग्मम्)
जातौ विद्याधरौ तौ द्वौ तत्प्रभावान्महौजसौ ।
विद्यानां चक्रतुश्चार्चां गन्धमाल्यादिवस्तुभिः ॥ १८ ॥
अत्रान्तरे पुनर्दूतः प्राप्तस्तस्य महीपतेः ।
जजल्पैवमहो मृत्योरतिथी किं भविष्यथः ॥ १९ ॥
येन नाद्याऽपि चेट्यौ ते कृते प्रेषयथः प्रभोः ।
तावूचतुश्च कर्तव्यमवश्यं स्वामिनो हितम् ॥ २० ॥
ततस्तद्दुहितुः स्वर्णश्रियो लोभेन तावुभौ ।
चेट्यो रूपं तयोः कृत्वा जग्मतुस्तत्पुरे द्रुतम् ॥ २१ ॥
कलाकौशलमालोक्य भणितौ तौ महीभुजा ।
युवाभ्यां करणीयो हि विनोदः कनकश्रियः ॥ २२ ॥
यथोतुर्दुग्धरक्षायां क्षुद्रान् सिद्धान्नरक्षणे ।
हृष्टो भवेत् तथाऽभूतां तदादेशे नृपस्य तौ ॥ २३ ॥
सा कामगृहिणीरूपा दृष्टा ताभ्यां सुकन्यका ।
सर्वोपमादलौघैर्या विधिनेव विनिर्मिता ॥ २४ ॥

आभाषि भावमधुरैः परिहासमनोहरैः ।
देशीभाषासगर्भैश्च प्रियालापैः ससंभ्रमम् ॥ २५ ॥
पप्रच्छ साऽथ तत्पार्श्वेऽनन्तवीर्यस्वरूपताम् ।
ततोऽपराजितोऽशंसत् तदग्रे तद्गुणानिति ॥ २६ ॥
रूपचातुर्यगाम्भीर्यवीर्यौदार्यादिसद्गुणाः ।
शक्या ह्यनन्तवीर्यस्य शंसितुं नैकजिह्वया ॥ २७ ॥ (युग्मम्)

किञ्च

कुटिलः सरलाङ्गेन विश्रुतिः श्रुतिशालिना ।
शेषोऽपि निर्जितो येन क्षमाभृद् बिभ्रता क्षमाम् ॥ २८ ॥
सञ्जातरोमहर्षां तां दृष्ट्वा पुनरभाषत ।
यद्यस्ति कौतुकं तत्ते दर्शयाम्यधुनैव तम् ॥ २९ ॥
श्रामेति तकया प्रोक्ते तावभूतां स्वरूपिणौ ।
दृष्ट्वा जगाद सा चाहं युष्मदाज्ञाकरी खलु ॥ ३० ॥
विष्णुः प्रोवाच यद्येवमेहि यामो निजां पुरीम् ।
जजल्प सा च मत्तातो विधाता वां पराभवम् ॥ ३१ ॥
[1] भणिता सा ततस्ताभ्यां भेतव्यं न हि सर्वथा ।
आवयोः समरे नैष पुरः स्थातुं क्षणं क्षमः ॥ ३२ ॥

---

[1] ङ अ ठ ण द पुस्तकेषु भूयान् पाठभेद एषः
भणिता सा ततस्ताभ्यां भेतव्यं सुभ्रु न त्वया ।
आवां त्वज्जनकं जेतुं शक्तौ समनवाहनम् ॥ ३२ ॥

तयोरिति वचः श्रुत्वा प्रेमपाशनियन्त्रिता ।
विस्मिता रूप[1]सूर्याभ्यामाभ्यां सह चचाल सा ॥ ३३ ॥
विमानं विद्यया कृत्वा समारुह्य नभःस्थितः ।
उवाचानन्तवीर्योऽथ दमितारिं सदःस्थितम् ॥ ३४ ॥
भो भोः ! सामन्तमन्त्र्याद्याः ! सेनाध्यक्षाः ! नृपस्य ये ।
शृण्वन्त्वपहरन्नस्मि सुतां युष्मत्पतेरिमाम् ॥ ३५ ॥
न वाच्यं तेन भावेन [2]गृहीताऽस्माकमजानताम् ।
इत्युदीर्य्यानन्तवीर्यो नभोऽगात् सपरिग्रहः ॥ ३६ ॥
तदाकर्ण्य ज्वलत्कोपकरालः प्रतिकेशवः ।
रे रे ! गृह्णीत गृह्णीत दुरात्मानममुं जवात् ॥ ३७ ॥

(१) क भ ठ त, रूपशौर्याभ्यां ।
(२) भ हृताऽस्मा- । ठ -नाप्याह्याऽ- ।

ततः सा प्रस्थिताऽनन्तवीर्येणैवमथोदितम् ।
सर्वे शृणुत भो लोकाः ! दमितारिश्च भूपतिः ॥ ३३ ॥
अनन्तवीर्यनामाऽहं निजभ्रातृसमन्वितः ।
सहसा हरामि कनकश्रियं स्नेहवतीमिमाम् ॥ ३४ ॥
विद्याविनिर्मितविमानाऽधिरूढौ ततश्च तौ ।
नभसा गन्तुमारब्धौ तां गृहीत्वा नृपात्मजाम् ॥ ३५ ॥
दमितारिनृपेणाऽथ प्रेषिताः सुभटा निजाः ।
तदोत्पन्नास्त्ररत्नाभ्यां *सुभटास्ते पराजिताः ॥ ३६ ॥
दमितारिः स्वयं सोऽथ महाबलसमन्वित ।
हन्तुमेतावधाविष्ट दुष्टो दष्टाधरः क्रुधा ॥ ३७ ॥

* ज ण द ताभ्यां सद्यः पराजिताः ।

खेचरा हुं प्रकुर्वन्तः क्व गमिष्यसि दुर्मते ! ।
अन्वधावन् गृहीतास्त्रा मृगारेरिव जम्बुकाः ॥ ३८ ॥
एतान् विद्रावयामास तृण्यां वायुः क्षणादिव ।
विष्णुस्तांश्च तथा दृष्ट्वा दमितारिरथाचलत् ॥ ३९ ॥
कल्पान्त इव पाथोधिर्बलोर्मिकुलसङ्कुलः ।
गजाश्वपत्तिग्रा[१]हाक्रान्तस्तद्विरावघनध्वनिः ॥ ४० ॥
तमायान्तमथालोक्य भीरुं भयसमाकुलाम् ।
आश्वास्य रचयामास नागकारि रिपोर्बलम् ॥ ४१ ॥
तयोर्नासीरवीराणां प्रतिकेशवशार्ङ्गिणोः ।
कलिः कलकलारावसङ्कुलः समभूत् तदा ॥ ४२ ॥

---

(१) क ख. -ग्राहोग्र- ।

कृतान्तमिव संक्रुद्धं समायान्तं विलोक्य तम् ।
बिभाय कनकश्रीः सा ताभ्यां चाश्वासिता पुनः ॥ ३८ ॥
संग्रामे संमुखीनौ तावित्युक्तौ दमितारिणा ।
भो ! भोः ! समर्प्य मे पुत्रीं जीवन्तौ गच्छतं युवाम् ॥ ३९ ॥
लभेतां मा पतङ्गत्वं मम कोपहुताशने ।
तावूचतुश्च याहि त्वं मा म्रियस्व मुधैव रे ! ॥ ४० ॥
ततोऽपराजितानन्तवीर्ययोः समुपस्थितम् ।
चतुरङ्गबलं ताभिर्विद्याभिर्विहितं क्षणात् ॥ ४१ ॥
क्षणमेकमथो युद्धमुभयोः सैन्ययोरभूत् ।
विपक्षस्य विस्मयोऽधायि विद्याजनितमायया ॥ ४२ ॥

प्रत्यनीकभटैर्भग्नं वीक्ष्य सैन्यं निजं हरिः ।
किञ्चिच्चिन्तावशो जज्ञे रत्नान्युत्पेदिरे तदा ॥ ४३ ॥
वनमाला गदा खड्गो मणिः शङ्खो धनुस्तथा ।
प्रत्यर्द्धचक्रिणश्चक्रं सप्तमं तद् भविष्यति ॥ ४४ ॥
पाञ्चजन्यमथादायानन्तवीर्यो महौजसा ।
दध्मौ ध्वानेन तस्याशु शत्रुसैन्यं मुमूर्च्छ च ॥ ४५ ॥
बलमुत्साहवत् जातं निजं विष्णोस्तदाऽखिलम् ।
सर्वाभिसारतस्तावद् डुढौके दमितार्यपि ॥ ४६ ॥
संवर्म्य रथमारुह्य शस्त्राण्यादाय भूरिशः ।
उत्तस्थौ केशवश्चापि तथैव ह्यपराजितः ॥ ४७ ॥

---

उपशान्ते ततस्तस्मिन् दमितारिर्महाभुजः ।
युध्यते स्म समं ताभ्यां दिव्यास्त्रैस्तिमिरादिभिः ॥ ४३ ॥
तानि शस्त्राणि तस्याशु प्रतिशस्त्रैर्महाभुजौ ।
निर्भाग्यस्येप्सितानीव विफलीचक्रतुस्तकौ ॥ ४४ ॥
जातसर्वास्त्रवैफल्यो दमितारिरमर्षणः ।
दध्यौ हा धिक् कथमहं शत्रुणाऽनेन निर्जितः ॥ ४५ ॥
विफलत्वं यथा जग्मुर्दिव्यास्त्राण्यखिलान्यपि ।
भविता चक्रमप्ये*वं प्रतिहन्तृ तथैव किम् ॥ ४६ ॥
किं वा प्रनष्टमेवेदं नायात्यद्यापि यत् करे ।
इति चिन्तापरस्यास्य हस्ते तच्छीघ्रमाययौ ॥ ४७ ॥

---

* अ ट चक्रमप्येतं ।

वहन्ति चासृजां नद्यो मौलिपङ्कजभीषणा: ।
नृत्यन्ति च कबन्धानि रणरङ्गावनौ तदा ॥ ४८ ॥
दमितारिप्रयुक्तानि शस्त्राण्यपि क्षणात् पुन: ।
सर्वाण्यनाशयत् शार्ङ्गी नवोदयवशात् तदा ॥ ४९ ॥
दीपयन्तं दिशश्चक्रं स्मृतमात्रमुपागतम् ।
मुक्तमेतेन तुम्बेनाहत्य तस्थौ करे हरे: ॥ ५० ॥
तदादाय जगौ विष्णुर्भुङ्क्ष्व राज्यं म्रियस्व मा ।
कनकश्रीपितेति त्वं मया मुक्त: प्रयाहि भो: ! ॥ ५१ ॥
सोऽवोचन्मयका मुक्तं यथा मोघमभूदिदम् ।
तथा त्वया विनिर्मुक्तमपि भावीति मे मति: ॥ ५२ ॥
अथवा मण्डलाग्रेण तच्चक्रं त्वां च घातकम् ।
अनेन खण्डयिष्यामीत्युक्त्वाऽधावत सोऽम्बरे ॥ ५३ ॥
खड्गखेटकभृत् खस्याभिमुखं च समापतन् ।
अनन्तवीर्यमुक्तेन चक्रेणाशु निपातित: ॥ ५४ ॥

---

तत् तेन मुक्तमागत्यानन्तवीर्यस्य वक्षसि ।
विशाले लगति स्मोरुनाभिना न तु धारया ॥ ४८ ॥
क्षणमेकमसौ मूर्च्छां लेभे घातेन तस्य च* ।
तस्यावस्थैव सविधे भेदिना†ऽन्येन भेदितम ॥ ४९ ॥
ततोऽसौ तत समादाय दमितारिमदोऽवदत् ।
अरे ! त्वं निजचक्रेण मन्मुक्तेन मरिष्यसि ॥ ५० ॥

---

* ज ण. तत ।
† ज ण ट. भेदनीन्येव भेदितम ।

ततश्चानन्तवीर्यस्योपरि पुष्पभरोऽम्बरात् ।
विमुक्तो व्यन्तरैरेवं प्रजल्पद्भिः प्रमोदतः ॥ ५५ ॥
संजातो वासुदेवोऽयं विजयार्द्धपतिर्बली ।
द्वितीयो बलदेवश्च तच्चिरं जयतामिमौ ॥ ५६ ॥
विद्याधरभटास्तेऽथानन्तवीर्यं समाश्रिताः ।
कृतप्रणामास्तेनापि सर्वे संमानिता इमे ॥ ५७ ॥
ततोऽपराजितानन्तवीर्यौ विद्याधरान्वितौ ।
रम्यं विमानमारूढौ चेलतुः स्वपुरीं प्रति ॥ ५८ ॥
कनकाद्रावथ प्राप्तौ प्रोक्तौ विद्याधरैरिमौ ।
सन्त्यत्र जिनचैत्यानि युज्यन्ते तानि वन्दितुम् ॥ ५९ ॥
ततोऽवतीर्य्य चैत्यानि वन्दित्वा तानि भक्तितः ।
तत्रावलोकितस्ताभ्यां मुनिः कीर्तिधराभिधः ॥ ६० ॥
वर्षोपवासतपसोत्पन्नकेवलचक्षुषः ।
तस्यर्षेश्चरणावेतौ नेमतुः परया मुदा ॥ ६१ ॥
उपविश्य धरापीठे हर्षोदञ्चितविग्रहौ ।
इति शुश्रुवतुश्चास्य विशुद्धां धर्मदेशनाम् ॥ ६२ ॥

तद्यथा --

मिथ्यात्वमविरतिश्च कषाया दुःखदायिनः ।
प्रमादा दुष्टयोगाश्च पञ्चैते बन्धकारणम् ॥ ६३ ॥
यद् देवत्वमदेवेषु गुरुत्वमगुरौ तथा ।
अतत्त्वे तत्त्वबुद्धिश्च तन्मिथ्यात्वं प्रकीर्त्तितम् ॥ ६४ ॥

---

म च ज ठ -शोभो ।

यत्र कर्मसु पापेषु न स्तोकमपि वर्जनम् ।
जानीथोऽविरतिं तां हि सर्वदुःखनिबन्धिनीम् ॥ ६५ ॥
कोपो मानश्च माया च लोभश्चेति निवेदिताः ।
मूलं संसारवासस्य कषाया जिनशासने ॥ ६६ ॥
क्षान्तेर्विपर्ययः कोपो मानोऽमार्दवसंज्ञितः ।
मायाऽऽर्जवस्य वैरूप्यं लोभो मुक्तेर्विपर्ययः ॥ ६७ ॥
मदिरा विषयाश्चैव निद्राश्च विकथास्तथा ।
प्रमादाः कथिताः पञ्च कषायसहिता इमे ॥ ६८ ॥
काष्ठपिष्टादिनिष्पन्ना कथिता मदिरा द्विधा ।
शब्दरूपरसगन्धस्पर्शाख्या विषयास्तथा ॥ ६९ ॥
निद्रा च निद्रानिद्रा च तृतीया प्रचलाऽभिधा ।
प्रचलाप्रचला तुर्या स्त्यानर्द्धिः पञ्चमी भवेत् ॥ ७० ॥
[1]सुखबोधा भवेन्निद्रा दुःखबोधाऽतिनिद्रिका ।
प्रचला संनिविष्टस्य चतुर्थी गच्छतो भवेत् ॥ ७१ ॥
दिनचिन्तितकार्यस्य साधनी पञ्चमी [2]पुनः ।
सा तूदये भवेज्जन्तोरतिसंक्लिष्टकर्मणः ॥ ७२ ॥
स्त्रीकथा भक्तवार्ता च राजदेशकथा तथा ।
चतस्रो विकथा एता वर्जनीया विवेकिना ॥ ७३ ॥

---

(१) घ ङ च ज झ. सुखबोधो भवेन्निद्रा दुःखबोधोऽति- ।
(२) घ च ज झ. भवेत् ।

मनोवचनकाया[1]ख्यास्त्रयो योगाः प्रकीर्तिताः ।
अप्रशस्ता भवन्त्येते कर्मबन्धस्य हेतवः ॥ ७४ ॥
सर्वमेतत् परित्यज्य पापकर्मनिबन्धनम् ।
विदधीत मतिं धर्मे भव्यो मुक्तिसुखप्रदे ॥ ७५ ॥
अत्रान्तरे कनकश्रीः सा पप्रच्छेति तं मुनिम् ।
अभूद्बन्धुवियोगो मे पितुर्मृत्युश्च किं प्रभो ! ॥ ७६ ॥
ततः कीर्तिधरेणोक्तं तद् भद्रे ! शृणु कारणम् ।
येन बन्धुवियोगादि तव दुःखमभूदितः[2] ॥ ७७ ॥
अस्त्यत्र धातकीखण्डे द्वीपे प्राग्भरते पुरम् ।
नाम्ना शङ्खपुरं भूरिधनधान्यसमाकुलम् ॥ ७८ ॥
काचिदुच्छिन्नसन्ताना श्रीदत्ता नाम दुर्गता ।
तत्राभूदबला कर्मकरणावाप्तजीवना ॥ ७९ ॥
पीडिता दुर्गतत्वेन निशम्य मुनिसन्निधौ ।
चकार साऽन्यदा धर्मचक्रवालाभिधं तपः ॥ ८० ॥
त्रिरात्रद्वितयं तत्र प्रथमं क्रियते तपः ।
सप्तत्रिंशच्चतुर्थानि शक्त्याऽऽर्चा गुरुदेवयोः ॥ ८१ ॥
ददौ तस्यै जनः सर्वः संप्रीतः पारणाहनि ।
मनोज्ञभक्ष्यभोज्यादि[3] तपो हि महितं जने ॥ ८२ ॥

---

(१) घ च भ -नां त्रियोगाश्च । ज -नां त्रयो- ।
(२) ख घ च ज भ -र्दित ।
(३) ख घ च ज भ द -भोज्यानि ।

तपोगुणरतेत्यस्यै कर्मणोऽस्ति महेभ्यकाः ।
[1]द्विगुणां त्रिगुणां वृत्तिं ददिरे वसनानि च ॥ ८३ ॥
जाता सकिञ्चना किञ्चिदन्येद्युर्निजवेश्मनः ।
कुड्यैकदेशात् पतितात् साऽवाप धनसञ्चयम् ॥ ८४ ॥
उद्यापनं च तपसः प्रारेभे कर्तुमन्यदा ।
पूजां जिनेन्द्रबिम्बानां विधिनाऽ[2]कारयत् ततः ॥ ८५ ॥
साधर्मिकगणे भक्त्या भोजितेऽस्या गृहाङ्गणे ।
मासोपवासी सत्साधुः सुव्रतः समुपाययौ ॥ ८६ ॥
परप्रमोदपूर्णाङ्ग्या तयाऽसौ प्रतिलाभितः ।
प्रासुकैर्भक्तपानाद्यैर्भावसारं च वन्दितः ॥ ८७ ॥
धर्मं [3]दृष्टप्रभावा सा पप्रच्छाथ तदन्तिके ।
सोऽवदत् साम्प्रतं धर्मदेशना न हि साम्प्रतम् ॥ ८८ ॥
यदि ते धर्मशुश्रूषा ततः काल उपाश्रये ।
आगत्य विधिना भद्रे ! श्रव्यो धर्मः सविस्तरः ॥ ८९ ॥
इत्युक्त्वा स्वाऽऽश्रयं गत्वा रागादिरहितोऽथ सः ।
विधिना पारणं चक्रे स्वाध्यायं च ततः क्षणम् ॥ ९० ॥
पुरलोकस्तदा तत्र श्रीदत्ता च समाययौ ।
प्रणम्य मुनिवर्यं तं तत्पुरो निषसाद च ॥ ९१ ॥

---

(१) ख ग घ च ज झ द्विगुणप्राज्यभोज्यानि ।
(२) ख घ च ज झ कामितप्रदाम ।
(३) ख ग घ झ दृष्टफलं दृष्ट्वा । च ज दृष्ट्वा फलं दृष्ट्वा सा पप्रच्छ ।

धर्मलाभाऽऽशिषं दत्त्वा स मुनिर्धर्मदेशनाम् ।
विदधे प्रतिबोधार्थं श्रीदत्ताया जनस्य च ॥ ९२ ॥

तद्यथा—

धर्मादर्थस्तथा कामो धर्मान्मोक्षोऽपि जायते ।
चतुर्वर्गे ततस्तस्य मुख्यता परिकीर्तिता ॥ ९३ ॥
अयमर्थोऽपरोऽनर्थ इति निश्चयशालिना ।
भावनीया अस्थिमज्जा धर्मेणैव विवेकिना ॥ ९४ ॥
श्रीदत्ता स्माह भगवन्नस्थिमज्जाऽधिवासना ।
अमूर्तेन हि धर्मेण कथङ्कारं विधीयते ॥ ९५ ॥
ततोऽसौ सुव्रतः साधुस्तस्याः पौरजनस्य च ।
दृष्टान्तं कथयामासेप्सितार्थस्य निवेदकम् ॥ ९६ ॥
आसीदुज्जयिनीपुर्यां जितशत्रुर्महीपतिः ।
तत्प्रिया धारिणी नाम्नी नरसिंहश्च तत्सुतः ॥ ९७ ॥
कलाकलापसम्पूर्णः सोऽथ संप्राप्तयौवनः ।
रम्या द्वात्रिंशतं कन्यास्तातेन परिणायितः ॥ ९८ ॥
शरत्कालेऽन्यदा तत्र पुरेऽरण्यात् समाययौ ।
करी कश्चित् मदोन्मत्तः शङ्खश्वेतो नगोन्नतः ॥ ९९ ॥
कृतान्तमिव तं क्रुद्धं जनविप्लवकारिणम् ।
करिणं कथयामास पुमान् कोऽपि महीपतेः ॥ १०० ॥
तेनाथ प्रेषितं सैन्यं दैन्यं भेजे पुरोऽस्य तत् ।
स्वयमेव महीपालश्चचाल सबलस्ततः ॥ १ ॥

नरसिंहकुमारोऽथ विनिवार्य्य महीपतिम् ।
दमनार्थमिभस्यास्य प्राचलत्सेनया सह ॥ २ ॥
दीर्घो नव करान् समोन्नतश्च त्रींश्च विस्तृतः ।
दीर्घदन्तकरस्तुच्छपुच्छो मधुपिशङ्गदृक् ॥ ३ ॥
चत्वारिंशत्समधिकैर्लक्षणानां चतुःशतैः ।
अलङ्कृतः करीन्द्रोऽयं कुमारेण निरीक्षितः ॥ ४ ॥ (युग्मम्)
अभियानापसरणप्रपातोत्पतनादिभिः ।
बहुधा खेदयित्वा तं वशमानयति स्म सः ॥ ५ ॥
तस्मिन्नैरावणाकारेऽधिरूढं मेनिरे जनाः ।
कुमारमद्भुतश्रीकं साक्षादिव शचीपतिम् ॥ ६ ॥
तं गजेन्द्रमथालाने नीत्वा कलयति स्म सः ।
समुत्तीर्य्य ततस्तस्य स्वयं नीराजनां व्यधात् ॥ ७ ॥
जनकस्य समीपेऽथ स ययौ विनयान्वितः ।
विदधे जनकोऽप्यस्य परिरम्भादिगौरवम् ॥ ८ ॥
दध्यौ च जगतीभारक्षमोऽयमभवत् सुतः ।
तदेनं भूपतिं कृत्वा युज्यते मेऽनगारता ॥ ९ ॥
ततस्तं मन्त्रिसामन्तपौरलोकस्य संमतम् ।
स्वपदे स्थापयामास सुमुहूर्ते महीपतिः ॥ १० ॥
जयन्धरगुरोः पार्श्वे सोऽथ दीक्षामुपाददे ।
न्यायेन पालयामास नरसिंहनृपः [१]क्षमाम् ॥ ११ ॥

---

(१) ख घ च ज भ क्षितिम ।

अन्येद्युर्दस्युनैकेनातिप्रचण्डेन मायिना ।
अदृश्येणालक्षितेन मुष्यते स्म पुरी सका ॥ १२ ॥
महाजनेन विज्ञप्ते तस्मिन्नर्थे महीभुजा ।
आरक्षकः समादिष्टश्चौरनिग्रहहेतवे ॥ १३ ॥
पुनर्विज्ञापयामासान्येद्युर्भूपं महाजनः ।
मुषिता निखिला देव ! तस्करेण पुरी तव ॥ १४ ॥
सुरूपा यौवनस्था च या काचि[1]दबलाऽभवत् ।
साऽपि रात्रौ तस्करेण नीयते स्म बलादपि ॥ १५ ॥
वासस्थानं ततोऽस्माकं किञ्चिदन्यत् प्रदर्शय ।
निवसामो वयं तत्र नृनाथ ! निरुपद्रवाः ॥ १६ ॥
ततश्चारक्षको राज्ञा क्रुद्धेनैवं प्रजल्पितः ।
रे त्वं दृष्ट्वन् ! विना रक्षामधमर्णोऽसि [2]किं मम ? ॥ १७ ॥
महाजनेन भणितं दोषो नास्त्यस्य कश्चन ।
अमुना सबलेनापि चौरो धर्तुं न शक्यते ॥ १८ ॥
तथा मया विधातव्यं यथा भव्यं भविष्यति ।
इत्युदित्वा नरेन्द्रेण विसृष्टोऽथ महाजनः ॥ १९ ॥
वण्ठवेषो नृपो रात्रौ निर्गत्य निजमन्दिरात् ।
शङ्कास्थानेषु बभ्राम कुर्वंश्चौरगवेषणम् ॥ २० ॥
रात्रौ भ्रान्तः पुरीमध्ये बहिष्पुर्यां दिवा पुनः ।
तथाऽपि क्वापि नो दृष्टः स दुष्टस्तस्करोऽमुना ॥ २१ ॥

(१) ख घ च ज झ -दबला भवेत् ।
(२) च ज ठ किञ्चन ।

सायं मार्गरजःकीर्णस्तरुमूलस्थितो नृपः।
कषायवस्त्रमायान्तं ददर्शैकं [1]त्रिदण्डिकम् ॥ २२ ॥
स्वसमीपे समायान्तं ननाम स महीपतिः।
कुतः स्थानादागतोऽसीत्याऽऽललाप स कोऽपि तम् ॥ २३ ॥
राजा प्रोवाच द्रव्यार्थी पथिको भगवन्नहम्।
भ्रान्तोऽस्मि बहुदेशेषु विभवं क्वापि नाऽऽप्नुवम् ॥ २४ ॥
तदा त्रिदण्डिकस्तूचे ये देशा वीक्षितास्त्वया।
तेषां स्वरूपमाख्याहि नामग्राहमहो मम ॥ २५ ॥
भूपतिः स्माऽऽह चतुरशीतिसङ्ख्या हि नीवृतः।
स्वरूपमपि केषाञ्चिच्छृणु त्वं कथयाम्यहम् ॥ २६ ॥
यत्रैकवसना नार्यः प्रायो लोकः प्रियंवदः।
केशो नैवोच्यते बालो लाटदेशः स वीक्षितः ॥ २७ ॥
सुदीर्घचिकुरा मञ्जु[2]रावाः कम्बलचीवराः।
यत्र रामाः स [3]सौराष्ट्रनामा राष्ट्रो मयेक्षितः ॥ २८ ॥
नालिकेरीकदलीनां फलं शालिश्च भोजने।
नागवल्लीदलं यत्र स दृष्टः कुङ्कणो मया ॥ २९ ॥
शुचिवेषाः प्रियाऽऽलापा यत्र लोका विवेकिनः।
वैदग्धीरुचिरो देशो मया दृष्टः स गूर्जरः ॥ ३० ॥
यत्रैकभक्तिकं [4]वस्त्रमस्तं सर्वनृणां करं।
भाषाऽतिपरुषा दृष्टः स देशो मारुकाऽऽह्वयः ॥ ३१ ॥

---

(१) ङ ठ त्रिदण्डिनम्।
(२) ङ -रवाः।
(३) घ च सौराष्ट्रो नाम।
(४) ख घ वस्त्रं शस्तं।

यवेक्षवो व्रीहयश्च जायते च कृषित्रयम् ।
सर्वसाधारणो लोको मध्यदेशः स वीक्षितः ॥ ३२ ॥
गोधूमाः प्रचुरा यत्र दुष्प्रापं लवणं तथा ।
सजलः सकलोऽप्येष मालवोऽपि निरीक्षितः ॥ ३३ ॥
त्रिदण्डिवेषभृच्चौरः स सुत्वैवं व्यचिन्तयत् ।
अयं हि पथिकोऽवश्यं द्रव्यार्थी सदृशो मम ॥ ३४ ॥
बभाषे च मम त्वं चेद् भणितं भोः ! करिष्यसि ।
तन्मनोवाञ्छितं द्रव्यमचिरात् समवाप्स्यसि ॥ ३५ ॥
नृपः [1]प्रोवाच यो द्रव्यं ददाति हृदयेप्सितम् ।
न केवलमहं तस्य सर्वोऽप्याज्ञाकरो जनः ॥ ३६ ॥
सोऽवदत् सांप्रतं तर्हि वर्तते भोः ! तमस्विनी ।
पारदारिकदस्यूनां दुष्टानां च प्रियङ्करी ॥ ३७ ॥
तदुत्तिष्ठ कृपाणं त्वं करे कुरु, यथा पुरे ।
प्रविश्याऽऽनीयते द्रव्यं कुतोऽपीश्वरमन्दिरात् ॥ ३८ ॥
राजाऽपि चिन्तयामास नूनमेष स तस्करः ।
तदेनं हन्मि वा पश्याम्यथो यद्विदधात्य[2]सौ ॥ ३९ ॥
ततः खड्गं चकर्षासौ दध्यौ [3]संवीक्ष्य योग्यपि ।
ईदृशेनैव खड्गेन नगरीयो विभाव्यते ॥ ४० ॥

---

(१) ख च ज ट प्रोचे च ।
(२) च -लम ।
(३) ख घ च ज ठ तं वीक्ष्य ।

तन्मया मारणीयोऽयमुपायेन हि केनचित् ।
इति ध्यात्वाऽग्रतो गत्वा वलितोऽसौ झटित्यपि ॥ ४१ ॥
जागर्त्यद्यापि पूर्वोक्तो विश्रामं कुर्वहे ततः ।
क्षणमेकमिहाऽऽवां भोरित्यूचे च नृपं प्रति ॥ ४२ ॥
ततस्तदाऽऽज्ञया राजा चक्रे पल्लवसंस्तरौ ।
तत्रैकत्र स विश्रान्तो द्वितीये पार्थिवः स्वयम् ॥ ४३ ॥
मयि जाग्रति नैषोऽपि शयिष्यते कथञ्चन ।
चिन्तयित्वेति सुष्वाप संस्तरे सोऽथ तस्करः ॥ ४४ ॥
झटित्यथो समुत्थाय स्वस्थानेऽस्थापयन्नृपः ।
महत्काष्ठं, स्वयं चास्थात् मासिर्वृक्षस्य कोटरे ॥ ४५ ॥
त्रिदण्डी खड्गमाकृष्य तस्करोऽपि समुत्थितः ।
तत्काष्ठमभिघातेन नृपभ्रान्त्या द्विधा व्यधात् ॥ ४६ ॥
अपसार्य पटीं स्पर्शादिना विज्ञाय दारु तत् ।
धूर्तेन वञ्चितोऽस्मीति पश्चात्तापं चकार च ॥ ४७ ॥
राज्ञा सोऽभाणि रे दुष्ट ! मया त्वं मार्यसेऽधुना ।
विद्यते पौरुषं चेत् ते ततो मेऽभिमुखो भव ॥ ४८ ॥
साधु साध्विति चौरोऽपि बलात् निस्त्रिंशपाणिकः ।
संग्रामाय समं राज्ञाऽभ्यढौकिष्ट स दुष्टधीः ॥ ४९ ॥
खड्गाखड्गि चिरं कृत्वा दोष्मता पृथिवीभुजा ।
मर्मप्रदेश आहत्य पातितोऽसौ महीतले ॥ ५० ॥
विधुरस्तेन घातेन तस्करः स्माह भूपतिम् ।
सोऽहं दस्युरहो वीर ! येनेयं मुषिता पुरी ॥ ५१ ॥

अहं तावन् मरिष्यामि शृणु त्वं मम भाषितम् ।
अस्ति देवकुलस्यास्य पृष्ठे पातालमन्दिरम् ॥ ५२ ॥
तत्रास्ति प्रचुरं द्रव्यं धनदेवी च मे स्वसा ।
अन्याश्च नायिकाः सन्ति नगर्यां या मया हृताः ॥ ५३ ॥
अमुं [1]च खड्गमादाय गच्छ त्वं तत्र सत्वरम् ।
आकारयेः स्वसारं मे शिलाया विवरेण ताम् ॥ ५४ ॥
कथयेश्च मृतिं मेऽस्याः खड्गमेनं च दर्शयेः ।
ततोऽसौ [2]त्वत्प्रवेशाय द्वारमुद्घाटयिष्यति ॥ ५५ ॥
तत् सर्वं भवता ग्राह्यमथवा यद् यस्य तस्य तत् ।
अर्पयेस्त्वमिति प्रोच्य विपन्नः स मलिम्लुचः ॥ ५६ ॥
गत्वा तत्र नरेन्द्रोऽपि कृत्वा च तदुदीरितम् ।
पातालभवने तत्र प्रविष्टोऽथ ददर्श तत् ॥ ५७ ॥
विश्राम्यतु क्षणं तावत् पर्यङ्केऽत्र भवानिति ।
भणित्वा भूपतिं द्वारं पिदधे तस्करस्वसा ॥ ५८ ॥
दृष्ट्वाऽवलोकयन्तीं तां छन्नं छन्नं स्वसंमुखम् ।
साशङ्कः स्थापयामासोपधानं तत्र भूपतिः ॥ ५९ ॥
स्वयं तस्थौ च दीपस्य च्छायायां मतिमानथ ।
मुक्ता यन्त्रशिलां शय्यां बभञ्ज धनदेव्यसौ ॥ ६० ॥
ततः सा रुदती ताला जजल्पैवमहो मया ।
भव्यं कृतं यतो भ्रातृवधको विनिपातितः ॥ ६१ ॥

---

(१) ग घ च ठ मत्खड्ग- ।
(२) भ त्वद्ग्रथा सद्यो ।

धृत्वा केशेषु तां राजा प्रोचे रण्डे! भविष्यसि ।
त्वमेवं कुर्वती हन्त भ्रातुर्मार्गानुयायिनी ॥ ६२ ॥
जल्पन्ती दीनवाक्यानि ततोऽसौ प्रविमुच्य ताम् ।
द्वारमुद्घाट्य च क्षिप्रं निजं धाम समाययौ ॥ ६३ ॥
मेलयित्वा च पूर्वोक्तं वस्तु यद् यस्य तस्य तत् ।
[1]सर्वं समर्पयामास भवनं तद्बभञ्ज च ॥ ६४ ॥
आनीता: स्वस्वगेहेषु ता: स्त्रियस्तेन दस्युना ।
मोहिता न रतिं तत्र लेभिरे चञ्चलाशया: ॥ ६५ ॥
मुहुर्मुहुर्व्रजन्ति स्म दस्युस्थाने ततो जनै: ।
कथितं पार्थिवस्यैतत् तेनापि भणितो भिषक् ॥ ६६ ॥
सोऽवदद् दस्युचूर्णेन जाता एवं विधा इमा: ।
दत्त्वा स्वचूर्णं राजेन्द्र! स्वभावस्था: करोम्यहम् ॥ ६७ ॥
ततो राजाज्ञया तेन ता: कृता गतकार्मणा: ।
एका तु तदवस्थैवाऽऽचख्ये तदपि भूभुजा ॥ ६८ ॥
पृष्टोऽथ भिषगाचख्यौ देव! चूर्णेन योगिन: ।
कासाञ्चित् वासिता कृत्ति: कासाञ्चित् मांसशोणिते ॥६९॥
सर्वास्ता: प्रतिचूर्णेन स्वभावस्था: कृता मया ।
अस्यास्तु वासितास्तेनास्थिमज्जा अपि भूपते! ॥ ७० ॥
यद्यसौ घर्षयित्वाऽस्य दस्योरस्थीनि पाय्यते ।
तत: संजायते राजन्! स्वभावस्थाऽन्यथा न हि ॥ ७१ ॥

---

(1) घ च भ. स सर्वं समर्पयामास ।

तत् तथा कारयित्वाऽऽशु निर्विकारा कृताऽप्यसौ ।
नरसिंहनरेन्द्रेण सदा परहितैषिणा ॥ ७२ ॥
स श्रीजयन्धराचार्योऽन्यदा तत्र समाययौ ।
यस्य पार्श्वे पिता राज्ञो जितशत्रुरभूद् व्रती ॥ ७३ ॥
धर्मं तदन्तिके श्रुत्वा नरसिंहनृपोऽपि सः ।
प्रतिबुद्धः सुतं राज्येऽस्थापयद् गुणसागरम् ॥ ७४ ॥
ततो दीक्षामुपादाय तपः कृत्वाऽतिदुष्करम् ।
निष्कर्मा नरसिंहर्षिरवाप शिवसम्पदम् ॥ ७५ ॥

॥ इति नरसिंहऋषिकथानकम् ॥

ऊचेऽथ[1] सुव्रतो भद्रे ! यथा चूर्णेन योगिनः ।
तस्यास्तस्या नितम्बिन्या अस्थि[2]मज्जाऽधिवासिता ॥ ७६ ॥
तथा त्वमपि कल्पद्रुचिन्तामण्यधिकश्रिया ।
धर्मेण भावयात्मानं श्रीदत्ते ! दृष्टप्रत्यये ! ॥ ७७ ॥
ततोऽसौ शुद्धसम्यक्त्वमूलं धर्ममगारिणाम् ।
प्रतिपेदे मुनेस्तस्य समीपे सरलाऽऽशया ॥ ७८ ॥
व्यहार्षीन्मुनिरन्यत्र श्रीदत्ताऽपि गता गृहम् ।
प्रतिपन्नं निजं धर्मं विधिवत् पर्यपालयत् ॥ ७९ ॥
चकार साऽन्यदा कर्मपरिणामवशादिमाम् ।
धर्मस्य विषये श्राद्धी विचिकित्सां मनोगताम् ॥ ८० ॥

---

(१) च भ, च ।
(२) च भ द -मज्जा हि वासिताः ।

जैनं धर्ममिमं रम्यं यत्नतः प्रकरोम्यहम्।
परमस्य फलं भावि न वेति ज्ञायते न हि ॥ ८१ ॥
विचिकित्सामिमां कृत्वा मृत्वा चायुःक्षये सका।
सञ्जाता यत्र तदितः स्थानं सङ्कीर्तयाम्यहम् ॥ ८२ ॥
विजयेऽत्रैव वैताढ्ये नगरे सुरमन्दिरे।
राजा कनकपूज्योऽभूद् वायुवेगा च तत्प्रिया ॥ ८३ ॥
तस्य कीर्तिमतो राज्ञः पुत्रः कीर्तिधरोऽस्म्यहम्।
ममाप्यनिलवेगाख्या बभूव सहचारिणी ॥ ८४ ॥
गजकुम्भबलीवर्दस्वप्नत्रितयसूचितः।
प्रतिविष्णुर्नृपो जज्ञे दमितारिर्ममाऽऽत्मजः ॥ ८५ ॥
उद्यौवनो मया बह्वीः स कन्याः परिणायितः।
स्थापितश्च निजे राज्ये मया चाऽऽश्रिताऽनगारता ॥ ८६ ॥
दमितारेर्नृपस्यास्य मदिरा नाम वल्लभा।
तत्कुक्षिसम्भवा पुत्री कनकश्रीर्भवत्यभूत् ॥ ८७ ॥
यत् त्वया विहिता धर्मविचिकित्सा पुरा भवे।
तत् ते बन्धुवियोगादि भद्रे! दुःखमभूदिदम् ॥ ८८ ॥
निजं पूर्वभवं श्रुत्वा पितामहमुनेर्मुखात्।
जातसंसारवैराग्या दमितारिनृपात्मजा ॥ ८९ ॥
ऊचेऽपराजितानन्तवीर्याविवं कृताञ्जलिः।
चेद् युवामनुजानीथ[1]स्तदद्य प्रव्रजाम्यहम् ॥ ९० ॥

---

(१) ख घ च ज झ -स्तदाऽऽर्यौ'।

ताभ्यां सा भणिता चैवं [1]संप्राप्य सुभगापुरीम् ।
स्वयंप्रभजिनोपान्ते भूयास्त्वं व्रतिनी शुभे ! ॥ ६१ ॥
तं तपोधनमानम्य विमानमधिरुह्य च ।
तौ तया सहितौ शीघ्रं संप्राप्तौ नगरीं निजाम् ॥ ६२ ॥
स्वयंप्रभजिनोऽन्येद्युः सुरासुरनरार्चितः ।
आगत्य समवासार्षीत् सुभगायां पुरि प्रभुः ॥ ६३ ॥
गत्वा भक्त्या ववन्दाते तमिमौ बलकेशवौ ।
धर्मं शुश्रुवतुः सार्धं तया च कनकश्रिया ॥ ६४ ॥
अग्रेऽपि कनकश्रीः सा विषयेभ्यो विरक्तधीः ।
जैनीं वाचं समाकर्ण्य विशेषेणाभवत् तदा ॥ ६५ ॥
ततश्च हरिसीरिभ्यां कृतनिष्क्रमणोत्सवा ।
सा प्रवव्राज तेपे चैकावल्यादि तपो महत् ॥ ६६ ॥
शुक्लध्यानानलप्लुष्टघातिकर्मचतुष्टया ।
उत्पाद्य केवलज्ञानं संप्राप्ता परमं पदम् ॥ ६७ ॥
इतोऽपराजितस्याऽऽसीद् विरता नाम गेहिनी ।
तदङ्गसंभवा पुत्री [2]जाता सुमतिसंज्ञिका ॥ ६८ ॥
जीवाजीवाऽऽदितत्त्वज्ञा तपःकर्मसमुद्यता ।
आबाल्यादपि सा जज्ञे कुशला जिनशासने ॥ ६९ ॥
चतुर्थपारणेऽन्येद्युस्तस्या गेहे समाययौ ।
शान्तो दान्तः क्षमायुक्तो वरदत्तो महामुनिः ॥ ७० ॥

---

(१) ख घ च संभाव्य ।
(२) घ च ज झ जज्ञे ।

[1]परिवेषितया स्थाले स्वस्य पारणहेतवे ।
प्रत्यलाभि तया साधू रसवत्या मनोज्ञया ॥ १ ॥
मुनेः प्रभावतस्तस्य तत्र तद्भक्तिरञ्जितैः ।
विहितानि सुरैरासन् पञ्च दिव्यानि तत्क्षणात् ॥ २ ॥
स स्वस्थानमगात् साधुस्तद् दृष्ट्वा बलकेशवौ ।
चिन्तयामासतुः कन्या धन्येयं कृतपुण्यका ॥ ३ ॥
आलोच्य मन्त्रिणा सार्द्धं महानन्देन तौ ततः ।
कारयामासतुस्तस्याः कृते रम्यं स्वयंवरम् ॥ ४ ॥
एत्य दूतसमाहूताः सर्वेऽपि पृथिवीभुजः ।
आसीना आसनेषूच्चैः स्वयंवरणमण्डपे ॥ ५ ॥
कन्याऽपि कृतशृङ्गारा सखीवृन्दसमन्विता ।
वरमालाऽङ्कितकरा यावत् तत्र समागता ॥ ६ ॥
तावद् देवतया पूर्वभवसस्ना प्रबोधिता ।
कृतसङ्केतया तत्राऽऽगतया व्रतहेतवे ॥ ७ ॥
अनुज्ञाप्य नृपान् सर्वान् स्वयम्वरसमागतान् ।
मुरारिबलभद्राभ्यामनुज्ञाता विशेषतः ॥ ८ ॥
[2]पञ्चकन्याशतैः सार्द्धं प्रतिपद्यानगारताम् ।
समीपे सुव्रताऽऽर्यायाः सा [3]चचार तपोऽमलम् ॥९॥ (युग्मम्)
क्षपकश्रेणिमारूढा क्रमात् संप्राप्तकेवला ।
प्रतिबोधितभव्यौघा ययौ साऽपि शिवं सती ॥ १० ॥

---

(१) ग परिवेष्य- । (३) ज चचार ।
(२) ख घ भ ड. कन्या पञ्चशतैः ।

अशीतिपूर्वलक्षाणि चतुर्भिरधिकान्यथ ।
आयुः प्रपूर्य सोऽनन्तवीर्यो विष्णुर्व्यपद्यत ॥ ११ ॥
संवत्सरद्विचत्वारिंशत्सहस्रायुरादिमे ।
श्वभ्रे नारकिको जज्ञे [1]स निकाचितकर्मभिः ॥ १२ ॥
तद्वियोगेऽपरः शोकमस्तोकं विदधे ततः ।
नीतिधर्मविदग्धेन मन्त्रिणैवमभाणि सः ॥ १३ ॥
यदि मोहपिशाचेन च्छल्यन्ते त्वादृशा अपि ।
[2]तदा किमपरं धीर ! धीरता संश्रयत्वियम् ॥ १४ ॥
इति तद्वचसा किञ्चिद् गतशोको बभूव सः ।
अन्यदा गणभृत् तत्राऽऽययौ नाम्ना यशोधरः ॥ १५ ॥
विज्ञायाऽऽगमनं तस्य वन्दनार्थमगादसौ ।
भक्त्या षोडशभिर्भूपसहस्रैः परिवारितः ॥ १६ ॥
नत्वा गणधरेन्द्रं तं निषण्णोऽसौ यथास्थिति ।
कृताञ्जलिपुटो धर्मदेशनामशृणोदिति ॥ १७ ॥
शोकोऽभीष्टवियोगेन जायते दारुणो जने ।
स सद्भिः परिहर्तव्यस्तत्स्वरूपमिदं यतः ॥ १८ ॥
नामान्तरः पिशाचोऽयं पाप्मा रूपान्तरस्तथा ।
तारुण्यं तमसो ह्येष [3]विषस्यैष विशेषतः ॥ १९ ॥

---

(१) क ख ड खनिका- । ङ ऽसौ ।
(२) ङ तदा कमपरं विश्वे धीरा यं संश्रयन्ति हि ।
(३) ख ज विषयस्य ।

तस्मादिष्टवियोगाऽऽख्यमहद्रोगनिपीडितैः।
सुश्रुतोक्तक्रियायुक्तैः कार्यं धर्मौषधं महत् ॥ २० ॥

[1]सम्पदोऽत्र करिकर्णचञ्चलाः
सङ्गमाः प्रियवियोगनिष्फलाः।
जीवितं मरणदुःखनीरसं
मोक्षमक्षयमतोऽर्जयेद् बुधः ॥ २१ ॥

तां धर्मदेशनां श्रुत्वा गतशोकोऽपराजितः।
जातव्रतपरीणामो नत्वा तं गणनायकम् ॥ २२ ॥
गृहमागत्य राज्ये च स्थापयित्वा स्वनन्दनम्।
समाददे परिव्रज्यां नृपमण्डलसंयुतः ॥ २३ ॥ (युग्मम्)
बहुकालं तपस्तप्त्वा कृत्वाऽन्तेऽनशनं तथा।
विपद्याच्युतकल्पेऽसौ संजज्ञे त्रिदशेश्वरः ॥ २४ ॥
इतोऽस्य जम्बूद्वीपस्य क्षेत्रे भरतनामनि।
वैताढ्यदक्षिणश्रेण्यां पुरे गगनवल्लभे ॥ २५ ॥
मेघवाहनविद्याभृद्भूपतेर्मेघमालिनी।
बभूव गुणसंयुक्ता गेहिनी रूपशालिनी ॥ २६ ॥ (युग्मम्)
अनन्तवीर्यो नरकादुद्धृत्य समभूत् तयोः।
मेघनादाभिधः पुत्रो यौवनं समवाप सः ॥ २७ ॥
कन्या विवाह्य बह्वीस्तं स्वराज्ये विनिवेश्य च।
प्रतिपेदेऽनगारत्वं मेघवाहनभूपतिः ॥ २८ ॥

---

(१) अयं श्लोकः ग ङ ट ढ पुस्तकेष्वेव दृश्यते।

सोऽथ श्रेणिद्वयस्वामी मेघनादो [1]महामतिः ।
दशोत्तरशतं देशान् स्वसुतेभ्यो ददौ क्रमात् ॥ २९ ॥
गत्वा सुराचलेऽन्येद्युः प्रतिमाः शाश्वतार्हताम् ।
पूजयामास विद्यां च प्रज्ञप्तिं भक्तिपूर्वकम् ॥ ३० ॥
तदा तत्राऽऽययुः सर्वदेवाः कल्पनिवासिनः ।
अच्युतेन्द्रेण दृष्टोऽसौ स्नेहात् सम्भाषितस्तथा ॥ ३१ ॥
स आख्याय पूर्वभवस्वरूपं धर्मसंयुतम् ।
[2]निजं स्थानं ययौ मेघनादोऽपि खचरेश्वरः ॥ ३२ ॥
भक्त्याऽमरगुरोः पार्श्वे मुनीन्द्रस्यानगारताम् ।
प्रतिपद्य तपस्तेपे गत्वा नन्दनपर्वते ॥ ३३ ॥
अश्वग्रीवसुतजीवासुरेणास्य विनिर्मिताः ।
महोपसर्गास्तत्रैकरात्रिकीप्रतिमाजुषः ॥ ३४ ॥
प्रतिमां पारयित्वा तां विहृत्य जगतीतले ।
मृत्वा समाधिना चान्ते सोऽप्यभूदच्युतेश्वरः ॥ ३५ ॥

षष्ठो भवः सप्तमसंयुतोऽयं
कषायविच्छेदकथाविचित्रः ।
प्रोक्तो मया शान्तिजिनेश्वरस्य
करोतु कल्याणततिं [3]स सङ्घे ॥ ७३६ ॥

इत्याचार्यश्रीअजितप्रभसूरिविरचिते श्रीशान्तिनाथचरिते
षष्ठसप्तमभववर्णनो नाम तृतीयः प्रस्तावः ॥ ३ ॥

(१) ख घ च ज महीपतिः । (३) ङ च ।
(२) घ च ज झ ययौ स्थानं निजं ।

# चतुर्थः प्रस्तावः ।

इतः पूर्वविदेहेऽत्र जम्बूद्वीपस्य मध्यगे ।
विजये मङ्गलावत्यभिधे सीतानदीतटे ॥ १ ॥
तीर्थङ्करादिपुंरत्नसञ्चया रत्नसञ्चया ।
अस्ति सिद्धान्तविख्याता शाश्वता नगरी वरा ॥२॥ (युग्मम्)
दुर्नीतिवारकत्वेन प्रजायाः क्षेमकारकः ।
तत्र क्षेमङ्करो जज्ञे राजा तीर्थङ्करस्य सः ॥ ३ ॥
सतीत्वपादपाऽऽवाला सुविशाला गुणश्रिया ।
बभूव भूपतेस्तस्य रत्नमालाऽभिधा प्रिया ॥ ४ ॥
अपराजितजीवोऽसौ द्वाविंश[1]त्यर्णवस्थितः ।
अच्युतेन्द्रपदाच्युत्वा तस्याः कुक्षाववातरत् ॥ ५ ॥
चतुर्दश महास्वप्ना वज्रस्वप्नसमन्विताः ॥
[2]दृष्टा देव्या तया रात्रौ चक्रभृज्जन्मसूचकाः ॥ ६ ॥
कथितास्ते महीभर्तुः प्रभातायितया तया ।
[3]सुपुत्रजन्मकथनात् तेनाप्याऽऽह्लादिता सका ॥ ७ ॥

(१) ग ज ट ण, -त्यतरस्थितेः ।
(२) ज द दृष्टा ।
(३) ज सुपुत्रकथनात्तेन राज्ञाऽप्याह्लादिता सका । च ठ -स्वकाः ।

अजीजनत् सुतं राज्ञी सम्पूर्णसमयेऽथ सा।
प्रवर्द्धितश्च भूपालश्चेटीभिः सुतजन्मना ॥ ८ ॥
आसन्नकुलवृद्ध्या ताः सुतजन्मनिवेदिकाः।
तोषयित्वा महीपालो वर्द्धापनमकारयत् ॥ ९ ॥
दृष्टं पञ्चदशस्वप्ने देव्या वज्रायुधं ततः।
वज्रायुधाभिधानं तत्पित्रा पुत्रस्य निर्ममे ॥ १० ॥
अष्टवर्षप्रमाणोऽसौ कलाचार्यस्य सन्निधौ।
कारितस्[1] कलाभ्यासमावासं गुणसंपदः ॥ ११ ॥
संप्राप्तयौवनो राजकन्यां लक्ष्मीवतीं वराम्।
सोऽथोत्सवेन गुरुणा गुरुणा परिणायितः ॥ १२ ॥
अनन्तवीर्यजीवोऽथ प्रच्युत्याच्युतकल्पतः।
वज्रायुधकुमारस्य लक्ष्मीवत्याः[2] सुतोऽभवत् ॥ १३ ॥
सहस्रायुधनामाऽसावपि संप्राप्तयौवनः।
उपयेमे नृपसुतां सुरूपां कनकश्रियम् ॥ १४ ॥
भुञ्जानस्य तया सार्द्धं भोगांस्तस्याऽपि[3] बन्धुरान्।
कालक्रमेण संजज्ञे पुत्रः शतबलाभिधः ॥ १५ ॥
क्षेमङ्करनृपोऽन्येद्युः [4]पुत्रपौत्रसमन्वितः।
सिंहासनोपविष्टोऽसौ यावदासीत् सभान्तरे ॥ १६ ॥

---

(१) ख ग च छ -तः स कलाभ्यास-।
(२) ग ज झ ठ ड लक्ष्मीवत्यां।
(३) ङ ऽति-।
(४) ङ ढ पुत्रपौत्रप्रपौत्रयुक्। द पुत्रपौत्रप्रपौत्रकः।

तत्रागात्तावदीशानकल्पवास्यमृताशनः ।
चित्रचूलोऽभिधानेन कश्चिद् मिथ्यात्वमोहितः ॥१७॥(युग्मम्)
नास्ति देवो गुरुर्नास्ति नास्ति पुण्यं न पातकम् ।
न जीवपरलोकौ चेत्यादिनास्तिकवाद्यसौ ॥ १८ ॥
वज्रायुधकुमारेण भणितो भोः ! न युज्यते ।
तव नास्तिकवादोऽयमत्र हेतुर्भवानपि ॥ १९ ॥
चेत् त्वया सुकृतं किञ्चित् नाभविष्यत् पुरा कृतम् ।
नालप्स्यथाः सुरत्वं हि ततस्त्वं शर्मणः पदम् ॥ २० ॥
आसीस्त्वं मनुजः पूर्वमिह जातोऽसि निर्जरः ।
घटते कथमप्येतद् यदि जीवो न विद्यते ॥ २१ ॥
इत्यादिहेतुभिः सोऽथ निर्जरः प्रतिबोधितः ।
वज्रायुधकुमारेण ततस्तुष्टो जगाद सः ॥ २२ ॥
भोः ! कुमार ! त्वया साधु विदधे यद्भवार्णवे ।
पतन् संज्ञानहस्तावलम्बनेनोद्धृतोऽस्म्यहम् ॥ २३ ॥
आददे सोऽथ सम्यक्त्वं कुमारस्यैव सन्निधौ ।
प्रियं किं ते करोमीति कुमारं तं जजल्प च ॥ २४ ॥
निःस्पृहाय ततस्तस्मै दत्त्वाऽऽभरणमुत्तमम् ।
स देवः प्रययौ स्वर्गमीशानेन्द्रस्य सन्निधौ ॥ २५ ॥
वज्रायुधकुमारोऽसावीशानेन्द्रेण पूजितः ।
अयं जिनेन्द्रो भावीति भक्तिरञ्जितचेतसा ॥ २६ ॥
वसन्तसमयेऽन्येद्युः कुमारं तं स्मरोपमम् ।
सुद्रा सुदर्शना पुष्पाण्यर्पयित्वा व्यजिज्ञपत् ॥ २७ ॥

देव ! लक्ष्मीवती देवी युष्माभिः सह वाञ्छति ।
कर्तुं सूरनिपाताख्योद्याने सुरभिखेलनम् ॥ २८ ॥
वज्रायुधकुमारोऽथ सप्तराज्ञीशताग्रया ।
लक्ष्मीवत्या समं देव्या तदुद्यानमगाद्वरम् ॥ २९ ॥
तत्र नानाविधक्रीडाः कर्तुं प्रववृते जनः ।
कुमारश्च ययौ वापीं सप्रियः प्रियदर्शनः ॥ ३० ॥
तत्र प्रविश्य पत्नीभिः सानुरागाभिरञ्चितः ।
निरासन्नीकृतव्रीडां जलक्रीडां चकार सः ॥ ३१ ॥
दमितारेरथो जीवो भवं भ्रान्त्वा पुरा भवे ।
कृत्वा किञ्चिदनुष्ठानं विद्युद्दंष्ट्रः सुरोऽभवत् ॥ ३२ ॥
जलक्रीडापरं वीक्ष्य कुमारं पूर्वमत्सरात् ।
तद्वधार्थं महाशैलं वाप्या उपरि सोऽमुचत् ॥ ३३ ॥
अधस्तान्नागपाशैश्च तं बबन्ध दुराशयः ।
वज्रायुधोऽपि चक्रीति महाबलसमन्वितः ॥ ३४ ॥
अधिष्ठितश्च यक्षाणां सहस्रद्वितयेन सः ।
बिभेद तं नगं नागपाशान् त्रोटयति स्म च ॥३५॥ (युग्मम्)
ततो वाप्या विनिर्गत्य सर्वराज्ञीगणाऽऽवृतः ।
अक्षताङ्गः कुमारोऽसौ चिरं चिक्रीड कानने ॥ ३६ ॥
अत्रान्तरे सहस्राक्षो जिनं नत्वा विदेहतः ।
वलितः शाश्वतयात्राकृते नन्दीश्वरं प्रति ॥ ३७ ॥
वापीमध्यान्नगं भित्त्वा छित्त्वा पाशांश्च सप्रियम् ।
निर्गच्छन्तं कुमारं तं पश्यति स्म सविस्मयः ॥ ३८ ॥

ज्ञात्वा ज्ञानोपयोगेन भाविनं तं च तीर्थपम् ।
ननाम परया भक्त्या तुष्टुवे च कृताञ्जलिः ॥ ३९ ॥
धन्योऽसि त्वं कुमारेन्द्र ! यो भविष्यसि भारते ।
षोडशः तीर्थकृत् शान्तिनामा शान्तिकरो जने ॥ ४० ॥
इति स्तुत्वा सुनासीरः प्रययौ स्थानमीप्सितम् ।
कुमारोऽपि गृहं प्राप्तः क्रीडित्वोपवने चिरम् ॥ ४१ ॥
सोऽपि क्षेमङ्करस्यापोऽभ्येत्य लोकान्तिकामरैः ।
तीर्थं प्रवर्तयेत्युच्चैर्बोधितः स्थितिवेदिभिः ॥ ४२ ॥
ततो वज्रायुधं राज्ये निवेश्य जगतीप्रियम् ।
दत्त्वा च वार्षिकं दानं स चारित्रमुपाददे ॥ ४३ ॥
विहृत्य जिनलिङ्गेन किञ्चित् कालं विकेवलः ।
अवाप केवलज्ञानं घातिकर्मक्षये ततः ॥ ४४ ॥
देवैरागत्य समवसरणे रचिते सति ।
तत्रोपविश्य विधिना चक्रेऽसौ धर्मदेशनाम् ॥ ४५ ॥
कल्पद्रुमचिन्तामणिकामधेन्वधिकप्रभः ।
कर्तव्यः सर्वदा धर्मो भो भव्याः ! प्रतियत्नतः ॥ ४६ ॥
किन्तु सम्यक् परीक्ष्योऽयं श्रुतशीलकृपादिभिः ।
आयुर्वेदविनिर्दिष्टक्षीरपाणवचो यथा ॥ ४७ ॥
अविचार्य प्रवृत्तः सन् क्षीरमर्कादिसम्भवम् ।
पिबेद् [1]येनाल्पशातादिदोषः संजायते महान् ॥ ४८ ॥

(१) क ख पिबेद् यो वाऽल्प पित्तादि- ।

बुद्ध्या विचारयेद् यस्तु वैद्यवाक्यं, पिबत्यसौ ।
बलपुष्टिकरं क्षीरं गवादीनां मनोहरम् ॥ ४९ ॥
धर्मे प्रवृत्तिः कर्तव्येति वाक्येऽप्यविचारिते ।
करोत्यज्ञानतो जीवः प्रवृत्तिं धनुरादिषु ॥ ५० ॥
धर्मे तस्मादहिंसादिलक्षणे जिनभाषिते ।
विदधीत प्रवृत्तिं भोः ! शिवं सौख्यं यदीच्छथ ॥ ५१ ॥
अविचार्य धिया कार्यं कुर्वतामिह देहिनाम् ।
[1]दोषा भवन्त्यमृताम्रनिपात्यादिनरेन्द्रवत् ॥ ५२ ॥
पप्रच्छैवमथो सर्वा पर्षत् कौतूहलाकुला ।
अमृताम्रनिपात्यादिनृपाः के भगवन्निमे ॥ ५३ ॥
दोषो जज्ञे कथं तेषामविचारितकर्मणाम् ।
इति सर्वसदःप्रोक्तः क्षेमङ्करजिनोऽवदत् ॥ ५४ ॥
अस्त्यवन्तिजनपदे प्रसिद्धोज्जयिनी पुरी ।
नगरी धनदस्येवावतीर्णेह कुतूहलात् ॥ ५५ ॥
जितशत्रुर्महीपालः पालयामास तां पुरीम् ।
यो वैरिवारनारीणां वैधव्यव्रतदो गुरुः ॥ ५६ ॥
तस्याग्रमहिषी जज्ञे विजयश्रीः सुलोचना ।
भुञ्जानस्तामिलां चैव राजा राज्यमपालयत् ॥ ५७ ॥
आस्थानमण्डपाऽऽसीनमन्यदा तं महीपतिम् ।
सुविज्ञातेङ्गिताकारः प्रतीहारो व्यजिज्ञपत् ॥ ५८ ॥

(१) ख ग ङ भ दोषो भवन्त्यमृ- ।

राजन् ! त्वन्मन्दिरद्वारे त्वद्दर्शनसमुत्सुकाः ।
चत्वारः पुरुषाः सन्ति मूर्त्या राजसुता इव ॥ ५९ ॥
ततः किं क्रियतां तेषामित्युक्ते स्माऽऽह भूपतिः ।
शीघ्रमानय तानग्रेत्यानिनाय च सोऽपि तान् ॥ ६० ॥
दत्ताऽऽसनोपविष्टांस्तान् निरीक्ष्य विस्मितानतीन् ।
दध्यौ राजाऽनयाऽऽकृत्या नूनमेते सुवंशजाः ॥ ६१ ॥
ताम्बूलादिप्रदानेन संमान्याभाषितास्ततः ।
कुतो यूयमिहाऽऽयाताः केनार्थेनेति भूभुजा ॥ ६२ ॥
अथोवाचानुजस्तेषामस्ति देवोत्तरापथे ।
सुवर्णतिलकं नाम विख्यातमवनौ पुरम् ॥ ६३ ॥
तद् वैरिमर्दनो राजा न्यायेन प्रत्यपालयत् ।
तस्य रूपवती नाम्ना चारुरूपवती प्रिया ॥ ६४ ॥
तयोः क्रमेण सञ्जाताश्चत्वारस्तनया वराः ।
तेषां नामानि चामूनि प्रदत्तानि क्रमेण हि ॥ ६५ ॥
प्रथमो देवराजाख्यो वत्सराजो द्वितीयकः ।
तृतीयो दुर्लभराजः कीर्त्तिराजश्चतुर्थकः ॥ ६६ ॥
सर्वे शुभकलाऽभ्यासं कारिता जनकेन ते ।
प्राप्ताश्च यौवनं स्वानुरूपकन्याविवाहिताः ॥ ६७ ॥
अन्येद्युः स महीपालो निवर्तकरुजाऽर्दितः ।
राज्ये संस्थापयामास देवराजं सुताग्रिमम् ॥ ६८ ॥
दत्त्वा शिक्षामथो तस्मै परलोकमियाय सः ।
स्वं राज्यं देवराजोऽपि कियत्कालमपालयत् ॥ ६९ ॥

दायादैरन्यदा तत्र संभूय बलवत्तरैः ।
प्रसह्य स्वीकृतं देशात् निरासे स च सानुजः ॥ ७० ॥
देवराजः स देवाऽयमाययौ युष्मदन्तिके ।
सेवाविधित्सयाऽस्माभिरनुजैः परिवारितः ॥ ७१ ॥
गुणदूतसमाहूता भवतामन्तिके वयम् ।
धृत्वा सम्भावनां चित्ते समायाता महीपते ! ॥ ७२ ॥
हृष्टो राजाऽवदद् यूयं मम पार्श्वे यदागताः ।
तत्साधु विहितं सन्तः सतां शरणमेव यत् ॥ ७३ ॥
प्रतीहारं समादिश्य राज्ञा वृत्तिसमन्वितः ।
निवासाय ततस्तेषामावासः प्रवरोऽर्पितः ॥ ७४ ॥
दृढभक्तिपराः प्रौढाः सेवकास्ते महीभुजा ।
प्रसादपूर्वकं स्वाङ्गरक्षकत्वे नियोजिताः ॥ ७५ ॥
रात्रेश्चतुर्षु यामेषु चत्वारोऽपि क्रमेण ते ।
चक्रिरे नृपते रक्षां शयितस्य धृताऽऽयुधाः ॥ ७६ ॥
ग्रीष्मकालेऽन्यदा देवराजोऽनुज्ञाप्य भूपतिम् ।
ग्रामे क्वापि समासन्ने ययौ कार्येण केनचित् ॥ ७७ ॥
कार्यं कृत्वा स मध्याह्ने वलितो यावदन्तरे ।
भीषणा तावदुत्तस्थौ प्रबला वातमण्डली ॥ ७८ ॥
धूलिरुच्छलति स्मोच्चैः प्रचण्डपवनोद्धता ।
निपेतुः कर्कराः पत्रतृणानि भ्रेमुरम्बरे ॥ ७९ ॥
पपात विरलं चाम्बु गुरुगर्जारवोत्कटम् ।
विललास तथा विद्युद् दृष्टिसन्तापकारिणी ॥ ८० ॥

तद्धूलिजलभीतोऽसावाश्रित्य वटपादपम् ।
यावत् तस्थौ क्षणं तावदश्रौषीदुपरि स्वरम् ॥ ८१ ॥

किमेतदिति दत्तावधानो भाषाविशारदः ।
वचः पिशाचयोः सोऽथ शुश्रावेति सुदुःश्रवम् ॥ ८२ ॥

[1]भो भो ! जाणसि किंचौ सो पभणदि णो कहेहि मह किं तं ।
जंपइ इमोवि भज्जं मलिहीए सो नलिन्दोत्ति ॥ ८३ ॥

[2]बीएण तओ *पुट्ठो केण निमित्तेण कोइ वेलाए ।
सो जंपइ सप्पाओ पढमे पहरंमि रत्तीए ॥ ८४ ॥

तत्पिशाचवचः श्रुत्वा पीडितो हृदयेऽधिकम् ।
स दध्यौ हा कथं कार्यं दैवेनैतद्विनिर्मितम् ॥ ८५ ॥

तथा कथञ्चिदत्रार्थे यतिष्येऽहं यथा विभोः ।
नैतद्भविष्यतीत्येवं ध्यायन् सोऽगाद् नृपान्तिकम् ॥ ८६ ॥

प्रदोषसमये जाते विसृज्याऽऽस्थानगं जनम् ।
प्रविश्य वासभवने सुप्तो देव्या समं नृपः ॥ ८७ ॥

देवराजोऽपि तद्धामगृहं सर्वत्र शङ्कितः ।
उपरिष्टादधस्ताच्च शोधयामास यत्नतः ॥ ८८ ॥

---

(१) भो भोः ! जानासि किञ्चित् स प्रभणति भो कथय मम किं तत् ।
कथयत्ययमपि भार्यां मरिष्यति स नरेन्द्र इति ॥

(२) द्वितीयेन ततः पृष्टः केन निमित्तेन कस्यां वेलायाम् ।
स कथयति सर्पात् प्रथमे प्रहरे रात्रेः ॥

* द पुट्ठोवि ।

ततः खड्गं समाकृष्य दीपच्छायान्तरस्थितः ।
उपर्यधो वीक्ष्यमाणो यावदस्थादसौ तदा ॥ ८९ ॥
चन्द्रोदयस्य विवरेणाहिं दृष्ट्वा प्रलम्बितम् ।
अभीतो जगृहे शीघ्रं करेणैकेन तन्मुखम् ॥ ९० ॥ (युग्मम्)
द्विखण्डं विदधे चास्य देहमन्येन सोऽसिना ।
एकत्र गोपयामास तत् खण्डद्वयमप्यसौ ॥ ९१ ॥
दृष्ट्वाऽथ पतितान् रक्तबिन्दून् देव्या उरःस्थले ।
सोऽपजह्रे स्वहस्तेन विषसंक्रान्तिभीरुकः ॥ ९२ ॥
अत्रान्तरे पश्यति स्म जातनिद्राक्षयो नृपः ।
करं व्यापारयन्तं तं देव्या वक्षोरुहोपरि ॥ ९३ ॥
ततः कोपपरीताङ्गो दध्यौ किं मारयाम्यमुम् ।
अथवा सबलो नैष शक्यो मारयितुं मया ॥ ९४ ॥
अमुं केनाप्युपायेन मारयिष्यामि निश्चितम् ।
इति सञ्चिन्त्य तस्थौ स सनिद्राऽवस्थया [1]तया ॥ ९५ ॥
[2]वादितोऽथाऽऽदिमो यामो रजन्याः घटिकागृहे ।
वत्सराजं विमुच्याऽऽत्मस्थाने सोऽगान्निजाऽऽलयम् ॥ ९६ ॥
जजल्प भूपतिः कोऽत्र स्थाने प्राहारिकोऽस्ति भोः ! ।
सोऽवदद् वत्सराजोऽहं तिष्ठामि तव सेवकः ॥ ९७ ॥

---

(१) ख च ठ तथा ।
(२) इ वादितेऽथादिमे यामे । ख घ च ड वादितः प्रथमो यामो ।
क भ वादिते प्रथमे यामे ।

उवाच भूपतिर्भूयः किमेकं प्रेषणं मम ।
करिष्यसीति सोऽवोचदादेशं देहि सत्वरम् ॥ ९८ ॥
राजा प्रोवाच यद्येवं भद्राऽऽदेशस्तवैष भोः ! ।
यद् भ्रातुर्देवराजस्य शीर्षं छित्त्वा ममानय ॥ ९९ ॥
तथेत्याज्ञां गृहीत्वाऽसौ निर्ययौ वासमन्दिरात् ।
दध्यौ च देवराजस्याऽतीव क्रुद्धो महीपतिः ॥ १०० ॥
तनुदारधनद्रोहैः कोपो ह्येवंविधो भवेत् ।
एकोऽपि सम्भवत्येषां मध्याद् बन्धोर्न मे ततो ॥ १ ॥

यतः—

ये भवन्त्युत्तमा लोके स्वप्रकृत्यैव ते ध्रुवम् ।
अप्यङ्गीकुर्वते मृत्युं प्रपद्यन्ते न चोत्पथम् ॥ २ ॥
भीता जनापवादस्य ये भवन्ति जितेन्द्रियाः ।
अकार्यं नैव कुर्वन्ति ते महामुनयो यथा ॥ ३ ॥
कुविज्ञातं कुदृष्टं वा कुश्रुतं कुपरीक्षितम् ।
नूनमेतद् भावि कार्यं तत्कर्तव्यं मया कथम् ॥ ४ ॥
कुर्वे ज्ञातमथवा कालविलम्बं प्रकरोम्यहम् ।
अशुभस्य निरामाय स एव कथितो बुधैः ॥ ५ ॥
चिन्तयित्वेति भूपस्य समागत्य च सन्निधौ ।
स ऊचेऽद्यापि जागर्ति देवराजो महीपते ! ॥ ६ ॥
जाग्रन्न शक्यते हन्तुं केनाप्येष महाभुजः ।
तमहं मारयिष्यामि जातनिद्राभरं पुनः ॥ ७ ॥

एवं भवतु राज्ञेति प्रपन्ने सोऽवदत् पुनः ।
यूयं विनिद्रा मे काञ्चित् कथां कथयत प्रभो ! ॥ ८ ॥
अथवा कथ्यमानां तां यूयं शृणुत सोद्यमाः ।
इयं हि निर्विनोदानां क्षयं याति न यामिनी ॥ ९ ॥
त्वमेवाऽऽख्याहि भोः ! भद्रेत्यादिष्टः पृथिवीभुजा ।
ततश्चाऽऽख्यातुमारेभे वत्सराजः कथामिमाम् ॥ १० ॥
बहुलोकसमायुक्तं मुक्तमीतिभयादिभिः ।
अस्तीह पाटलीपुत्रं युक्तं भूपश्रतैः पुरम् ॥ ११ ॥
तत्राभूत् पृथिवीराजो राजा शत्रुविनाशकृत् ।
भूमिमण्डलविख्यातो धार्मिको विनयी नयी ॥ १२ ॥
विनयादिगुणाऽऽधारा सुविचारा मनोहरा ।
आसीद् रत्या समाकारा 'सुतारा तस्य वल्लभा ॥ १३ ॥
उदारो निर्मलाऽऽचारः सुविचारो दयापरः ।
रत्नसारोऽभिधानेन तत्र श्रेष्ठिवरोऽभवत् ॥ १४ ॥
अनवद्यक्रियाऽऽसक्ता भक्ता देवगुरुष्वलम् ।
सलज्जा रज्जुकानाम्नी तस्याभूद् गृहिणी वरा ॥ १५ ॥
धनदत्तस्तयोः पुत्रः पवित्रः शुभकर्मणा ।
कलाकलापसंयुक्तो विमुक्तो व्यसनाऽऽदिभिः ॥ १६ ॥
सोऽन्यदा कृतशृङ्गारो मित्रबान्धवसंयुतः ।
निर्गत्य मन्दिराद् गन्तुं प्रवृत्तोऽश्वेन केनचित् ॥ १७ ॥

(१) घ ज ड ट सुभगा ।

तं दृष्ट्वा कश्चिदित्यूचे धन्योऽसौ श्रेष्ठिनन्दनः ।
य एवंविधसामग्र्या स्वेच्छया विलसत्यहो ॥ १८ ॥
सोऽन्येन भणितो मुग्ध ! किमस्य त्वं प्रशंससि ।
यः पित्रोपार्जितां लक्ष्मीं भुङ्क्ते कापुरुषक्रियः ॥ १९ ॥
प्रशंसायाः स योग्योऽत्र यो द्रव्योपार्जने रतः ।
त्यागभोगपरो यस्य लोकमध्ये विजृम्भते ॥ २० ॥
तच्छ्रुत्वा श्रेष्ठिपुत्रोऽसौ चिन्तयामास चेतसि ।
अमुनेर्ष्यापरेणापि जल्पितं मे हितं वचः ॥ २१ ॥
ततो देशान्तरे गत्वा समुपार्ज्य धनं घनम् ।
तत् सर्वं साधयिष्यामि यदनेन विभाषितम् ॥ २२ ॥
स्ववितर्कोऽथ मित्राणामग्रे तेन निवेदितः ।
प्रशंसितश्च तैस्तस्याभिप्रायः प्रियवादिभिः ॥ २३ ॥
लगित्वा पादयोः सोऽथ जगाद जनकं मया ।
अर्थार्जनकृते गम्यं परदेशे त्वदाज्ञया ॥ २४ ॥
वज्राऽऽहत इव श्रेष्ठी दुःखितस्तमभाषत ।
अर्थस्ते विद्यते वत्स ! त्यागभोगक्षमो बहुः ॥ २५ ॥
तेनैव साधनीयानि सर्वकार्याणि निश्चितम् ।
प्राणसन्देहकरणे गम्यं देशान्तरं न हि ॥ २६ ॥
पुनरप्यवदत् पुत्रस्तात ! लक्ष्मीस्त्वयाऽर्जिता ।
जननीव न मे भोक्तुं युज्यते श्रेगवादृते ॥ २७ ॥
अत्याग्रहपरं ज्ञात्वा विससर्ज पिताऽपि तम् ।
ततोऽसौ यानसामग्रीमखिलां प्रगुणां व्यधात् ॥ २८ ॥

समसहायः सपाथेयः समादाय क्रयाणकम् ।
विदधे सार्थसंयुक्तः स शुभेऽह्नि प्रयाणकम् ॥ २९ ॥
कृत्वाऽनुगमनं तस्य किञ्चिदध्वानमञ्जसा ।
श्रेष्ठी निवर्तमानोऽथ शिक्षामेवंविधामदात् ॥ ३० ॥
त्यागिना कृपणेनैव निर्घृणेन दयालुना ।
विदेशगेन भवता भाव्यं शूरतरेण च ॥ ३१ ॥
सर्वथाऽलब्धमध्यस्त्वं भूया वत्स ! ममाऽऽज्ञया ।
शिक्षां दत्त्वेति वलितः श्रेष्ठी स प्रचचाल च ॥ ३२ ॥
आगच्छाऽऽगच्छ भोः ! अत्र तिष्ठोत्तिष्ठ व्रज द्रुतम् ।
इत्यादिवाक्यतुमुलः सार्थमध्ये तदाऽभवत् ॥ ३३ ॥
[1]श्रीपुरं नगरं प्राप्तस्तत्र चोपसरोवरम् ।
सार्थोऽस्थात् सार्थनाथस्तु रम्ये पटकुटीतटे[2] ॥ ३४ ॥
तदैकः कम्पमानाङ्गो भयात् चञ्चललोचनः ।
पुरुषः शरणं कश्चिद् धनदत्तमुपाश्रितः ॥ ३५ ॥
तेनैवं भणितः सोऽश मा भैषीस्त्वं कुतोऽपि भोः ! ।
महत्यप्यापराधेऽपि मत्समीपमुपागतः ॥ ३६ ॥
अत्रान्तरे हत हतेतिवदन्त उदायुधाः ।
आरक्षकनरा एत्य सार्थवाहमदोऽवदन् ॥ ३७ ॥
दासोऽयं नरनाथस्य तस्याऽऽभरणमुत्तमम् ।
गृहीत्वा हारयामास द्यूतकारस्य सन्निधौ ॥ ३८ ॥

(१) ख घ भ श्रीपुरे नगरे प्राप्ते स- ।
(२) इ ज ट -तटे ।

तद् विलोक्य महीभर्तुरस्माभिः प्रतिपादितम् ।
तेनापि वध्य आदिष्टो द्रोहकारीति रोषतः ॥ ३९ ॥
ततो दयाप्रपन्नेन मन्त्रिणेत्युदितो नृपः ।
गुप्तौ तिष्ठत्वसौ तावद् यावन्नाऽऽभरणागमः ॥ ४० ॥
ततः कारागृहे क्षिप्तो रजन्याः प्रहरेऽन्तिमे ।
भङ्क्त्वा तदारक्षकं च हत्वाऽप्येष विनिर्ययौ ॥ ४१ ॥
विज्ञाय वयमप्यस्य पृष्ठे शीघ्रं प्रधाविताः ।
एषोऽस्य सरसः प्रत्यासन्ने गूढवनेऽविशत् ॥ ४२ ॥
ततोऽधुना विनिर्गत्य प्रविष्टः शरणे तव ।
तदयं मुच्यतां राजापथ्यकारी महामते ! ॥ ४३ ॥
उवाच सार्थवाहोऽपि यद्यप्येवं तथाऽपि भोः ! ।
मतां नार्पयितुं युक्तः कदाऽपि शरणाऽऽगतः ॥ ४४ ॥
आरक्षका वदन्ति स्म राजादेशकरा वयम् ।
सोऽवदत् तर्हि राजानं गत्वा विज्ञापयाम्यहम् ॥ ४५ ॥
एवमस्त्विति तैरुक्ते सोऽगात् नृपतिसन्निधौ ।
तस्य रत्नाऽऽवलीं चैकां महामूल्यामढौकयत् ॥ ४६ ॥
राज्ञा सोऽभाणि सार्थेश ! कुत आगमनं तव ।
तेनापि कथितस्तस्य वृत्तान्तस्य सविस्तरः ॥ ४७ ॥
इति चोक्तं महाराज ! लब्धमाभरणं यदि ।
तदसौ मुच्यतां मेऽद्य तस्करः शरणागतः ॥ ४८ ॥
राजा प्रोवाच लब्धेऽपि भूषणे वधमर्हति ।
यद्यप्येष तथाऽप्यद्य मुक्तः प्रार्थनया तव ॥ ४९ ॥

महाप्रसाद इत्युक्त्वा निजस्थानमगादसौ ।
आरक्षकनरास्ते च राजदूतेन वारिताः ॥ ५० ॥
भोजनं कारयित्वाऽथ तस्करोऽप्यात्मना सह ।
इत्युक्तो धनदत्तेन मैवं कार्षीद् भवान् पुनः ॥ ५१ ॥
सोऽवदद् विनिवृत्तोऽस्मि चौर्यात् सार्थेश ! संप्रति ।
करिष्यामि व्रतं किञ्चिद् हितं स्वस्य प्रियाय ते ॥ ५२ ॥
अन्यच्च साधुना दत्तो भूतनिग्रहकारकः ।
मन्त्रः सप्रत्ययो मेऽस्ति ग्राह्योऽवश्यमसौ त्वया ॥ ५३ ॥
जगृहे प्रार्थनाभङ्गभीरुणा सार्थपेन सः ।
तस्करोऽपि तमापृच्छ्य ययौ स्वेप्सितहेतवे ॥ ५४ ॥
दत्तं प्रयाणकं शीघ्रं धनदत्तेन चाग्रतः ।
गच्छन् क्रमेण संप्राप्तोऽटवीं कादम्बरीमसौ ॥ ५५ ॥
एकस्याश्च महानद्या रोधस्यावासितोऽथ सः ।
तत्र प्रकर्तुमारब्धा सामग्री भोजनादिका ॥ ५६ ॥
अत्रान्तरे च सार्थेशो व्याधमेकं ददर्श सः ।
कृष्णरक्तेक्षणं चापबाणव्यापृतपाणिकम् ॥ ५७ ॥
सारमेयसमायुक्तं रुदन्तं च सुदुःखितम् ।
किमेतदिति तं दृष्ट्वा पप्रच्छ च कृताग्रहः ॥ ५८ ॥
सोऽवोचत् शृणु भो भद्र ! मम दुःखस्य कारणम् ।
इहास्ति पर्वते भिल्लपल्लीगिरिकुडङ्गिका ॥ ५९ ॥
तत्र पल्लीपतिः शूरो विख्यातः सर्वभूभुजाम् ।
सिंहचण्डोऽभिधानेन प्रचण्डो रणकर्मणि ॥ ६० ॥

तस्य सिंहवती भार्या जीवितादपि वल्लभा।
वर्तते प्राणसन्देहे सा भूतग्रहपीडया॥ ६१॥
पल्लिनाथोऽपि नः स्वामी वियोगेऽस्या मरिष्यति।
एतेन कारणेनाहं दुःखितो भद्र! रोदिमि॥ ६२॥
सार्थवाहस्ततोऽवादीदेकवारमहं दृशा।
पश्यामि तां यतो मेऽस्ति मन्त्रो भूतग्रहापहः॥ ६३॥
तेनाथ पल्लिनाथस्याऽऽचख्ये तस्मोऽपि सत्वरम्।
प्रेयसीं तां समादाय तत्समीपमुपाययौ॥ ६४॥
विलोक्य सार्थवाहोऽपि कृत्वा च सकलाकृतिम्।
मन्त्रजापविधानेन निर्दोषां विचकार ताम्॥ ६५॥
जीवदानोपकारं तं कृत्वा पल्लीपतिः स तु।
विसृष्टः सार्थवाहेन स्वपल्लीं पुनरप्यगात्॥ ६६॥
वलितो धनदत्तोऽपि ततः स्थानात् शनैः शनैः।
वेलाकूलगतं प्राप गम्भीराख्यं पुरं वरम्॥ ६७॥
कृत्वा निवेशं सार्थस्य तस्थुषस्तत्र पत्तने।
न मनोवाञ्छितो लाभो बभूवास्य कथञ्चन॥ ६८॥
ततोऽसौ चिन्तयामास पाश्चात्यप्रहरे निशः।
अर्जयिष्याम्यहं वित्तमागाद्य सरितां पतिम्॥ ६९॥
इति चिन्तापरस्यास्य विगता सा विभावरी।
ततश्चोत्थाय शय्याया वेलाकूलमियाय सः॥ ७०॥
रङ्गत्तरङ्गमालाभिरभ्युत्थान इवोत्थितम्।
विधिज्ञः पूजयामास सार्थवाहः सरित्पतिम्॥ ७१॥

महद्गुणगणाऽऽधारं धीवराऽध्यासितं तथा ।
सार्थं सितपटीस्फीतं संसाराम्बुधितारकम् ॥ ७२ ॥
देवताऽधिष्ठितं जैनवाक्यवन्नैगमान्वितम् ।
तत्रैकं स्वीकृतं तेन यानं द्रव्येण सुन्दरम् ॥ ७३ ॥ (युग्मम्)
तत्र संक्रामितं भाण्डं योग्य देशान्तरस्य यत् ।
आरूढश्च स्वयं श्रेष्ठिसुतो वेलासमागमे ॥ ७४ ॥
[1]ततोऽनुकूलपवनप्रेरितं गुरुरंहसा ।
ययौ महासमुद्रे तदतीत्य बहुयोजनीम् ॥ ७५ ॥
गृहीताम्रफलं वक्त्रे समायान्तं विहायसा ।
ददर्शैकमथान्येद्युः राजकीरमसौ पुरः ॥ ७६ ॥
परिश्रमवशादेनं पतन्तं वारिधेर्जले ।
धारयित्वाऽऽत्मनः पार्श्वे धीवरैरानिनाय च ॥ ७७ ॥
जलवाताऽऽदिदानेन स्वस्थीभूतः क्षणेन सः ।
मुक्त्वा चञ्चुपुटादाम्रफलं कीरवरोऽवदत् ॥ ७८ ॥
सार्थाधिनाथ ! ते नैवोपकर्तुं शक्यते मया ।
जीवितव्यप्रदानं यत् त्वया चक्रे ममाधुना ॥ ७९ ॥
जीवितं ददता मेऽद्य साधो ! जीवापितौ त्वया ।
मद्दत्तजीवनावन्धौ वृद्धौ मत्पितरावपि ॥ ८० ॥
ततः किमुपकुर्वेऽहं तवातुल्योपकारिणः ।
तथाऽप्येतत् मयाऽऽनीतं फलं चूतस्य गृह्यताम् ॥ ८१ ॥

---

(१) ख ग भ वेलाऽनुकूल- ।

सार्थवाहोऽब्रवीद् भद्र ! किमेतेन करोम्यहम् ।
भक्ष त्वमेव यच्छामि भक्ष्यमप्यन्यदात्मनः ॥ ८२ ॥
शुकः प्रोवाच सार्थेश ! सुदुष्प्रापमिदं फलम् ।
अनेकगुणकारि स्यात् श्रूयतामत्र कारणम् ॥ ८३ ॥
अस्त्यत्र भारते वर्षे विन्ध्यो नाम महीधरः ।
गजेन्द्रभग्नदेवद्रुगन्धव्याप्तदिगन्तरः ॥ ८४ ॥
प्रसिद्धा विद्यते विन्ध्याऽटवी तस्य समीपगा ।
तत्रैकस्मिन् द्रुमे कीरमिथुनं मञ्जुभाषकम् ॥ ८५ ॥
तयोः सूनुरहं तौ चानेडमूकौ बभूवतुः ।
वृद्धत्वाच्च तयोर्भक्ष्यमानीय प्रददाम्यहम् ॥ ८६ ॥
अन्येद्युरटवी[1]प्रान्तवने चूतद्रुमे वरे ।
यावदस्मि समारूढस्तावत् तत्र समाययौ ॥ ८७ ॥
सुसाधुयुगलं तच्च कृत्वा दिगवलोकनम् ।
निःशङ्कं विजनत्वेन वार्तामेवंविधां व्यधात् ॥८८॥ (युग्मम्)
अस्ति मध्ये समुद्रस्य पादे शैलस्य कस्यचित् ।
प्ररूढः सहकाराख्यः सद्वृत्तः सफलः सदा ॥ ८९ ॥
तस्यैकमपि योऽश्नाति फलं तस्य शरीरतः ।
नश्यन्ति व्याधयः सर्वे[2]ऽपमृत्युश्च जरा तथा ॥ ९० ॥
सौभाग्यमतुलं रूपं दीप्तिः कान्तिश्च जायते ।
सत्फले भक्षिते तस्मिन्नेकवारमपि स्फुटम् ॥ ९१ ॥

(१) ग घ ज ठ प्राप्त- । क -प्राप्तो ।  (२) ट -ऽल्पमृत्युश्च ।

तदाकर्ण्य मयाऽचिन्ति सत्यमेतन्न संशयः ।
[1]यद् जायते मुनीन्द्राणां प्रलयेऽप्यन्यथा न गीः ॥ ९२ ॥
ततस्तत्फलमानीय पितृभ्यां प्रददाम्यहम् ।
येनैतौ तरुणावस्थौ जायेते [2]च सुचक्षुषौ ॥ ९३ ॥
चिन्तयित्वेति सार्थेश ! गत्वा तत्र मया [3]द्रुतम् ।
फलमेतत् समानीतं तदिदं भद्र ! गृह्यताम् ॥ ९४ ॥
अहमन्यत् समानीय पित्रोर्दास्यामि तत्फलम् ।
भवता ग्राह्यमेवेदं ममानुग्रहहेतवे ॥ ९५ ॥
ततश्च सार्थवाहेन विस्मयोत्फुल्लचक्षुषा ।
जगृहे तत्फलं कीरोऽप्युत्पपात नभस्तले ॥ ९६ ॥
बहूनामुपकाराय देयं कस्यापि भूपतेः ।
फलमेतदिति ध्यात्वा गोपितं सार्थपेन तत् ॥ ९७ ॥
परकूलमथान्येद्युः प्राप्तं प्रवहणं ततः ।
दत्त्वाऽऽवासं गृहीत्वा चोपायनं श्रेष्ठिनन्दनः ॥ ९८ ॥
ययौ भूमिपतेः पार्श्वे ढौकयित्वाऽथ प्राभृतम् ।
तत्फलं चार्पयामास परमार्थं निवेद्य तम् ॥९९॥ (युग्मम्)
परितुष्टो मुमोचाथ शुल्कमस्याखिलं नृपः ।
महाप्रसाद इत्युक्त्वा निजाऽऽवासमगादसौ ॥ २०० ॥

(१) घ च ज झ, संजायते ।
(२) ख घ झ. दिव्यचक्षुषौ ।
(३) घ च छ -ऽद्भुतम् ।

विक्रीयाधिकलाभेन भाण्डमादाय चापरम् ।
वलित्वा च स संप्राप्तो गम्भीराख्यं पुरं [1]ततः ॥ १ ॥
ततश्च प्रस्थितः प्राप्तोऽटवीं कादम्बरीं क्रमात् ।
दत्त्वाऽऽवासं च तत्रास्थात् सलोकः [2]सार्थवाहकः ॥ २ ॥
सुप्तेषु सार्थलोकेषु रात्रौ भाण्डोत्कराद् बहिः ।
यामिकेषु च जाग्रत्सु यद् जातं तद् निगद्यते ॥ ३ ॥
परिगलितायां रात्रौ लोकैः शुश्रुविरे स्वराः ।
खरा हतहतेत्युच्चैस्तुमुलेन विमिश्रिताः ॥ ४ ॥
उत्तालकाहलारावहक्कानादभयङ्करी ।
कुतोऽप्यतर्किता तत्र भिल्लधाटी समाययौ ॥ ५ ॥
सन्नद्ध सार्थवाहो[3]ऽपि सुभटैः परिवारितः ।
योद्धुं सह तया वीरो डुढौके भिल्लसेनया ॥ ६ ॥
पपाठात्रान्तरे बन्दी गुरुदेवार्चने रतः ।
निर्भयः स्थिरचित्तश्च धनदत्तो जयत्वयम् ॥ ७ ॥
निशम्य धनदत्तस्याभिधां पूर्वोपकारिणः ।
साशङ्कः पल्लिनाथोऽथ रणात् पत्तीन् न्यवारयत् ॥ ८ ॥
ज्ञात्वा नरप्रयोगेण तद्वृत्तं यथातथम् ।
विश्वस्तो मिलनायास्य सम्मुखश्च यथावर्मा ॥ ९ ॥
धनदत्तोऽपि विज्ञाय तमुवाच ससंभ्रमः ।
अहो कृतज्ञतासार ! स्वागतं स्वागतं तव ॥ १० ॥

(१) ख घ च पुनः ।　　(३) क ख ट ऽथ ।
(२) ख ग घ च सार्थनायकः ।

तावन्योऽन्यं समाश्लिष्य निविष्टावुचितासने ।
ताम्बूलाद्यौचितीं तस्य सार्थनाथश्चकार सः ॥ ११ ॥
क्षेमवार्तां च पप्रच्छ प्रत्यूचे सोऽपि किं मम ।
पृच्छ्यते येन विदधे प्रतिपत्तिस्त्वदृशी ॥ १२ ॥
इत्याद्यात्मानमानिन्द्याऽभ्यर्थयित्वाऽथ सार्थपम् ।
आनिनाय निजां पल्लीं पल्लिनाथोऽप्युदारधीः ॥ १३ ॥
स्नानभोजनवस्त्राऽऽद्यैस्तं संमान्य गृहाऽऽगतम् ।
मुक्ताफलेभदन्ताद्यैः पूजयामास चाऽऽदरात् ॥ १४ ॥
ततस्तं समनुज्ञाप्य गृहीत्वा वस्तु किञ्चन ।
स सार्थसहितोऽचालीत् प्राप्तश्च नगरं निजम् ॥ १५ ॥
प्रविश्य धनदत्तोऽथ महाभूत्या निजे पुरे ।
स्वभुजोपात्तवित्तेन विदधे स्वविचिन्तितम् ॥ १६ ॥
ददौ दानानि पात्रेषु सच्चक्रे च सुवासिनीः ।
गुरूंश्च पूजयामासाकारयत् कीर्तनानि च ॥ १७ ॥
चकार चान्यदप्यात्मचिन्तितं विभवेन सः ।
तत्र सूरिवरोऽन्येद्युर्विहरन् कश्चिदाययौ ॥ १८ ॥
तत्पार्श्वे धर्ममाकर्ण्य स भूत्वा च महाव्रती ।
प्राप्तः क्रमेण निष्कर्मा निर्वाणपद[१]मव्ययम् ॥ १९ ॥
इतो नरवरेन्द्रोऽसौ गृहीत्वाऽऽम्रफलं करे ।
दध्यौ स्वयं प्राशितेन किमेतेन भवेद्गुणः ॥ २० ॥

(१) ख ग घ ज -मुत्तमम् ।

बहुशः कारयित्वाऽहममूव्याम्रफलानि चेत्।
करोमि बहु लोकस्योपकारं तद् महान् गुणः॥ २१॥
ध्यात्वेत्याज्ञापयामास भूपतिः पुरुषान् निजान्।
वप्यमेतत् शुभस्थाने सहकारो भवेद् यथा॥ २२॥
[1]ततस्तैर्विदधे पुम्भिर्गत्वाऽऽरामे मनोहरे।
पाय्यते स्म जलं कृत्वाऽऽलवालं परितोऽस्य हि॥ २३॥
तैश्च संप्रीणितो राजा पूर्वं तस्याङ्कुरोद्गमे।
प्रत्यहं नवनवर्द्धिकथनाच्च ततः परम्॥ २४॥
क्रमाच्चूतवरे तस्मिन् पुष्पिते फलिते सति।
यत्नतो रक्षणीयोऽयमिति राज्ञादिता नराः॥ २५॥
एवं तेषु प्रकुर्वत्सु प्रसुप्तेष्वन्यदा निशि।
तस्य दैववशेनैकं पतति स्म फलं भुवि॥ २६॥
तत् प्रभाते महीभर्तुः प्रहृष्टैस्तैः समर्पितम्।
देयं पात्राय कस्मैचिदिदं चिन्तयति स्म सः॥ २७॥
आकार्य देवशर्माणं चतुर्वेदधरं द्विजम्।
अमृताम्रफलं तस्मै भक्तिपूर्वं ददौ नृपः॥ २८॥
सोऽप्यात्ममन्दिरं गत्वा पूजयित्वा च देवताम्।
तत्फलं भक्षयामास पञ्चत्वं समवाप च॥ २९॥
केनचित् कथितं राज्ञो देवशर्माऽद्य स द्विजः।
अमृताम्रफले तस्मिन् भक्षिते संस्थितः प्रभो!॥ ३०॥

(१) क ख ड ट. तैस्तथा।

सखेदोऽथ नृपः स्माहाहो अकार्यं कृतं मया ।
पातकं ब्रह्महत्याया धर्मभ्रान्त्या यदर्जितम् ॥ ३१ ॥
नूनमेष विषस्याम्रः प्रपञ्चं प्रविधाय तम् ।
मम प्राणविनाशाय केनचित् प्रेषितोऽरिणा ॥ ३२ ॥
ततोऽयं स्वयमुप्तोऽपि पालितोऽपि प्रयत्नतः ।
बहुप्राणिक्षयङ्कारी छिद्यतां विषपादपः ॥ ३३ ॥
राजादिष्टनराः तीक्ष्णकुठारैस्तरुपुङ्गवम् ।
मूलादपि तमाच्छिद्य पातयन्ति स्म भूतले ॥ ३४ ॥
निर्विण्णा जीवितस्याथ कुष्टरोगार्दिता जनाः ।
धावितास्तत् समाकर्ण्य विषाऽऽम्रतरुच्छेदनम् ॥ ३५ ॥
कश्चित् पक्वमपक्वं वाऽर्धपक्वं चाऽपरस्तथा ।
तत्फलं भक्षयामास सुखमृत्युविधित्सया ॥ ३६ ॥
तस्मिन् चूतफले चाऽऽत्ते गतरोगव्यथाः क्षणात् ।
अभूवंस्ते जनाः सर्वेऽप्यमृताशनसन्निभाः ॥ ३७ ॥
दृष्ट्वा तान् विस्मयाऽऽपन्नः चिन्तयामास भूपतिः ।
अहो असदृशफलं फलमस्य तरोः कथम् ॥ ३८ ॥
[1]गतरोगाः कामतुल्याः संजाता यद्यमी जनाः ।
यजनादिक्रियाऽऽसक्तः तद्विप्रोऽयं कथं मृतः ॥ ३९ ॥
[2]व्याहार्याऽऽरक्षकान् तस्यापृच्छत् तच्चूतजं फलम् ।
त्रोटितं किं नु युष्माभिर्गृहीतं वा धरागतम् ॥ ४० ॥

(१) ङ ट ह गतकल्पाः । (२) ठ आकार्य ।

तैश्च सत्ये समाख्याते राजोचेऽहिविषेण तत् ।
क्षिप्तं भावि बहिस्तेन विपन्नोऽयं द्विजोत्तमः ॥ ४१ ॥
अकार्यमविचार्येदं धिगहो विहितं मया ।
यदसौ छेदितो रोषात् तरुराजः सुधामयः ॥ ४२ ॥
अकारि सहसा कार्यं यथा तेनापरीक्षितम् ।
तथाऽन्येन न कर्तव्यं महीनाथ ! सुखैषिणा ॥ ४३ ॥
द्वितीयप्रहरेऽतीते निशाया वासमन्दिरात् ।
निर्ययौ वत्सराजोऽत्र प्रविष्टस्तस्य चानुजः ॥ ४४ ॥
राजा दध्यावहो रम्यं कथयित्वा कथानकम् ।
मम कार्यमकृत्वैव वत्सराजो गृहं ययौ ॥ ४५ ॥
अथ दुर्लभराजोऽपि तथैव भणितोऽमुना ।
प्रत्युत्पन्नमतिः सोऽपि गत्वाऽऽगत्याऽवदद् नृपम ॥ ४६ ॥
नृनाथ ! जाग्रतोऽद्यापि तौ द्वावपि ममाग्रजौ ।
तत् प्रतीक्ष्य क्षणं कार्यं साधयिष्यामि तावकम् ॥ ४७ ॥
राजन् ! कथानकं किञ्चित् कथ्यतां शृणुताथवा ।
इत्युक्ते तेन सोऽवादीत् त्वमप्याख्याहि तन्मम ॥ ४८ ॥
उवाच दुर्लभोऽत्रैव भरते पर्वतोपरि ।
अस्ति राजपुरं नाम पुरमद्भुतमङ्गलम् ॥ ४९ ॥
तत्राऽभूद् भूपतिः शत्रुदमनोऽन्वर्थसंज्ञितः ।
रत्नमालाऽभिधा तस्य महिषी प्रेमसंयुता ॥ ५० ॥
अन्यदा तस्य भूपस्याऽऽस्थानाऽऽसीनस्य सन्निधौ ।
आजगाम बटुः कश्चित् प्रतीहारनिवेदितः ॥ ५१ ॥

व्यग्रत्वाद् भूपतेः सोऽथोपविश्यास्थाद् नृपस्तथा[1] ।
विसृज्याऽऽस्थानमभ्यङ्गस्नाने चक्रे श्रमापहे ॥ ५२ ॥
देवपूजनवेलायामथ तस्य महीपतेः ।
सपुष्पबटुरागत्य प्रसूनानि समार्पयत् ॥ ५३ ॥
कस्त्वं भद्रेति राज्ञोक्तः सोऽवोचद् यज्ञदत्तसूः ।
अहं शुभङ्करो नाम्ना विप्रोऽरिष्टपुरस्थितिः ॥ ५४ ॥
निजगेहाद् विनिर्गत्य देशदर्शनकौतुकी ।
भ्रमन्निह समायातः समीपे ते महीपते ! ॥ ५५ ॥
प्रकृत्या विनयी सोऽथ स्वसमीपे [2]महीभुजा ।
स्थापितस्तत्र निश्चिन्तस्तस्थौ चापि शुभङ्करः ॥ ५६ ॥
शूरस्त्यागी प्रियाभाषी कृतज्ञो दृढसौहृदः ।
विज्ञानी स्वामिभक्तश्च स सर्वगुणमन्दिरम् ॥ ५७ ॥
[3]अतिगौरवतो राज्ञा शुद्धान्तादिष्ववारितः ।
सर्वत्राऽस्खलितो जज्ञे गुणवान् स शुभङ्करः ॥ ५८ ॥
अन्यदा नगरस्याऽस्य समीपे हरिराययौ ।
व्याध एकः समागत्य तमाचख्यौ महीपतिम् ॥ ५९ ॥
सेनया चतुरङ्गिण्या संयुक्तः सशुभङ्करः ।
वधार्थं मृगराजस्य निर्ययौ नगराद् नृपः ॥ ६० ॥
ज्ञात्वाऽथ व्याधवचनात् तं सिंहं वनमध्यगम् ।
वनार्वाक् स्थापयामास सैनिकानखिलान्नृपः ॥ ६१ ॥

(१) ख ङ ट नृपस्तदा । (२) घ. च भूभुजा ।
(३) ख घ इतो गौरवितो । ज ट अतिगौरवितो ।

ārtika, Fasc. 1--5 @ /10/ each ... ... ... 5 0
ta, Vol. IV, Fasc. 1--8 @ /10/ each ... ... ... 1 14
ra, Fasc. 3-5 @ /10/ each ... ... ... 4 6
rapaddhatiḥ, Fasc. 1--7 @ /10/ each ... ... ... 6 4
irapradīpaḥ Vol. I, Fasc. 1--8 ; Vol. II, Fasc. 1-2. @ /10/ each ... 0 10
induṭikā, Fasc. 1 @ /10/ each ... ...
Kusumāñjali Prakaraṇa Vol. I, Fasc. 2--6 ; Vol. II, Fasc.
... ... ... 5 0
@ /10/ each ... ... ... ... ... 10 0
awati, Fasc. 1--5 @ 2/ ... ... ... ... 1 14
ṣta Parvan, Fasc. 3--5 @ /10/ each ... ... ... 4 6
a-Paingalam, Fasc. 1--7 @ /10/ each ... ... ... 3 2
nrāj Rāsa, Part II, Fasc. 1--5 @ /10/ each ... ... ... 1 0
itto (English) Part II, Fasc. 1 @ 1/- ... ... ... 1 8
a Lakṣaṇam Fasc. 1 @ 1/8/ each ... ... ...
ra Smṛti, Vol. I, Fasc. 1--8 ; Vol. II, Fasc. 1--6 ; Vol III,
... ... 12 8
1--6 @ /10/ each ... ... ... ... ... 1 0
ra, Institutes of (English) @ 1/- each ... ... ... 1 0
amukha Sutram ... ... ... ... ... 3 12
ndhacintāmaṇi (English) Fasc. 1--3 @ 1/4/ each ... ... 2 8
navam, Fasc. 1-2 ... ... ... ... 1 4
rsana Samuccaya, Fasc. 1-2 @ /10/ each ... ...
Vēda Saṁhitā, Vols. I, Fasc. 7--10 ; II, 1-6 ; III, 1--7 ;
... ... 19 6
1--6 ; V, 1-8, @ /10/ each ... ... ... ... 1 4
aieca Kaha Fasc. 1-2, @ /10/ ... ... ... ... 2 8
iya Sūtra Vṛtti, Fasc. 1-4 @ /10/ each ... ... ... 8 0
Ditto (English) Fasc. 1-3 @ 1/- each ... ... 1 4
ra Vijaya, Fasc. 2-3 @ /10/ each ... ... ... 3 12
ha Kriyā Kaumudī, Fasc. 1-6 @ /10/ each ... ... ... 2 0
harā stotra ( Sanskrit and Tibetan ) ... ... ... ... 3 12
Sutra Latyayan, Fasc. 4-9 @ /10/ each ... ... ... 5 0
" Asbalayana, Fasc. 4-11 @ /10/ each ... ... ... 1 0
ta Saṁhitā, (Eng.) Fasc. 1 @ 1/- each ... ... ... 2 8
hikaumudī, Fasc 1-4 @ /10/ each ... ... ... ... 9 6
treya Brahmana, Fasc. 11-25 @ /10/ each ... ... ... 1 14
Pratisakhya, Fasc. 1-3 @ /10/ each ... ... ... 11 14
teriya Saṁhitā, Fasc. 27-45 @ /10/ each ... ... ... 6 4
lya Brāhmaṇa, Fasc. 10-19 @ /10/ each ... ... ... 7 8
ra Vārteka (English) Fasc. 1-6 @ 1/4/ each ... ...
va Cintāmaṇi, Vol. I, Fasc. 1-9, Vol II, Fasc. 2-10, Vol. III, Fasc. 1-2, 23 12
l IV, Fasc. 1, Vol. V, Fasc. 1--5, Part IV, Vol II, Fasc. 1-12 @ /10/ each 1 14
vārthadhigama Sutram, Fasc 1-3 @ /10/ each ... ... ... 1 14
aṇḍa-Maṇḍanam, Fasc. 1-3 @ /10/ each ... ... ... 3 2
Satsai, Fasc. 1--5 @ /10/ each ... ... ... ... 6 4
mita-bhava-prapañca-kathā, Fasc 1, 5-13 @ /10/ each ... ... 6 0
agadasāo, (Text and English) Fasc. 1--6 @ 1/- each ... ... 0 10
āla Carita, Fasc 1 @ /10/ ... ... ... ... 3 12
ṣa Kriyā Kaumudī, Fasc 1--6 @ /10/ each ... ... ... 6 14
u Purāṇa, Vol. I, Fasc. 3--6 ; Vol. II, Fasc. 1--7, @ /10/ each ... 5 10
hāna Pārijata, Fasc. 1-8 Vol- II Fasc. I @ /10/ each ... ... 2 8
Ditto Vol. II, Fasc. 2-3 @ 1/4/ ... ... ... 4 0
adaratnākara, Fasc 1--7 @ /10/ each ... ... ... 8 12
at Svayambhū Purāṇa, Fasc. 1--6 @ /10/ each .. ... ... 1 14
ga Aphorisms of Patanjali, Fasc. 3-5 @ /10/ each ... ... 2 8
asāstra of Hemchandra Vol. I. Fasc. 1-2

*Tibetan Series.*

... ... 2 0
dhyastotrasangraha, Vol. I ... ... ... 4 0
Lower Ladakhi version of Kesarsaga, Fasc. 1--4 @ 1/- each ... ... 1 0
yabindu of Dharmakirti, Fasc. 1 ... ... ... ... 4 0
Sam S'hi Ṭiñ, Fasc. 1--4 @ 1/- each ... ...
gs brjod dpag ákhri S'iñ ( Tib. & Sans. Avadāna Kalpalatā ) Vol. I, ... 11 0
asc. 1--6 ; Vol. II. Fasc. 1--5 @ 1/- each ... ... 14 0
r-Phyin, Vol. I, Fasc. 1-5 ; Vol. II, Fasc. 1-3 ; Vol. III, Fasc. 1-6, @ 1/ each

*Arabic and Persian Series.*

... ... 8 2
amgirnāmah, with Index, (Text) Fasc. 1--13 @ /10/ each ... ... 3 0
Muqaddasi (English) Vol I, Fasc 1--3 @ 1/- each ... ... 33 0

| | Rs. | As. |
|---|---|---|
| [illegible] | 17 | [illegible] |
| Arabic Bibliography, by Dr. A. Sprenger, @ /10/ ... | 0 | 10 |
| Badshāhnāmah, with Index, Fasc. 1–19 @ /10/ each ... ... | 11 | 14 |
| Conquest of Syria, Fasc. 1-9 @ /10/ each ... ... ... | 5 | 10 |
| Catalogue of Arabic Books and Manuscripts, 1-2 @ 1/- each ... ... | 2 | 0 |
| Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc 1--3 @ 1/ each .. ... ... | 3 | 0 |
| Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1-21 @ 1/8/ each | 31 | 8 |
| Farnang-i-Rashīdi, Fasc. 1–14 @ 1/8/ each ... ... | 21 | 0 |
| Fihrist-i-Ṭūsi. or, Ṭūsy's list of Shy'ah Books, Fasc. 1--4 @ 1/- each ... | 4 | 0 |
| Futūḥ-ush-Shām of Wāqidī, Fasc 1--9 @ /10/ each ... ... | 5 | 10 |
| Ditto of Āzādi, Fasc. 1--4 @ /10/ each ... ... ... | 2 | 8 |
| History of Gujarat ... ... ... ... ... | 1 | 0 |
| Haft Asmān, History of the Persian Masnawi, Fasc. 1 @ /12/ each ... | 0 | 12 |
| History of the Caliphs, (English) Fasc. 1--6 @ 1/4/ each ... ... | 7 | 8 |
| Iqbālnāmah-i-Jahāngīrī, Fasc. 1--3 @ /10/ each ... ... ... | 1 | 14 |
| Iṣābah with Supplement, 51 Fasc. @ 1/- each ... ... ... | 51 | 0 |
| Ma'āsir-i-'Ālamgīrī, Fasc 1--6 @ /10/ each ... .. ... | 3 | 12 |
| Maāsir-ul-Umarā, Vol. I, Fasc. 1--9, Vol. II, Fasc. 1--9 ; Vol. III, 1-10 ; Index to Vol. I, Fasc. 10-11 ; Index to Vol. II, Fasc. 10-12 ; Index to Vol. III, Fasc. 11-12 @ /1/ each ... ... ... | 35 | 0 |
| Maghāzi of Wāqidī, Fasc. 1--5 @ /10/ each ... ... ... | 3 | 2 |
| Muntakhabu-t-Tawārikh, Fasc. 1--15 @ /10/ each ... ... ... | 9 | 6 |
| Ditto ( English ) Vol. I, Fasc. 1--7 ; Vol. II, Fasc. 1--5 and 3 Indexes ; Vol III, Fasc 1 @ 1/ each ... ... ... | 16 | 0 |
| Muntakhabu-l-Lubāb, Fasc. 1- 19 @ /10/ each ... ... ... | 11 | 14 |
| Nukhbatu-l-Fikr, Fasc. 1 @ /10/ .. ... ... ... | 0 | 10 |
| Niẓāmi's Khiradnāmah-i-Iskandari, Fasc 1--2 @ /12/ each ... ... | 1 | 8 |
| Qawaninu 's-Sayyad of Khuda Yar Khan 'Abbasi, edited in the original Persian with English notes by Lieut. Col. D. C. Phillott ... ... | 5 | 0 |
| Riyāzu-s-Salātīn, Fasc 1--5 @ /10/ each .. ... ... ... | 3 | 2 |
| Ditto (English) Fasc. 1--5 @ 1/ ... ... ... | 5 | 0 |
| Ṭabaqāt-i-Nāṣirī, ( English ), Fasc. 1-14 @ 1/- each ... ... | 14 | 0 |
| Ditto Index . ... ... ... ... | 1 | 0 |
| Tārīkh-i-Fīrūz Shāhi of Ziyāu-d-dīn Barni Fasc 1--7 @ /10/ each .. | 4 | 6 |
| Tārīkh-i-Fīrūzshāhi, of Shams-i-Sirāj Aif, Fasc. 1--6 @ /10/ each ... | 3 | 12 |
| Ten Ancient Arabic Poems, Fasc. 1--2 @ 1/8/ each ... ... ... | 3 | 0 |
| Tuzuk-i-Jahāngīrī, (Eng ) Fasc. 1 @ 1/ ... ... ... ... | 1 | 0 |
| Wis-o-Rāmin, Fasc. 1--5 @ /10/ each ... ... ... ... | 3 | 2 |
| Zafarnāmah, Vol. I, Fasc. 1--9, Vol. II, Fasc 1--8 @ /10/ each ... ... | 10 | 10 |

---

## ASIATIC SOCIETY'S PUBLICATIONS.

1. ASIATIC RESEARCHES. Vols. XIX and XX @ 10/ each ... ... 20 0
2. PROCEEDINGS of the Asiatic Society from 1870 to 1904 @ /8/ per No.
3. JOURNAL of the Assiatic Society for 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7), 1901 (7), 1902 (9), 1903 (8), 1904 (16), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members

*N. B.—The figures enclosed in brakets give the number of Nos. in each Volume.*

4. Journal and Proceedings, N. S., 1905, to date, ( Nos. 1-4 of 1905 are out of stock ), @ 1-8 per No. to Members and Rs. 2 per No. to Non-Members.
5. Memoirs, 1905, to date. Price varies from number to number. Discount of 25% to Members
6. Centenary Review of the Researches of the Society from 1784-1883 ... 3 0
7. Catalogue of the Library of the Asiatic Society, Bengal, Part I, A to E ; Part 2, F to M ... ... ... ... 4 0
8. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts 1--III, with 8 coloured Plates, 4to. @ 6/ each ... ... 18 0
9. Kaçmiraçabdāmṛta, Parts I & II @ 1/8/ ... ... 3 0
10. Persian Translation of Haji Baba of Ispahan, by Haji Shaikh Ahmad-i-Kirmasi, and edited with notes by Major D. C. Phillott. ... 10 0

---

Notices of Sanskrit Manuscripts, Fasc. 1-34 @ 1/ each ... ... 34 0
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... 5 0

*N.B.*—All Cheques, Money Orders, &c. must be made payable to the "Treasurer, Asiatic Society," only.

15-12-09.

**Books are supplied by V. P. P.**

BIBLIOTHECA INDICA:

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No 1236.






# श्रीशान्तिनाथचरित्रम् ।

# ÇRĪ ÇANTINĀTHA CARITRA

BY

## ÇRĪ AJITA PRABHĀCĀRYA.

EDITED BY

**MUNI INDRAVIJAYA**

DISCIPLE OF

ÇĀSTRA VIÇĀRADA JAINĀCĀRYA

**ÇRĪ VIJAYA DHARMA SŪRI.**

FASCICULUS III.

Calcutta.

PRINTED BY UPENDRA NATHA CHAKRAVARTI, AT THE SANSKRIT PRESS,
5, Nandakumar Choudhury's 2nd Lane.

AND PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL, 57, PARK STREET.

1910.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL

No. 57, PARK STREET, CACUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MR. BERNARD QUARITCH,

11, GRAFTON STREET, NEW BOND STREET, LONDON, W., AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied.—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series*

| Title | Rs. | As. |
|---|---|---|
| *Advaita Brahma Siddhi, Fasc. 2, 4 @ /10/ each | 1 | 4 |
| Advaitachintā Kaustubha, Fasc. 1-3 @ /10/ each | 1 | 14 |
| *Agni Purāṇa, Fasc. 6-14 @ /10/ each | 5 | 0 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-5; Vol. III. Fasc. 1-5, Vol. IV, Fasc. 1-8 @ /10/ each | 14 | 6 |
| Aitereya Locham. | 2 | 0 |
| *Aṇu Bhāṣhya, Fasc. 2-5 @ /10/ each | 2 | 8 |
| Aphorisms of Sāṇḍilya, (English) Fasc. 1 @ 1/- | 1 | 0 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc 1 6 @ /10/ each | 3 | 12 |
| *Atharvana Upanishad, Fasc 4 5 @ /10/ each | 1 | 4 |
| Atmatattaviveka, Fasc I. @ /10/ each | 0 | 10 |
| Açvavaidyaka, Fasc 1-5 @ /10/ each | 3 | 2 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol I, Fasc. 1-6; Vol II. Fasc. 1-5 @ 1/ each | 11 | 0 |
| Bālam Bhaṭṭī, Vol. I, Fasc 1-2, Vol 2, Fasc. 1 @ /10/ each | 1 | 14 |
| Baudhāyana S'rauta Sūtra, Fasc 1-3 Vol II, Fasc 1-2 @ /10/ each | 3 | 2 |
| *Bhāmatī, Fasc 4-8 @ /10/ each | 3 | 2 |
| Bhaṭṭa Dīpikā Vol. I, Fasc. 1-6; Vol. 2, Fasc. 1, @ /10 each | 4 | 6 |
| Baudhyostatrasangraha | 2 | 0 |
| Brahma Sutra, Fasc 1 @ /10/ each | 0 | 10 |
| Bṛhaddēvatā Fasc. 1-4 @ /10/ each | 2 | 8 |
| Bṛhaddharma Purāṇa Fasc 1-6 @ /10/ each | 3 | 12 |
| Bodhisaryāvatāra of Çāntideva, Fasc 1-5 @ /10/ each | 3 | 2 |
| Cri Cantinatha Charita, Fasc. 1 | 0 | 10 |
| Çatadūṣaṇī, Fasc. 1-2 @ /10/ each | 1 | 4 |
| Catalogue of Sanskrit Books and MSS, Fasc 1-4 @ 2 each | 8 | |
| Çatapatha Brāhmaṇa, Vol I, Fasc. 1-7, Vol II, Fasc. 1-5, Vol. III, Fasc. 1-7 Vol. 5, Fasc. 1-4 @ /10/ each | 14 | |
| Ditto Vol. 6, Fasc. 1-3 @ 1/4/ each | 3 | |
| Ditto Voi. VII, Fasc 1-3 @ /10/ | 1 | 14 |
| Çatasāhasrikā Prajñāpāramitā Part, I. Fasc 1-12 @ /10/ each | 7 | |
| *Caturvarga Chintāmaṇi, Vol II, Fasc. 1-25; Vol. III Part I, Fasc. 1-18. Part II, Fasc 1-10 Vol. IV. Fasc 1-6 @ /10/ each | 36 | |
| Ditto Vol. 4, Fasc. 7. @ 1/4/ each | | |
| Ditto Vol. IV, Fasc. 8, @ /10/ | 0 | |
| Çlockavartika, (English) Fasc 1-7 @ 1/4/ each | 8 | |
| *Çrauta Sūtra of Āpastamba, Fasc. 12-17 @ /10/ each | 3 | |
| Ditto Çānkhāyana, Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-4, Vol. III, Fasc. 1-4; Vol 4, Fasc. 1 @ /10/ each | 10 | |
| Çrī Bhāshyam, Fasc 1-3 @ /10/ each | 1 | |
| Dāna Kriyā kaumudī, Fasc 1-2 @ /10/ each | 1 | |
| Gadadhara Paddhati Kālasāra Vol I, Fasc. 1-7 @ /10/ each | 4 | |
| Ditto Āchārasārah Vol. II, Fasc. 1-4 @ /10/ each | 3 | |
| Gobhiliya Grihya Sutra, Vol I @ /10/ each | 3 | |
| Ditto Vol. II. Fasc. 1-2 @ 1/4/ each | 2 | |
| Haralata | 1 | |
| Karmapradiph, Fasc. I | 1 | |
| Kāla Viveka, Fasc 1-7 @ /10/ each | 4 | |
| Kātantra, Fasc 1-6 @ /12/ each | 4 | |
| Kathā Sarit Sāgara, (English) Fasc. 1-14 @ 1/4/ each | 17 | |
| *Kūrma Purāṇa, Fasc. 8-9 @ /10/ each | 4 | |
| Lalita-Vistara, (English) Fasc. 1-3 @ 1/- each | 3 | |
| Madana Pārijāta, Fasc. 1-11 @ /10/ each | 6 | |
| Mahā-bhāṣya-pradīpōdyōta, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-12 Vol. III, Fasc 1-9 @ /10/ each | 18 | |
| Manutikā Sangraha, Fasc. 1-3 @ /10/ each | 1 | |

स्वयं तु स्वयशःकाङ्क्षी समारूढः स कुञ्जरम्।
ययौ केशरिणः पार्श्वे शुभङ्करपुरस्सरः॥ ६२॥
विदारितास्यः सिंहोऽपि रक्ताक्षः सज्जितक्रमः।
उत्पपाताम्बरतले प्रपित्सुः पार्थिवोपरि॥ ६३॥
मा भूद् मत्स्वामिनः पीडेति ध्यायन् स शुभङ्करः।
निपतन्तं जघानैनं मुखे क्षिप्ताऽङ्कुशं शितम॥ ६४॥
राजोचे न त्वया साधु विदधे भोः शुभङ्कर!।
मया जिघांसितः सिंहो यत् चापल्याद् हतोऽन्तरा॥६५॥
न केवलं मृगारातिस्त्वयाऽयं निहतोऽस्य रे!।
मध्ये सर्वनरेन्द्राणां मद्यशोऽपि हतं खलु॥ ६६॥
सोऽवदद् भवतां देव! देहापायाभिशङ्कया।
मया व्यापादितोऽयं हि न तु स्वोत्कर्षकाम्यया॥ ६७॥
अन्यच्च निहतः स्वामि(१)प्रभावेणैव केशरी।
अन्यथा शृणिमात्रेण कथमस्य निकृन्तनम्?॥ ६८॥
कथयिष्यामि सैन्यानामग्रे यत् स्वामिना स्वयम्।
हर्यक्षो निहतस्तत् त्वं माऽप्रमादं व्यधा मयि॥ ६९॥
इदं कार्यं तु प्रत्यक्षमावयोरेव तत् प्रभो!।
चतुष्कर्णस्य मन्त्रस्य नास्य भेदो भविष्यति॥ ७०॥
राजा प्रोवाच यद्येष मन्त्रो भावी स्फुटः सखे!।
तदा मे भविता लोकेऽलीकवादिकलङ्कता॥ ७१॥

---

(१) ङ ञ ट ण प्रमादेनैव।

शुभङ्करोऽब्रवीत् किं न श्रुतमेतत् त्वया प्रभो ! ।
साधोः समर्पितं गुह्यं सह तेनैव दह्यते ॥ ७२ ॥
ततस्तौ सिंहमादाय सैन्यमध्ये समागतौ ।
इति व्यावर्णयामास तदग्रे च बटुः प्रभुम् ॥ ७३ ॥
त्यजन्ति यस्य नादेन मदं मत्तद्विपा अपि ।
लीलया निहतः [1]सोऽद्य स्वामिना नखरायुधः ॥ ७४ ॥
ततश्च पत्तिसामन्ताः संजातामितसंमदाः ।
शिरांसि धूनयन्तस्ते प्राशंसन् पौरुषं [2]प्रभोः ॥ ७५ ॥
भर्तुर्जयमहे तेऽथ संप्राप्ता नगरान्तरे ।
सुवर्द्धापनकं चक्रुस्तूर्यनादपुरस्सरम् ॥ ७६ ॥
महोत्सवमये तस्मिन्नतीते लघुवासरे ।
विसृज्याऽऽस्थानलोकं राट् ययौ देव्या निकेतनम् ॥ ७७ ॥
पप्रच्छ देवी नाथाद्य पुरे किं कश्चिदुत्सवः ? ।
वर्तते तूर्यनिर्घोषो यदयं श्रूयते महान् ॥ ७८ ॥
राजा प्रोवाच हे देवि ! यन्मया निहतो हरिः ।
ततोऽयं विहितो भूपैर्वर्द्धापनमहोत्सवः ॥ ७९ ॥
प्रत्यूचे सा पुनर्नाथोत्तमवंशोद्भवस्य ते ।
किमिदं युज्यते कर्तुं स्वस्याऽऽलोकप्रशंसनम् ? ॥ ८० ॥
शुभङ्करेण बटुना सिंहो व्यापादितो यतः ।
संवर्द्धनमहोऽकारि यशोलुब्धेन तु त्वया ॥ ८१ ॥

---

(१) ज सोऽपि । (२) क ज विभोः ।

तच्छ्रुत्वा भूपतिः क्रुद्धो दध्यौ तस्य दुरात्मनः ।
पश्य दुश्चरितं कीदृक् स्फुटं मिथ्याऽभिभाषिणः ॥ ८२ ॥
गुह्यं कस्यापि नाख्येयमित्युदित्वा पुरो मम ।
तदैव कथयामास देव्याः स्वोत्कर्षलम्पटः ॥ ८३ ॥
प्रच्छन्नं मारणीयोऽयं तन्मया मर्मभाषकः ।
इति ध्यात्वाऽऽरक्षकस्य शिक्षां तां प्रददौ नृपः ॥ ८४ ॥
तेन व्यापादितः सोऽथ निजगेहमुपागतः ।
सिद्धं तद् देव ! ते कार्यं भर्तुश्चेति निवेदितम् ॥ ८५ ॥
अन्यस्मिंश्च दिने देवी पप्रच्छ जगतीपतिम् ।
शुभङ्करबटुर्नाथ ! दृश्यते नाधुना कथम् ? ॥ ८६ ॥
बभाण भूपतिस्तस्य ग्राह्यं नामापि न प्रिये ! ।
सोचेऽपराद्धं किं तेन तव देव ! महात्मना ? ॥ ८७ ॥
ततस्तद्विषये राज्ञा स्वाभिप्राये निवेदिते ।
[1]तयोक्तं न ममाऽऽख्यातं तेनेदं सिद्धमारणम् ॥ ८८ ॥
किं तु दृष्टं मयैवेदं प्रासादे सप्तभूमिके ।
आरूढया कौतुकेन नास्य दोषोऽत्र कश्चन ॥ ८९ ॥
देव ! सत्यं [2]ममाख्याहि किं जीवति मृतोऽथ सः ? ।
इति पृष्टे तया भूपो भूयः सानुशयोऽवदत् ॥ ९० ॥
अकार्यं हा ! मया देवि ! कृतमद्य महत्तरम् ।
यदसौ घातितः सर्वगुणरत्ननिधिर्बटुः ॥ ९१ ॥

(१) क. ख. ग. देव्योक्तम् । (२) क. ममाख्या- ।

नास्ति मत्सदृशः कश्चिदविमर्शितकारकः ।
कृतोपकारं निघ्नंस्तं कृतघ्नोऽप्यहमेव हि ॥ ८२ ॥

अभाणि देव्या रभसकृतानामिह कर्मणाम् ।
विपाको हृदये दाहो स्यादाजन्मापि शल्यवत् ॥ ८३ ॥

राजन् ! रात्रेविनोदाय कथितेयं कथा मया ।
कथायाः परमार्थस्तु श्लोकयुग्मेन कथ्यते ॥ ८४ ॥

तद्यथा -

भक्तः सर्वगुणैर्युक्तो हतो येन शुभङ्करः ।
कृतघ्नो भूतले शत्रुदमनात् कोऽपि नापरः ॥ ८५ ॥

अकारणोत्पन्नरोषे हिंसा निर्दोषमानुषे ।
कार्या नरेण नो शत्रुदमनेन कृता यथा ॥ ८६ ॥

आख्याय सत्कथामेतां गते यामे तृतीयके ।
रात्रेर्दुर्लभराजोऽपि समुत्थाय ययौ गृहम ॥ ८७ ॥

ततोऽसौ मन्मथो कीर्तिराजं भूपतिरब्रवीत ।
कार्यमेकं साम्प्रतं त्वया मन्त्र्यते किं न वा ? ॥ ८८ ॥

सोऽप्यवोचत न चेत कार्यं साधयिष्यामि ते विभो ! ।
तत त्वामाराधयिष्यामि चलत्क्ष्मरहं कथम ? ॥ ८९ ॥

भ्रातः ! शापमानयेति भणितः सोऽथ भूभुजा ।
गतप्रत्यागतं कृत्वा किञ्चिद्दूरे सुखोऽस्विदम ॥ ३०० ॥

शर्वर्याः प्रान्तकालत्वात् सर्वे जाग्रति यामिकाः ।
पुनः प्रस्तावे देवाय तवाऽऽदेशो विधास्यते ॥ १ ॥

सोऽपि प्रस्तावनां कृत्वाऽनुज्ञातः पृथिवीभुजा ।
कथां कथयति स्मैनां तस्य मन्युविनाशिनीम् ॥ २ ॥
इहाभूद् भरतक्षेत्रे महापुरपुरे नृपः ।
शत्रुञ्जयाभिधस्तस्य प्रियङ्गुरिति वल्लभा ॥ ३ ॥
अन्यदा नैगमः कश्चिद् जात्यमेकं तुरङ्गमम् ।
भूपतेर्ढौकयामास तस्य देशान्तरागतः ॥ ४ ॥
पृष्ठे पर्याणमाधाय तत्राऽऽरुह्य महीपतिः ।
वाहयामास वाहं तं गतिविज्ञानहेतवे ॥ ५ ॥
वेगात् प्रधाविते तस्मिन् तस्य शिक्षाविपर्ययम् ।
सामन्तानां समाचख्यौ स वणिग् पूर्वविस्मृतम् ॥ ६ ॥
ततोऽश्वेषु समारुह्याऽऽदाय भक्ष्यजलाऽऽदिकम् ।
गच्छन्तं तं महीपालमनुजग्मुः पदातयः ॥ ७ ॥
अथ वेगं निरुन्धाने पार्थिवे स तुरङ्गमः ।
तं जग्राह विशेषेण वैपरीत्येन शिक्षितः ॥ ८ ॥
आकृष्यमाणेन वल्गायाः पाणिभ्यां रक्तमक्षरत् ।
भूपतिः सोऽथ निर्वेगो मुमोच शिथिलामिमाम् ॥ ९ ॥
अश्वोऽप्यस्यां विमुक्तायां पदमात्रं चचाल न ।
ततो दुःशिक्षित इति तं विवेद महीपतिः ॥ १० ॥
तस्मादुत्तीर्य पर्याणमथापनयति स्म सः ।
जातकोटस्तुरङ्गोऽपि पतित्वा भूतले मृतः ॥ ११ ॥
भीमाटव्यामथो तस्यां दवदग्धवनान्तरे ।
तृष्णाक्षुधापीडिताङ्गो बभ्राम पृथिवीपतिः ॥ १२ ॥

वटमेकमथाऽद्राक्षीद् दीर्घशाखं सुविस्तृतम् ।
श्रान्तो गत्वा शनैस्तस्य च्छायायां निषसाद सः ॥ १३ ॥
पार्श्वावलोकनं तेन कुर्वाणेन निरीक्षिताः ।
तरोस्तस्यैव शाखायाः पतन्तो जलबिन्दवः ॥ १४ ॥
ततः सोऽचिन्तयदिदं वर्षाकालोद्भवं जलम् ।
शाखारन्ध्रे स्थितमियत्कालं पतति संप्रति ॥ १५ ॥
पलाशभाजनं सोऽथ कृत्वा तत्र न्यवेशयत् ।
क्रमेण पूरितं तत् चेषन्नीलकलुषाम्बुना ॥ १६ ॥
तद् गृहीत्वा नृपः पातुं यावदभ्युद्यतोऽभवत् ।
तावत् तत्राऽऽययौ पक्षी कश्चिदुत्तीर्य पादपात् ॥ १७ ॥
तद् नीरभाजनं तेन पातितं नृपतेः करात् ।
तथैव तरुशाखायां गत्वा तस्थौ च [1]स स्वयम् ॥ १८ ॥
विलक्षो भूपतिर्भूयः कृत्वा पूर्णं जलस्य तत् ।
यावत् पास्यति तेनैवापाति तावद् विहायसा ॥ १९ ॥
ततः प्रकुपितो भूपो दध्यौ भूयः समेष्यति ।
यद्येष पक्षी दुष्टाऽऽत्मा मारणीयस्तदा मया ॥ २० ॥
चिन्तयित्वेति जगृहे कशामेकेन पाणिना ।
जलार्थं स्थापयामास द्वितीयेन पुनः [2]पुटीम् ॥ २१ ॥
दध्यौ च विहगः सोऽथ कुपितोऽयं महीपतिः ।
चेत् पुटं पातयिष्यामि तद् मामेष हनिष्यति ॥ २२ ॥

(१) ह स्वतरम् । (२) ज ह पुटम् ।

नो चेद् विषे निपीतेऽस्मिन् मरिष्यत्येष निश्चितम् ।
ततो वरं विपन्नोऽहं न त्वसौ लोकपालकः ॥ २३ ॥
एवं विचिन्त्य भूयोऽपि पातितं तेन तत्करात् ।
कशाऽऽघातेन राज्ञा च पक्षीन्द्रोऽपि निपातितः ॥ २४ ॥
पुनः प्रहृष्टचित्तेनास्थापि राज्ञा पुटोऽम्भसे ।
क्रमेण नीरकं तत् तु पतति स्माग्रतोऽग्रतः ॥ २५ ॥
ततश्चोत्थाय भूपालः किमेतदिति शङ्कितः ।
यावद् व्यलोकयत् तावद् ददर्शाजगरं तरौ ॥ २६ ॥
सोऽथ दध्यौ मुखादस्य सुप्तस्य गरलं किल ।
पतदेतदपास्यं चेदमरिष्यं तदा ध्रुवम् ॥ २७ ॥
पश्याहो ! पक्षिणाऽनेन चेष्टामाबिभ्रता सताम् ।
मम प्राणकृते प्राणास्तृणवत्कल्पिता निजाः ॥ २८ ॥
हा ! वृथा कोपयुक्तेन परमार्थमजानता ।
मया निष्ठुरचित्तेन हतः पक्षिवरोऽमता ॥ २९ ॥
इति खेदपरस्यास्य समेयुस्तत्र सैनिकाः ।
दृष्ट्वा स्वस्वामिनं ते च मद्यो मुमुदिरेतराम् ॥ ३० ॥
नीराऽऽहाराऽऽदिभिः स्वस्थीभूतोऽथ जगतीपतिः ।
पक्षिणं तं समादाय निजं पुरमथाऽऽययौ ॥ ३१ ॥
विधाय पक्षिदेहस्य दाहं चन्दनदारुभिः ।
दत्त्वा जलाञ्जलिं तस्य स आगाद् निजमन्दिरम् ॥ ३२ ॥
पृष्टो दुःखाऽऽमनस्कोऽसौ तत्र सामन्तमन्त्रिभिः ।
प्रेतकार्यं पक्षिणोऽपि कृतं स्वस्येव किं विभो ! ॥ ३३ ॥

ततो राजा निजां वार्तां यथावृत्तां न्यवेदयत् ।
पक्षिघातानुशयं च विसस्मार कदापि न ॥ ३४ ॥
यदेवमनुतापः स्यादविचारितकारिणाम् ।
ततो विचार्य कर्तव्यं कार्यं सुन्दरबुद्धिभिः ॥ ३५ ॥
कथयित्वा कथामेतां कीर्तिराजे स्थिते सति ।
प्रातस्तूर्यरवो जज्ञे पेठुर्मङ्गलपाठकाः ॥ ३६ ॥
अथोत्थाय ययौ कीर्तिराजो राजाऽप्यचिन्तयत् ।
हन्तैकचित्ताः सर्वेऽमी तद् न जातं ममेप्सितम् ॥ ३७ ॥
दास्यानीतजलेनाथ प्रक्षाल्य वदनं नृपः ।
कृत्वा सुवेषमास्थानमण्डपे निषसाद सः ॥ ३८ ॥
अत्रान्तरेऽलकन्यस्तकरद्वन्द्वः प्रसन्नवाक् ।
एत्य विज्ञापयामास देवराजो महीपतिम् ॥ ३९ ॥
यदि देवोऽनुजानाति किञ्चिद् विज्ञापयामि तत् ।
कृतेनाप्यमुना सोऽथानुज्ञातः संज्ञया भ्रुवाः ॥ ४० ॥
ततः पिशाचवचनश्रवणाऽऽदिकथाऽखिला ।
राज्ञोऽग्रे कथिता तेन भयविस्मयकारिणी ॥ ४१ ॥
आकृष्य वासभवनाद् द्विखण्डं तदहेर्वपुः ।
अदर्शि चास्य विद्दर्षविषनाशनभेषजम् ॥ ४२ ॥
राजाऽथ चिन्तयामास हा ! अनेन महात्मना ।
मम जीवितरक्षार्थं विहितं पश्य कीदृशम् ? ॥ ४३ ॥
असमीक्षितकारित्वात् परोपकृतिकार्यपि ।
विघातयितुमारब्धो मयाऽसावपि पाप्मना ॥ ४४ ॥

एतैश्च वत्सराजाद्यैः कथाऽऽख्यानविचक्षणैः ।
तत् साधु विदधे यद् न निहतोऽयं नरोत्तमः ॥ ४५ ॥
अवे च स्वपरीवारमिति सर्वगुणाऽऽस्पदम् ।
कुलदेवतया दत्ता अपुत्रस्य सुता मम ॥ ४६ ॥
ततोऽहं स्थापयिष्यामि देवराजं महीपतिम् ।
कुमारं वत्सराजं च ग्रहीष्यामि व्रतं स्वयम् ॥ ४७ ॥
एवमाकर्ण्य [1]लोकेन प्रोक्तं देव ! प्रतीक्ष्यताम् ।
कालं [2]कंचित् ततश्चान्यकाले कुर्या इदं खलु ॥ ४८ ॥
राजा प्रोवाच मद्वंश्या अदृष्टपलिता नृपाः ।
प्रतिपद्य व्रतं कृत्वा तपश्च सुगतिं गताः ॥ ४९ ॥
अहं पुनरियत्कालं स्थितो राज्यधरं विना ।
इदानीं तु करिष्यामि निश्चयेन समीहितम् ॥ ५० ॥
ततो दैवज्ञनिर्दिष्टे सुमुहूर्ते महीपतिः ।
देवराजं नृपं चक्रे कुमारं चापरं तथा ॥ ५१ ॥
अन्यद्युर्नन्दनवनोद्याने तत्र समाययौ ।
बहुशिष्यपरीवारः श्रीदत्त इति साधुराट् ॥ ५२ ॥
उद्यानपालकेनास्य समाख्याते समागमे ।
ववन्दे परया भक्त्या गत्वा तं जगतीपतिः ॥ ५३ ॥
उपविश्य यथास्थानं श्रुत्वा सद्धर्मदेशनाम् ।
संप्राप्यावसरं सोऽथ पप्रच्छेव कृताञ्जलिः ॥ ५४ ॥

(१) द लोकैश्च । (२) ख घ ङ द किंचित ।

प्रभो ! प्रोक्तः पिशाचाभ्यां यदि नाम ममात्ययः ।
देवयोन्युदितस्यापि तस्याभूदत्ययः कथम् ॥ ५५ ॥
सूरिराख्यदहो राजन् ! गौरी नाम गृहास्तव ।
बभूव रूपसम्पन्ना वैश्यवंशसमुद्भवा ॥ ५६ ॥
कर्मदोषेण केनापि जाता दौर्भाग्यदूषिता ।
मंजन्म सा तवाऽनिष्टा दृष्टा दृष्ट्याऽप्यसौख्यदा ॥ ५७ ॥
ततः सा जातवैराग्या गत्वा पितृगृहे निजे ।
अज्ञानतपसाऽऽत्मानं शोषयित्वा व्यपद्यत ॥ ५८ ॥
संप्राप्तव्यन्तरीभावा स्मृत्वा तं पूर्वमत्सरम् ।
अधिष्ठायोरगं कायं प्रविष्टा सा तवाऽऽलये ॥ ५९ ॥
ज्ञात्वा पिशाचयो रूपं कुलदेवतया तव ।
ज्ञापितो देवराजोऽयमसुं त्वत्क्षेमहेतवे ॥ ६० ॥
अचिन्त्या मानुषैर्देवी शक्तिर्यद्यपि वर्त्तते ॥
तथापि पौरुषं तेजः क्षमं तल्लङ्घने यतः ॥ ६१ ॥
महाविषधरः क्रूरो व्यन्तर्याऽधिष्ठितोऽपि सः ।
बलिना देवराजेन लीलयैव हतस्ततः ॥ ६२ ॥ (युग्मम्)
सूरिं विज्ञपयामास पुनर्नत्वाऽथ भूपतिः ।
भाग्योदयेन मुक्तोऽहमसमाद् व्यसनात् प्रभो ! ॥ ६३ ॥
भाग्यमेव ततः कर्तुं युज्यतेऽतः परं मम ।
तद् देहि दक्ष ! सुव्रज्यां प्रव्रज्यां शुभदेहिनाम् ॥ ६४ ॥
ततश्च सूरिणा सूत्रविधानेनैष दीक्षितः ।
महाव्रतानि चारोप्य शिक्षितः सक्रमाच्चिक्रम् ॥ ६५ ॥

स चास्य कथयामास प्रतिबोधविधायकम् ।
ज्ञाताधर्मकथाऽऽदिष्टं रम्यं भावि कथानकम् ॥ ६६ ॥
प्रसिद्धे मगधे देशे पुरे राजगृहाभिधे ।
धनो नामाभवत् श्रेष्ठी लक्ष्म्या वैश्रवणोपमः ॥ ६७ ॥
धारिणी गृहिणी तस्य सुतास्तत्कुक्षिसम्भवाः ।
पुरुषार्था इवाभूवन् चत्वारस्तस्य विश्रुताः ॥ ६८ ॥
प्रथमो धनपालाख्यो धनदेवो द्वितीयकः ।
धनगोपस्तृतीयश्च चतुर्थो धनरक्षितः ॥ ६९ ॥
उज्झिका भोगिका चैव धन्निका रोहिणी तथा ।
तेषां भार्याः क्रमेणैताः चतस्रो जज्ञिरे शुभाः ॥ ७० ॥
सुप्तजागरिताऽन्येद्युः स श्रेष्ठी धनसंज्ञकः ।
यामिन्याः पश्चिमे यामे चिन्तां चक्रे निजौकसः ॥ ७१ ॥
यथा सर्वगुणाऽऽधारः पुरुषैर्वर्तते गृहम् ।
गृहिण्याऽपि तथैवेदं विदुः शास्त्रविदो यतः ॥ ७२ ॥
भुङ्क्ते गृहजने भुक्ते सुप्ते स्वपिति तत्र या ।
जागर्ति प्रथमं चास्मात् सा गृहस्यैव गेहिनी ॥ ७३ ॥
ततः परीक्ष्य जानामि स्वामिनी का भविष्यति ? ।
मध्यादासां वधूनां मे गृहस्याधिगुणा मम ॥ ७४ ॥
विचिन्त्येति समादेशं स्नुषाणां प्रदद्दौ प्रगे ।
सारा रसवती सर्वा प्रगुणीक्रियतामिति ॥ ७५ ॥

---

। स्वर्ग ड सूरानां ।

तासां वधूनां स्वजनवर्गं सर्वं निमन्त्र्य तम् ।
पौरं चान्यजनं श्रेष्ठी भोजयामास गौरवात् ॥ ७६ ॥
संमान्य वस्त्रताम्बूलाऽऽदिभिः सर्वमथो जनम् ।
दत्त्वा शालिकणान् पञ्च प्रोचे ज्येष्ठवधूमिति ॥ ७७ ॥
प्रत्यक्षं सर्वलोकानां मया ह्येते तवार्पिताः ।
मार्गयामि यदैवाहमर्पणीयास्तदा स्नुषे ! ॥ ७८ ॥
विसृष्टा तेन गत्वाऽथ विजने सेत्यचिन्तयत् ।
नूनं वृद्धस्वभावेन जातो मे श्वशुरो विधीः ॥ ७९ ॥
एवं मेलापकं कृत्वा दत्ता येन कणा इमे ।
अन्यान् तस्यार्पयिष्यामीति ध्यात्वा त्यजति स्म तान् ॥८०॥
एवं दत्ता द्वितीयस्याः साऽपि दध्यौ तथैव हि ।
परं सा वितुषान् कृत्वा कणान् भक्षयति स्म तान् ॥ ८१ ॥
तृतीयया तु संचिन्त्य कार्यमेतद् गरीयिति ।
रक्षितास्ते सुवस्त्रेण बद्धा भूषणमध्यगाः ॥ ८२ ॥
ते कणाभूर्यवद्धा च स्वबन्धूनां समर्पिताः ।
उप्ता वर्षासु संरूढा जातास्त्वातिफलान्विताः ॥ ८३ ॥
प्रथमे वत्सरे तेषामभूत् प्रस्थोऽपरेषु च ।
संजाता बहवः कुम्भास्ततः कुम्भशतान्यपि ॥ ८४ ॥

(१) ड - स्वया ।

(२) ड स्तुर्या सर्वान् ध्यात्वा लात्वा पञ्च कणानि च ।
गत्वा च पैतृके गेहे दापयति स्म नियन्त्रा ॥ ८३ ॥

अभूवन् पञ्चमे वर्षे शालिपल्यशतान्यथ ।
पुनर्निमन्त्र्य लोकं तं श्रेष्ठी भोजयति स्म च ॥ ८५ ॥
मार्गयामास तान् पञ्च कणान् ज्येष्ठवधूं ततः ।
पल्यान्तरात् समानीयाऽर्पयामास सकाऽपि तान् ॥ ८६ ॥
देवगुर्वादिशपथपूर्वं भणितया तया ।
तस्य सत्यं समाख्यातं हृष्टः श्रेष्ठी ततोऽवदत ॥ ८७ ॥
मया समर्पिताः शालिकणा यदनयोज्झिताः ।
रजोभस्मगोमयाऽऽदि त्याज्यं तदनया गृहात् ॥ ८८ ॥
[1]भुक्त्वा शालिकणांस्त्वं द्वितीयाऽपि स्नुषाऽमुना ।
कृता रसवतीमुख्यगृहव्यापारकारिणी ॥ ८९ ॥
चक्रे वधूं तृतीया च शालिरक्षाविधायिनी ।
मणिमौक्तिकरूप्यादिभाण्डागाराधिकारिणी ॥ ९० ॥
शालिवृद्धिकरी साऽथ चतुर्थी रोहिणी वधूः ।
गृहस्य स्वामिनी चक्रे श्रेष्ठिना दीर्घदर्शिना ॥ ९१ ॥
यथायुक्तविधानेन कृत्वैवं सुस्थितं गृहम् ।
निश्चितं स व्यधात श्रेष्ठी धर्मव्यापारमन्वहम ॥ ९२ ॥
श्रेष्ठितुल्यो गुरुर्ज्ञेयः स्नुषातुल्याश्च दीक्षिताः ।
योज्या महाव्रतानां च पञ्चशालिकणोपमाः ॥ ९३ ॥
सङ्घश्चतुर्विधोऽप्यत्र कुलमेलनसन्निभः ।
महाव्रतप्रदाने च तत्समक्षं विधीयते ॥ ९४ ॥

(1) इः द्वितीया भक्षिता ज्ञात्वा पाकस्थाने नियोजिता ।
तृतीया रक्षिता ज्ञात्वा भाण्डागाराऽधिकारिणीम ॥ ८६ ॥

उज्झिकातुल्य आख्यातः शिष्यः त्यक्तव्रतो हि यः ।
इह लोके परलोके स भवेद् दुःखभाजनम् ॥ ६५ ॥
लिङ्गमात्रोपजीवी यः स द्वितीयस्नुषासमः ।
व्रतपालनसंप्रीतो भाण्डागारवधूपमः ॥ ६६ ॥
धर्मदेशनयाऽन्येषामप्यारोप्य व्रतानि यः ।
सूरिस्तद्वृद्धिकारी स्यात् स रोहिण्या समो मतः ॥ ६७ ॥
श्रीवीरजिनकालेऽदो भविष्यति कथानकम् ।
ततो व्रतानि पञ्चात्राऽधुना चत्वारि तानि तु ॥ ६८ ॥
एवं शिक्षाकथां श्रुत्वा जितशत्रुर्महीपतिः ।
प्रव्रज्यां पालयामास श्रीदत्तगुरुसन्निधौ ॥ ६९ ॥
तद् भो भव्याः ! अहिंसाऽऽदिलक्षणं धर्ममुत्तमम् ।
परीक्ष्य विदधीतेति क्षेमङ्करजिनोऽब्रवीत् ॥ ४०० ॥
दुःखपर्वतदम्भोलिर्भाजनं सुखसन्ततेः ।
अहिंसा व्रतमुख्या सा स्वर्गमोक्षविधायिनी ॥ १ ॥
सत्येन लभ्यते कीर्तिः सत्यं विश्वासकारणम् ।
सत्यं जयति लोकेऽस्मिन् द्वितीयं धर्मलक्षणम् ॥ २ ॥
अदत्तत्यागतो नृणां राजदण्डो न जायते ।
विशिष्टजनसंयोगो निर्भयत्वं च जायते ॥ ३ ॥
ब्रह्मव्रतेन तेजस्वी सुभगश्च भवेद् नरः ।
नपुंसकत्वं तिर्यक्त्वं कदापि न लभेत च ॥ ४ ॥

---

१ ज महामुनिः ।

अभिग्रहेण वित्तस्य चित्तं सन्तोषपूरितम् ।
मुक्तिश्च क्रमयोगेन जायते भव्यदेहिनः ॥ ५ ॥
एतेषु नियतं धर्मलक्षणेष्वपि पञ्चसु ।
यूयं महानुभावा भोः ! प्रयत्नं कुरुतान्वहम् ॥ ६ ॥
श्रुत्वेमां देशनां जीवाः प्रतिबुद्धा अनेकशः ।
प्रावर्ति च जिनेन्द्रेण तीर्थं गणधराऽऽदिकम् ॥ ७ ॥
वज्रायुधोऽपि धर्मस्य प्रतिपत्तिं विधाय ताम् ।
प्रणम्य भगवन्तं च प्रविवेश पुरीं निजाम् ॥ ८ ॥
अन्यदाऽऽयुधशालायां चक्ररत्नं सुनिर्मलम् ।
समुत्पन्नं तस्य यक्षसहस्राऽधिष्ठितं वरम् ॥ ९ ॥
विधायाष्टदिनान्यस्य पूजां तदनुगाम्यसौ ।
षट्खण्डं साधयामास विजयं मङ्गलावतीम् ॥ १० ॥
ततो निजपुरीं प्राप्तः चक्रवर्तिश्रियाऽन्वितः ।
सहस्रायुधपुत्रं स यौवराज्ये न्यवेशयत् ॥ ११ ॥
अन्यदाऽऽस्थानमासीनः स वज्रायुधचक्रभृत् ।
अभूद् यावद् नृपामात्यपदातिपरिवारितः ॥ १२ ॥
तावद् नभस्तलात् कश्चिदेत्य विद्याधरो युवा ।
भयात् प्रकम्पमानाङ्गः शरणं तं समाश्रितः ॥ १३ ॥
तस्य पृष्ठे वरा काचित् खड्गखेटकधारिणी ।
आगाद् विद्याधरी विद्याधरश्चैको 'गदाधरः ॥ १४ ॥

---

(१) ङ युवा पुनः ।

खेचरेणाऽमुना चक्री भणितः सपरिच्छदः ।
पापकर्म[1]कृतेरस्यापराधः श्रूयतामिति ॥ १५ ॥
अहं सुकच्छविजये वैताढ्ये शुक्लपूःस्थितः ।
पुत्रः पवनवेगाख्यः शुक्लदत्तस्य भूपतेः ॥ १६ ॥
सुकान्ता नाम मे कान्ता तस्याः कुक्षिसमुद्भवा ।
एषा शान्तिमती नाम्ना मम पुत्री शुभाकृतिः ॥ १७ ॥
अथान्येद्युर्मया दत्तामिमां प्रज्ञप्तिसंज्ञिकाम् ।
ययौ साधयितुं विद्यां मणिसागरपर्वते ॥ १८ ॥
विद्यां प्रसाधयन्तीयं हृताऽनेन दुरात्मना ।
अत्रान्तरे च विद्या सा सिद्धाऽस्या भक्तिरञ्जिता ॥ १९ ॥
तस्या बिभ्यद् विवेशायं युष्माकं शरणे प्रभो ! ।
तत्रापश्यन् नगे पुत्रीमत्रागामहमप्यरम् ॥ २० ॥
तदेनं मत्सुताशीलविध्वंसनरुचिं बलात् ।
मुञ्च राजन् ! यथैकेन गदाऽऽघातेन हन्म्यहम् ॥ २१ ॥
अवधिज्ञानतो ज्ञात्वा तत्पूर्वभवचेष्टितम् ।
प्रतिबोधकृते तेषां चक्री वज्रायुधोऽब्रवीत् ॥ २२ ॥
कारणेन हृता येन पुत्री पवनवेग ! ते ।
खेचरेणाऽमुना तत् त्वं शृण्वहं कथयामि भोः ! ॥ २३ ॥
विज्ञाय ज्ञानमाहात्म्यं सर्वे सभ्या निजप्रभोः ।
श्रोतुमभ्युद्यता जाताः स चाऽऽचख्याविदं स्फुटम् ॥ २४ ॥

[1] इ -रते- ।

द्वीपस्यास्यैव विभूषैरवतक्षेत्रमध्यगे ।
पुरे विन्ध्यपुरे राजा विन्ध्यदत्ताभिधोऽभवत् ॥ २५ ॥
पत्नी सुदक्षिणा तस्य जज्ञे तत्कुक्षिसम्भवः ।
तनयो नलिनकेतुरिति ख्यातो महीतले ॥ २६ ॥
तत्रैव नगरे धर्ममित्रसार्थपतेः सुतः ।
श्रीदत्ताकुक्षिसम्भूतो दत्तो नामाभवद् धनी ॥ २७ ॥
रूपेण रतिसङ्काशा कान्त्या चन्द्रप्रियासमा ।
जज्ञे प्रभङ्करानाम्नी दत्तस्य गृहिणी वरा ॥ २८ ॥
सुशृङ्गाररसमये वसन्तसमयेऽन्यदा ।
गत्वोद्यानवने दत्तः क्रीडति स्म तया सह ॥ २९ ॥
नृनाथतनयः सोऽथ दृष्ट्वा तां सुन्दराऽऽकृतिम् ।
बाणैर्विषमबाणस्य पञ्चभिस्ताडितो हृदि ॥ ३० ॥
स्वामित्वयौवनैश्वर्यगर्वितः सोऽथ तां ततः ।
अपजह्रेऽगणयित्वा कलङ्कं कुलशीलयोः ॥ ३१ ॥
भुङ्क्ते स्म विषयसुखं कुमारः स तया सह ।
दत्तश्च तद्वियोगार्तो ययावुद्यानमन्यदा ॥ ३२ ॥
सुसाधुः सुमनास्तत्र तत्कालोत्पन्नकेवलः ।
दृष्टोऽमुना वन्द्यमानो देवदानवमानवैः ॥ ३३ ॥
तेनापि वन्दितो भावसार मुनिवरश्च सः ।
बोधयामास दत्तं तं धर्मदेशनयाऽऽयया ॥ ३४ ॥
कृत्वा दानाऽऽदिकं धर्मं मृत्वा चाऽऽयुःक्षयेऽथ सः ।
सुकच्छविजये वैताढ्याद्रौ विद्याधरेशितुः ॥ ३५ ॥

महेन्द्रविक्रमस्याऽभूत् तनयोऽजितसेनकः ।
तस्यापि कमलानाम्नी बभूव सहचारिणी ॥३६॥ (युग्मम्)
इतः स नलिनकेतू राज्यं संप्राप्य पैतृकम् ।
प्रभङ्कराऽऽख्यया सार्द्धं गृहवासमपालयत् ॥ ३७ ॥
अधिरूढोऽन्यदा भूमिं स्वप्रासादस्य सप्तमीम् ।
स ददर्शाश्चितं मेघैः पञ्चवर्णैर्नभस्तलम् ॥ ३८ ॥
तस्य पश्यत एवेदं मेघवृन्दं सकौतुकम् ।
प्रचण्डपवनक्षिप्तं [1]खण्डखण्डं ययौ क्षणात् ॥ ३९ ॥
तद्दृष्ट्वा जातसंवेगः स दध्यौ द्रविणाऽऽदिकम् ।
सांसारिकमहो ! वस्तु सर्वमेतदिवाध्रुवम् ॥ ४० ॥
मयाऽज्ञानविमूढेन हरता हा ! परस्त्रियम् ।
क्षणिकस्य सुखस्यार्थे बहुपापमुपार्जितम् ॥ ४१ ॥
तत् प्रपद्य परिव्रज्यां तपोनियमवारिणा ।
पापकर्मविलिप्तं स्वं निर्मलं प्रकरोम्यहम् ॥ ४२ ॥
निवेश्य तनयं राज्ये सोऽथ त्यक्त्वा नृपश्रियम् ।
उपाददे परिव्रज्यां क्षेमङ्करजिनान्तिके ॥ ४३ ॥
विशुद्धां पालयित्वा तां समासाद्य च केवलम् ।
धौतकर्ममलः सिद्धिमाससाद स शुद्धधीः ॥ ४४ ॥
साऽपि प्रभङ्करानाम्नी तपः चान्द्रायणाभिधम् ।
गणिन्याः सुव्रताख्यायाः समीपे विदधेऽमलम् ॥ ४५ ॥

---

(१) ख घ ङ ञ खण्डखण्डैः ।

सेयं मृत्वा समुत्पन्ना पुत्री शान्तिमती तव ।
अस्याः प्राग्भवभर्ताऽयं खेचरोऽजितसेनकः ॥ ४६ ॥
'दृष्ट्वा विद्यां साधयन्तीं समुत्क्षिप्ता विहायसा ।
इयं पूर्वभवस्नेहमोहितेनाऽमुना ध्रुवम् ॥ ४७ ॥
ततः पवनवेग ! त्वं त्वं च शान्तिमति ! स्फुटम् ।
मुञ्च कोपं धृताटोपमस्योपरि निरर्थकम् ॥ ४८ ॥
इति वज्रायुधवाक्यं श्रुत्वा तौ सा च बालिका ।
अन्योन्यं क्षमयन्ति स्मापराधं प्रीतचेतसः ॥ ४९ ॥
पुनश्चक्री समाचख्यौ समुद्दिश्य सभाजनम ।
अतीतमुक्तमेतेषां भविष्यत् कथयामि भोः ! ॥ ५० ॥
अमूभ्यां सहिता शान्तिमती दीक्षां ग्रहीष्यति ।
रत्नावलीतपः कृत्वाऽनशनेन विपत्स्यते ॥ ५१ ॥
साधिकसागरद्वन्द्वस्थितिर्वृषभवाहनः ।
स्वामी समस्तदेवानामीशानेन्द्रो भविष्यति ॥ ५२ ॥
वायुगत्यजितसेननाम्नोः साध्वोस्तदा पुनः ।
घातिकर्मेन्धने दग्धे भावि केवलमुत्तमम् ॥ ५३ ॥
केवलज्ञानमहिमां तयोः कृत्वाऽर्चनं तथा ।
स्वस्याङ्गस्य निजं स्थानमीशानेन्द्रो गमिष्यति ॥ ५४ ॥
इन्द्रोऽपि हि ततश्च्युत्वा कुले लब्ध्वा मनुष्यताम् ।
दीक्षां चाऽऽदाय निष्कर्मा निर्वाणं समवाप्स्यति ॥ ५५ ॥

---

(१) द दृष्ट्वा विद्यां साधयन्तीं ।

तच्छ्रुत्वा विस्मिताः सर्वेऽप्येवमूचुः सभासदः ।
अहो अस्मत्प्रभोर्ज्ञानं कालत्रितयदीपकम् ॥ ५६ ॥
साऽथ शान्तिमती वायुवेगश्चाऽजितसेनकः ।
त्रयोऽपि चक्रिणं नत्वा जग्मुस्ते स्थानमात्मनः ॥ ५७ ॥
कुमारस्य सहस्रायुधस्याथ तनयोऽभवत् ।
जवनाकुक्षिसञ्जातो नाम्ना कनकशक्तिकः ॥ ५८ ॥
आद्या कनकमाला वसन्तसेना तथाऽपरा ।
उभे बभूवतुस्तस्य प्रिये तुल्यकुलोद्भवे ॥ ५९ ॥
क्रीडां कर्तुमथाऽन्येद्युः [1]स गतो गहनं वनम् ।
ददर्शैकं प्रकुर्वन्तं [2]पतनोत्पतने नरम् ॥ ६० ॥
पृष्टोऽत्र कारणं तेन सोऽवदद् खेचरोऽस्म्यहम् ।
वैताढ्यवासी सर्वत्राऽस्खलितो विचरामि भोः ! ॥ ६१ ॥
इहागत्य चिरं स्थित्वा गच्छतः पुनरेव मे ।
पदमेकं खगामिन्या विद्याया भद्र ! विस्मृतम् ॥ ६२ ॥
ततो गन्तुमनीशोऽहं करोम्येवंविधक्रियाम् ।
कुमारः स्माऽऽह भोः ! तावत् पठ विद्यां ममाग्रतः ॥ ६३ ॥
विद्याधरोऽप्यपाठीत् तां सत्पुमानिति तत्पुरः ।
पदानुसारिलब्ध्या कुमारः पूरयति स्म तत् ॥ ६४ ॥
खेचरोऽथ कुमाराय स्वविद्यां प्रददौ मुदा ।
तेन प्रणीतविधिना साधयामास सोऽपि ताम् ॥ ६५ ॥

---

(१) क॰ समगाद् । (२) ख क॰ पतनोत्पतनम् ।

स्वस्थानमगमत् खेटः कुमारोऽपि यदृच्छया ।
विद्याबलेन बभ्राम प्रियाद्वययुतो भुवि ॥ ६६ ॥
हिमवन्तमथान्येद्युः शिलोच्चयमगादसौ ।
ददर्श चात्र विपुलमतिं विद्याधरं मुनिम् ॥ ६७ ॥
प्रणम्य चरणौ तस्य कुमारः प्रेयसीयुतः ।
निषसाद यथास्थानं मुनिश्चक्रे च देशनाम ॥ ६८ ॥
कुलं रूपं कलाऽभ्यासो विद्या लक्ष्मीर्वराङ्गना ।
ऐश्वर्यं सुप्रभुत्व च धर्मेणैव प्रजायते ॥ ६९ ॥
धर्मश्चतुर्विधो येन भवेत् पूर्वभवे कृतः ।
स मनोवाञ्छितं सर्वं लभते पुण्यसारवत् ॥ ७० ॥
पुण्यसारः प्रभो ! कोऽसाविति पृष्टोऽमुना मुनिः ।
तत्कथां कथयामास [1]प्रतिबोधविधायिनीम् ॥ ७१ ॥
अस्त्यत्र भरतक्षेत्रे जीवाजीवाऽऽदि[2]तत्त्ववत् ।
नानाऽद्भुतमनोहारि परं गोपालयाऽऽह्वयम् ॥ ७२ ॥
पुरन्दरसमश्रीको धर्मार्थी राजमानितः ।
महाजनस्य मुख्योऽभूत् तत्र श्रेष्ठी पुरन्दरः ॥ ७३ ॥
भक्त्या पत्यौ तथा देवे गुरौ गुणगणाऽन्विता ।
बभूव गेहिनी तस्य पुण्यश्रीरिति विश्रुता ॥ ७४ ॥
पतिवाल्लभ्यसौभाग्यभाग्यवत्याः शुभाऽऽकृतेः ।
अप्येकं दूषणं तस्याः शरीरे निरपत्यता ॥ ७५ ॥

(१) अ ट द प्रतिबोधकरीमिमाम् ।
(२) अ ट द -बोधवत् ।

वाञ्छन्नपि सुतं श्रेष्ठी भणितः स्वजनैरपि ।
तस्याः स्नेहपरो नारीं नान्यां परिणिनाय सः ॥ ७६ ॥
यक्षं भट्टारिकां वा नो कांश्चिदर्थयति स्म सः ।
नैवोपयाचितं चक्रे तयोः स्थिरसुदर्शनः ॥ ७७ ॥
सन्तानार्थी स चाऽन्येद्युरभ्यर्च्य कुलदेवताम् ।
उवाच सप्रियोऽप्येवं प्रणिपातमसंस्पृशन् ॥ ७८ ॥
अस्माकं पूर्वजैः सर्वैः पूजिता त्वं मयाऽपि च ।
इहलोकसुखस्याऽर्थे सर्वदा कुलदेवते ! ॥ ७९ ॥
अविद्यमानसन्ताने परलोकं गते मयि ।
पूजां बन्धुजनस्यैव करिष्यति तवाऽपि कः ? ॥ ८० ॥
तत्त्वं ज्ञात्वाऽवधिज्ञानेनाऽऽख्याहि मम सन्ततिम् ।
भविष्यत्यथवा नेति नान्यत्त्वामर्थयाम्यहम् ॥ ८१ ॥
देवतोवाच श्रेष्ठिन् ! ते भविष्यति सुतः खलु ।
धर्मं प्रवर्तमानस्य गते काले कियत्यपि ॥ ८२ ॥
ततः प्रहृष्टचित्तोऽसौ गृहवासमपालयत् ।
कुलक्रमाऽऽगतं धर्मं विशेषेण चकार [1]च ॥ ८३ ॥
कश्चित् पुण्याधिको जीवः सुतत्वेन समागमत् ।
कुक्षौ पुण्यश्रियोऽन्येद्युश्चन्द्रस्वप्नोपलक्षितः ॥ ८४ ॥
तत्स्वप्नदर्शनं प्रातः स्वभर्त्रा ज्ञापितस्तया ।
तेनाऽप्याह्लादिता पुत्रजन्मना सा सुचेतसा ॥ ८५ ॥

(१) घ ज स० ।

जज्ञेऽथ समये तस्यास्तनयः शुभलक्षणः ।
तस्य जन्मनि तत्पिता विदधे च महोत्सवम् ॥ ८६ ॥
पुण्यं कृत्वाऽयमायातः प्राप्तः पुण्येन वा मया ।
पुण्यसार इति नाम चक्रे तस्येति तत्पिता ॥ ८७ ॥
बालरक्षाविधातृभिर्धात्रीभिः परिपालितः ।
स पित्रोर्वल्लभतमो बभूवाऽध्ययनक्षमः ॥ ८८ ॥
उपाध्यायस्य वर्यस्य कलाग्रहणहेतवे ।
जनकेनार्पितो लेखशालाकृत्युत्सवेन सः ॥ ८९ ॥
तत्रैव नगरे रत्नसारस्य वणिजः सुता ।
बभूव बालिका रत्नसुन्दरी सुन्दराङ्गका ॥ ९० ॥
अधीयानाऽथ तस्यैव कलाचार्यस्य सन्निधौ ।
जज्ञे महाध्यायिनी सा पुण्यसारस्य धीमती ॥ ९१ ॥
सा चापलेन महिला सुलभेन कलाविधौ ।
विवादं पुण्यसारेण सह चक्रे मनीषिणी ॥ ९२ ॥
अन्यस्मिन् दिवसे तेन रुष्टेनेवमभाणि सा ।
बालिके ! पण्डितंमन्या यद्यप्यसि कलावती ॥ ९३ ॥
तथापि हि मया सार्धं विवादस्तव नोचितः ।
भविष्यसि यतो दासी पुरुषस्य गृहे खलु ॥ ९४ ॥ (युग्मम्)
साऽवदद् यदि रे ! दासी महाभाग्यस्य कस्यचित् ।
भविष्यामि तवस्याहं तद् मूढ ! भवतोऽत्र किम् ? ॥ ९५ ॥
शशंस पुण्यसारोऽपि परिणीय बलादपि ।
करोमि किङ्करीं चेत् त्वां तदाऽहं नियतं नरः ॥ ९६ ॥

भूयोऽपि माऽब्रवीद् मूर्ख ! बलात्कारेण जायते ।
स्नेहो नाऽन्यस्य कस्यापि दम्पत्योस्तु विशेषतः ॥ ९७ ॥
ततोऽसौ लेखशालायाः पुण्यसारो गतो गृहम् ।
सुष्वाप मन्युशय्यायां भूत्वा म्लानमुखोऽसुखी ॥ ९८ ॥
श्रेष्ठी पुरन्दरो वेश्म भोजनार्थमुपागतः ।
ज्ञात्वा तच्चेष्टितं तस्यान्तिकमेत्यैवमूचिवान् ॥ ९९ ॥
अयि वत्स ! कुतो हेतोरद्य श्याममुखो भवान् ? ।
अकाले शयनं किं ते कारणं मे निवेदय ? ॥ ५०० ॥
निर्बन्धपृष्टः सोऽवोचत् तात ! मां रत्नसुन्दरीम् ।
परिणाययसि त्वं चेत् तदा स्वस्थो भवाम्यहम् ॥ १ ॥
भूयोऽभाषिष्ट तं श्रेष्ठी बालोऽस्यद्यापि वत्सक ! ।
कुरु तावत् कलाऽभ्यासं काले परिणयेः स्नुषाम् ॥ २ ॥
पुत्रेण भणितं तात ! यदि तां याचसेऽधुना ।
मदर्थं तत्पितुः पार्श्वात् तदा भोक्ष्ये न चान्यथा ॥ ३ ॥
संबोध्य भोजयित्वा तं स्वयं भुक्त्वा च श्रेष्ठ्यसौ ।
बन्धुभिः सहितो रत्नसारश्रेष्ठिगृहं ययौ ॥ ४ ॥
अभ्युत्थानासनदानस्वागतप्रश्नपूर्वकम् ।
सोऽवदत् कारणं ब्रूत येन यूयमिहागताः ॥ ५ ॥
ऊचे पुरन्दरस्त्वत्तः कन्यकां रत्नसुन्दरीम् ।
याचितुं स्वसुतस्यार्थे श्रेष्ठिन् ! वयमुपागताः ॥ ६ ॥
अभ्यधाद् रत्नसारोऽपि कृत्यं यद् मम सर्वथा ।
युष्माभिर्विहितं तत् तद् देयाऽवश्यं सुता मया ॥ ७ ॥

यूयमत्र पुरे मुख्या याचितारः सुतां मम ।
महिता बन्धुभिर्थैभिस्तद् वाच्यं किमतः परम् ? ॥ ८ ॥
पितुः पार्श्वे स्थिता साऽथ कन्यका ¹सहसाऽवदत् ।
तातासह पुण्यसारस्य भविष्यामि न गेहिनी ॥ ९ ॥
तस्यास्तद् वचनं श्रुत्वा दध्याविवं पुरन्दरः ।
अहो ! मे तनयस्यास्यां व्यर्थः पाणिग्रहाग्रहः ॥ १० ॥
यस्या एवंविधा वाणी कर्कशा गौरवेऽप्यहो ! ।
भाविनी यौवनोन्मत्ता सा भर्तुः सुखदा कथम् ? ॥ ११ ॥
उवाच रत्नसारस्तु मुग्धेयं तनया मम ।
वाच्यावाच्यं न जानाति तदस्याः फल्गु जल्पितम् ॥ १२ ॥
तथाऽहं बोधयिष्यामि श्रेष्ठिन् ! ते तनयो यथा ।
परिणेष्यत्यमुं चैव मया दत्ता त्वमो ध्रुवम् ॥ १३ ॥
ततः पुरन्दरः श्रेष्ठी गृहमागत्य तत्कथाम् ।
कथयित्वाऽवदत् पुत्रं वत्स ! मा तव नोचिता ॥ १४ ॥

यतः —

कुदेहां विगतस्नेहां लज्जाशीलकुलोज्झिताम् ।
अतिप्रचण्डां दुस्तुण्डां गृहिणीं परिवर्जयेत् ॥ १५ ॥
प्रत्यूचे पुण्यसारस्तु अमुं परिणयामि चेत् ।
भवामि तदहं सत्यप्रतिज्ञस्तात ! नान्यथा ॥ १६ ॥

(१) ङ. वाक्यादिदम ।
नाहं पारणायिष्यामि त्वेमं च श्राष्ठिनः सुतम ॥
श्रुत्वा त्वेवंविधां वाणीं कर्कशां गौरवेऽप्यहो ।

२८

अपश्यन्नपरोपायं तल्लाभे सोऽथ बुद्धिमान् ।
[1]पृष्ट्वा तातं स्वदाचीं तां विवेद कुलदेवताम् ॥ १७ ॥
ततः कुसुमनैवेद्यगन्धधूपविलेपनैः ।
अभ्यर्च्य सुविनीतात्मा प्रार्थयामास तामिति ॥ १८ ॥
दत्तोऽहं तुष्टया देवि ! श्रेष्ठिनस्तनयो यथा ।
सा त्वं वाञ्छां कलत्रस्य सकले ! पूरयाद्य मे ॥ १९ ॥
न चेत् पूरयसि स्वेच्छां मम त्वं कुलदेवते ! ।
असत्वमपमानस्य ततोऽहं निर्मितः कथम् ? ॥ २० ॥
उत्थास्यामि तदैवाहमितः स्थानाद् यदेप्सितम् ।
पूरयिष्यसि देवि ! त्वं भोक्ष्ये चाहं तदैव हि ॥ २१ ॥
इत्थं कृतप्रतिज्ञेऽस्मिन् दिनमेकमुपोषिते ।
तुष्टा सोचे शनैर्वत्स ! सर्वं भव्यं भविष्यति ॥ २२ ॥
हृष्टचित्तस्ततः पुण्यसारो विहितभोजनः ।
अवशिष्टकलाऽभ्यास विदधे जनकाऽऽज्ञया ॥ २३ ॥
समधीतकलः सोऽथोद्यौवनः श्रेष्ठिनन्दनः ।
केनचित् कर्मदोषेण दुरोदररतोऽभवत् ॥ २४ ॥
अतीववल्लभत्वेन पितृभ्यामनिवारितः ।
स द्यूतव्यसनी जज्ञे निषिद्धो न न्यवर्तत ॥ २५ ॥
लक्षमूल्यमथान्येद्युः राज्ञोऽलङ्करणं गृहात् ।
हृत्वा दत्तं सभिकस्य स्खलने हारितेऽमुना ॥ २६ ॥

(१) ङ· दृष्ट्वा तां तत्प्राप्तिहेतोर्विवेद कुलदेवताम् ।

आयमाने नृपे श्रेष्ठी स्थानं यावद् व्यलोकयत् ।
तत्र तावददृष्ट्वा तद् मनस्येवमचिन्तयत् ॥ २७ ॥
गृहीतं पुण्यसारेण नूनमेतद् भविष्यति ।
अन्यस्य गूढमद्वस्तूपादाने योग्यता न हि ॥ २८ ॥
यदर्थं खिद्यते लोकैः यत्नश्च क्रियते महान् ।
तेऽपि सन्तापदा एवं दुष्पुत्रा हा ! भवन्त्यहो ! ॥ २९ ॥
हारितं क्वापि तेनेदं चेद् भविष्यति तद् मया ।
गृहाद् निर्वासनीयोऽयं पुत्ररूपेण वैरिकः ॥ ३० ॥
एवं विचिन्त्य हट्टेऽगात् श्रेष्ठी तत्रागतं सुतम् ।
पप्रच्छालङ्कृतेः शुद्धिं सोऽप्याचख्यौ यथातथम् ॥ ३१ ॥
ततः प्रकुपितः श्रेष्ठी तमूचे दुष्ट ! रे ! त्वया ।
तद्भूषणमुपादाय समागम्यं गृहे मम ॥ ३२ ॥
वचसा तर्जयित्वैव धृत्वा च गलकन्दले ।
निरस्तस्तनयस्तेन गाढरोषवशेन सः ॥ ३३ ॥
तदा दिनावसानत्वात् अन्यतो गन्तुमक्षमः ।
पुरान्निःसृत्य न्यग्रोधकोटरं प्रविवेश सः ॥ ३४ ॥
श्रेष्ठिन्या भणितः सोऽथ गृहं प्राप्तः पुरन्दरः ।
कथमद्य पुण्यसारो नायात्यद्यापि मन्दिरे ? ॥ ३५ ॥
राजभूषणवृत्तान्तमाख्यायैवमुवाच सः ।
मया निर्वासितः सोऽद्य प्रिये ! शिक्षापनाकृते ॥ ३६ ॥
सोचे निस्सारितो येन तनयो रजनीमुखे ।
स त्वं मे मुखमात्मीयं कथं दर्शयसि स्फुटम् ? ॥ ३७ ॥

बालं नेत्रविशालं तमेकतोकं त्वमात्मनः ।
अस्यां विकालवेलायां निरस्यन् लज्जसे न किम् ? ॥ ३८ ॥
तद्गच्छ वत्सकं तस्मिन् ममानीते गृहे मम ।
आगन्तव्यं त्वयाऽपीति स तया निरवास्यत ॥ ३९ ॥
[1]गेहिनीभर्त्सितः पुत्रं स्मृत्वा सोऽपि सुदुःखितः ।
सर्वत्राऽन्वेषयामास नगरे निजनन्दनम् ॥ ४० ॥
गृहं निर्मानुषं वीक्ष्य श्रेष्ठिनी सा व्यचिन्तयत् ।
निरासि हा ! मया गेहात् पतिः कोपपरीतया ॥ ४१ ॥
पुत्रापायकृता पूर्वं मूर्खता श्रेष्ठिना कृता ।
निरस्यन्त्या स्वभर्तारं पश्चात् चक्रे मयाऽपि सा ॥ ४२ ॥
एवं चिन्ताऽऽतुरा सा स्म तयोर्मार्गावलोकनम् ।
कुर्वाणोद्विग्नतनुः साऽस्थाद् द्वारदेशे स्ववेश्मनः ॥ ४३ ॥
ददर्श पथ्यमार्गेऽथ तत्रोभे देवते निशि ।
स्वर्गार्चिषा तमोहन्त्र्यौ शुश्रावेति च तद्गिरम् ॥ ४४ ॥
एका स्माह स्वसः ! किं न स्वेच्छया भ्राम्यते भुवि ? ।
वर्तते यदियं रात्रिरस्मत्पक्षकृतोदया ॥ ४५ ॥
द्वितीयोवाच किं व्यर्थं भ्रान्त्याऽऽत्मा खिद्यते हले ! ।
दृश्यते कौतुकं क्वाऽपि यदि तत्रैव गम्यते ॥ ४६ ॥
साऽवदत कौतुकं तर्हि गच्छामो [2]वल्लभीपुरे ।

(१) जं ड गेहिन्या भर्त्सित ।
(२) वल्लभीपुरस्य यत्र यत्र प्रसङ्गस्तत्र तत्र वल्लभीत्ललकारद्वयविशिष्टोऽपि पाठो दृश्यते क्वचित् ।

श्रेष्ठी वसति यत् तत्र धनप्रवरनामकः ॥ ४७ ॥
[1]जाता धनवतीकुक्षिसम्भवाः तस्य कन्यकाः ।
सप्तैताः सन्ति चार्वङ्ग्यस्तत्राऽऽद्या धर्मसुन्दरी ॥ ४८ ॥
धनसुन्दर्यथो कामसुन्दरी मुक्तिसुन्दरी ।
भाग्यसौभाग्यसुन्दर्यौ सप्तमी गुणसुन्दरी ॥ ४९ ॥
वरप्राप्तिकृते तासां श्रेष्ठिना भक्तिपूर्वकम् ।
आराध्य तोषितो लम्बोदरो मोदकदानतः ॥ ५० ॥
प्रत्यक्षीभूय सोऽवोचदितः सप्तमवासरे ।
रात्रौ सुलग्नवेलायां संयोगे प्रगुणीकृते ॥ ५१ ॥
सुवेधयोपायुगलपृष्ठे यः कश्चिदेष्यति ।
श्रेष्ठिन् ! तव सुतानां स भविष्यत्युचितो वरः ॥ ५२ ॥
सेयं सप्तमघस्रस्य रात्रिस्तत् तत्र गम्यते ।
निवासपादपस्यायं नीयते च सहाऽऽत्मना ॥ ५३ ॥
दध्यौ स पुण्यसारोऽथ तदाकर्ण्य मनस्यदः ।
अहो ! प्रासङ्गिकं सेऽपि भावि कौतूहलेक्षणम ॥ ५४ ॥
कीदृशी वलभी सा पूः कीदृग् लम्बोदरः स च ? ।
कीदृशाः कन्यकाश्चेति सर्वं द्रष्टास्मि कौतुकम ॥ ५५ ॥
विधाय हुंकृतिं ताभ्यामुत्क्षिप्तो वटपादपः ।
उद्याने वलभीपुर्याः गत्वा तस्थौ क्षणेन सः ॥ ५६ ॥
विधाय नायिकारूपं चेलतुर्देवते ततः ।
तयोरनुपदं पुण्यसारोऽपि चलति स्म सः ॥ ५७ ॥

[1] ड॰ ततो- । [2] ड॰ कुलदैवते ।

लम्बोदरगृहद्वारे वेदिकामण्डपे कृते ।
मेलितस्वजनः श्रेष्ठी यावदासीत् सुताऽन्वितः ॥ ५८ ॥
तावत् ते देवते तस्य समीपेऽस प्रजग्मतुः ।
श्रेष्ठ्यावासे रसवत्या रसग्रहणहेतवे ॥ ५९ ॥ ( युग्मम् )
एते अनुव्रजन् पुण्यसारः श्रेष्ठिवरेण सः ।
दृष्टश्च भणितश्चैवं निवेश्य प्रवराऽऽसने ॥ ६० ॥
लम्बोदरेण भद्र ! त्वं जामाता परिकल्पितः ।
एता मम सुताः सप्त तत्त्वं परिणयानघ ! ॥ ६१ ॥
इत्युदित्वा सुवसने नवीने परिधापितः ।
लक्षमूल्यभूषणेनालङ्कृतः श्रेष्ठिना च सः ॥ ६२ ॥
ततो भवत्सु धवलमङ्गलेष्वग्निसाक्षिकम् ।
परिणीताः चारु कन्याः पुरन्दरसुतेन ताः ॥ ६३ ॥
सोऽथ दध्यावदो युक्तं पित्रा निर्वासितोऽस्मि यत् ।
अन्यथैवं कथं पुण्यसारनाम स्फुटोभवेत् ? ॥ ६४ ॥
इति ध्यायन् कृतोद्वाहः स वधूभिः समन्वितः ।
श्रेष्ठिना स्वगृहं निन्ये महोत्सवपुरस्सरम् ॥ ६५ ॥
प्रासादस्योपरितनभूमौ नीत्वा निवेशितः ।
वल्लभाभिः स पर्यङ्के निविष्टास्ताश्च विष्टरे ॥ ६६ ॥
पृच्छन्ति स्म कलाऽभ्यासस्तव नाथ ! कियानिति ? ।
सोऽब्रवीत् सकला मुग्धाः ! मम नेष्टतरा यतः ॥ ६७ ॥
अत्यन्तं विदुषां नैव सुखं मूर्खनृणां न च ।
उपार्जयत तद् यूयं सर्वथा मध्यमां कलाम् ॥ ६८ ॥

यावत् ता न विदन्ति स्म श्लोकस्यार्थमपि स्फुटम् ।
तावत् स दध्यौ वृद्धोऽसौ गमिष्यति सदैवतः ॥ ६९ ॥
इति गन्तुमनाः सोऽथ दिशाऽऽलोकादिचेष्टया ।
विज्ञातो गुणसुन्दर्या तया दारकनिष्ठया ॥ ७० ॥
किमङ्ग ! चिन्तां कर्तुं ते शङ्काऽस्तीति तयोदितः ? ।
सोऽब्रवीदेवमेवेति दत्तहस्तस्तया ततः ॥ ७१ ॥
अधोभूमौ समागत्य स्वस्य ज्ञापनहेतवे ।
इति श्लोकं तुलायां स सुधीः खडिकयाऽलिखत् ॥ ७२ ॥
[2]किहां गोवालो किहां वलहिपुरं किहां लम्बोदरदेव ? ।
लाडन आयो विहिवसिं गिओ मत्तइ परिणिवि ॥ ७३ ॥
गोपालयपुरादागां वलभ्यां नियतेर्वशात् ।
परिणीय वधूः सप्त पुनस्तत्र गतोऽस्म्यहम् ॥ ७४ ॥
साऽर्थमप्येतनस्याऽपि श्लोकस्याविदुषी तदा ।
लज्जमानाऽनुष्टुभं तं प्रसभं नाऽप्यवाचयत् ॥ ७५ ॥
गृहद्वारगतः सोऽथ तामूचे गुणसुन्दरीम् ।
सुखेन तनुचिन्ता स्यादतिनिर्विजने मम ॥ ७६ ॥
ततस्त्वयाऽत्र स्थातव्यमहं त्वन्निकटे गतः ।
निराबाधो भविष्यामीत्युक्त्वा तत्र वटे ययौ ॥ ७७ ॥

---

(१) ह० -सोकनचे ।
(२) गूर्जरभाषानिबद्धेयं प्रतिभासते तथा कोषु च पुस्तकेषु नोपलभ्यते ।

तत्कोटरप्रविष्टेऽस्मिन्[1] निन्यतुर्देवते अपि ।
तच्छक्त्योत्पाटितः सोऽथ वटः स्वस्थानमागमत् ॥ ७८ ॥
इतः पुरन्दरः श्रेष्ठी भ्रामं भ्रामं पुरेऽखिले ।
निशान्तेऽतीवनिर्विण्णो यावत् तत्र समाययौ ॥ ७९ ॥
तावत् सा विगता रात्रिः प्रणष्टं क्वापि तत् तमः ।
ततो विभातं न्यग्रोधे गतस्येत्युच्यते जनैः ॥ ८० ॥
निर्ययौ पुण्यसारोऽथ तदानीं वटकोटरात् ।
वस्त्रालङ्कारसाराङ्गः पितृवक्त्राम्बुजार्यमा ॥ ८१ ॥
पुत्रमत्यद्भुतश्रीकं दृष्ट्वा श्रेष्ठी सविस्मयः ।
वत्स ! वत्सेति जल्पन्तमालिलिङ्ग ससंभ्रमम् ॥ ८२ ॥
ततः स्वगेहमायातः[2] सह तेन विलोक्य तौ ।
बभूव श्रेष्ठिनी हृष्टा स्पृष्टा रुच्येव शीतगोः ॥ ८३ ॥
गाढमालिङ्ग्य सस्नेहं तमुत्सङ्गे निवेश्य च ।
पप्रच्छ वत्स ! शोभेयं संजाता क्व तवेदृशी ? ॥ ८४ ॥
ऊचे च जनकोऽप्येवं ततोऽसौ सकलां कथाम् ।
तदग्रे कथयामास महद्विस्मयकारिणीम् ॥ ८५ ॥
तावेवमूचतुर्भाग्यमहो ! वत्सस्य कीदृशम् ? ।
ऋद्धिरियं नदृशी लब्धा रात्रिमध्येऽप्यचिन्तिता ॥ ८६ ॥
बभाण जनको भूयः चन्तव्यं वत्स ! तत् त्वया ।
मया विरूपं यत् किञ्चिदुक्तं शिक्षापनाकृते ॥ ८७ ॥

(१) ङ -ऽसिन्नीयतुः । (२) ङ सहसैव ।

पुण्यसारोऽवदत् तात ! युष्मत्शिक्षापणेनैव हि ।
संजाता हेतुरीदृश्याः[1] सम्पदो नियतं मम ॥ ८८ ॥
दत्त्वाऽथ[2] द्यूतकारस्य [3]तदानीतं विभूषणम् ।
नृपमल्कं नृपस्यैवार्पयामास पुरन्दरः ॥ ८९ ॥
विदधे पुण्यसारोऽथ हट्टव्यापारमुत्तमम् ।
दूरं विहाय तद् द्यूतव्यसनं गुणनाशनम् ॥ ९० ॥
इतस्तस्मिन्ननायाति[4] वलित्वा गुणसुन्दरी ।
सोदरीणां समाचख्यौ सर्वासामपि तद्गतिम् ॥ ९१ ॥
ततस्ता नवगेहान्तर्धूमांसक इवोत्कटे ।
आकस्मिकेऽसुखे तस्मिन् पतिते रुरुदुर्भृशम् ॥ ९२ ॥
आकर्ण्य रुदितं पित्रा पृष्टास्तस्य च कारणम् ।
कथयन्ति स्म तास्तस्य तत्पत्युरपवारणम् ॥ ९३ ॥
सोऽब्रवीदपरिज्ञातपारम्पर्यो निजः पतिः ।
किं न सम्भूय युष्माभिर्धृतो ज्ञात्वा तदागमम् ? ॥ ९४ ॥
रूपलावण्ययुक्ताभिः स्त्रीभिः सर्वोऽपि लुभ्यते ।
तद् भवत्यः प्रियास्तेन प्राप्ताः परिहृताः कथम् ? ॥ ९५ ॥
यदङ्गलग्नमादाय भूषणं गतवानसौ ।
तद् मन्ये व्यसनी कोऽपि व्यंसको वा भविष्यति ? ॥ ९६ ॥
दत्तो लम्बोदरेणाऽपि यदेवमकरोदसौ ।
तद् नूनं दुष्कृतं किञ्चित् पुरा चीर्णमिदं हि वः ॥ ९७ ॥

(१) थ -रीदृक्ष- ।
(२) ख ङ दत्त्वाऽर्थं ।
(३) ट तदानीं तद्विभूषणम ।
(४) ग घ ट द -नायाति ।

विज्ञातं किं न युष्माभिः कुर्वतीभिः कथामिमाम् ।
तस्याभिधानं स्थानं वा स्वरूपमपरं तथा ? ॥ ९८ ॥
गुणसुन्दर्यथोवाच दीपोद्द्योते तदाऽमुना ।
अस्त्यत्र लिखितं किञ्चिद् वाचितं तद् मया न तु ॥ ९९
अथ प्रभाते संजाते श्लोके तस्मिंश्च वाचिते ।
सोचे गोपालयपुरे गतस्तात ! पतिः स नः ॥ ६०० ॥
केनचिद् दैवयोगेन रात्रान्ते स इहाऽऽगतः ।
त्वद्दत्ताः परिणीयास्मान् तत्रैव हि पुनर्गतः ॥ १ ॥
ततस्त्वं निजहस्तेन नरवेषं ममार्पय ।
मेलयित्वा महासार्थं यतस्तत्र व्रजाम्यहम् ॥ २ ॥
ज्ञास्यामि तं निजं कान्तं तत्राऽन्विष्य कथञ्चन ।
षण्मासाभ्यन्तरे वह्निरन्यथा शरणं मम ॥ ३ ॥
पित्राऽर्पितनृवेषा सा महासार्थसमन्विता ।
ययौ गोपालयपुरे कियद्भिर्दिवसैस्ततः ॥ ४ ॥
गुणसुन्दराभिधानः कश्चित् सार्थपतेः सुतः ।
इत्यसौ नगरे तस्मिन् मानितः पृथिवीभुजा ॥ ५ ॥
[1]क्रयविक्रयादि चक्रे व्यवहारं वणिग्घितम् ।
समं च पुण्यसारेण मैत्रीत्वं वचनाऽऽदिभिः ॥ ६ ॥ (युग्मम्
अथोचे रत्नसारं स्ववसारं रत्नसुन्दरी ।
यद् मया परिणेतव्यस्ताताऽयं गुणसुन्दरः ॥ ७ ॥

(१) ख घ ङ ऽस्मैश्च । (२ घ ङ -विक्रयादिं ।

विज्ञाय दुहितुर्भावं रत्नसारस्तदन्तिकम् ।
गत्वोवाच मम सुता भर्तारं त्वां समीहते ॥ ८ ॥
गुणसुन्दर्यथो दध्यावस्या वाञ्छा निरर्थिका ।
द्वयोर्महिलयोर्यस्माद् गृहवासः कथं भवेत् ? ॥ ९ ॥
यत् किञ्चिदुत्तरं कृत्वा तदेतां वारयाम्यहम् ।
अन्यथा या गतिर्मेऽस्ति साऽस्या अपि भविष्यति ॥ १० ॥
एवं विचिन्त्य मनसा साऽवदत् श्रेष्ठिपुङ्गवम् ।
अस्मिन्नर्थे कुलीनानां पित्रोरेव प्रधानता ॥ ११ ॥
वर्तेते तौ च मे दूरे तत् त्वया निजनन्दिनी ।
प्रदेयाऽन्यस्य कस्यापि प्रत्यासन्ननिवासिनः ॥ १२ ॥
अभाणि रत्नसारेण मत्पुत्र्यास्त्वं हि वल्लभः ।
सा देया कथमन्यस्मै पुरुषाय मया यतः ? ॥ १३ ॥
शत्रुभिर्बन्धुरूपैः सा प्रक्षिप्ता दुःखसागरे ।
या दत्ता हृदयानिष्टरमणस्य कुलाङ्गना ॥ १४ ॥
अनुमेनेऽथ तद्वाक्यं साग्रहं साऽमुनोदिता ।
तयोर्विवाहश्चक्रे च श्रेष्ठिना पुण्यवासरे ॥ १५ ॥
पुण्यसारस्तदाकर्ण्य कुलदेव्याः पुरो गतः ।
शिरः क्षुरिकया छेत्तुमारेभे मानिनां वरः ॥ १६ ॥
साहसं किं करोष्येतदिति देवतयोदितः ? ।
स स्माह पर्यणैषीद् यद् कन्यामन्यो मयेप्सिताम् ॥ १७ ॥
पुनरेष तयाऽभाणि या दत्ता वत्स ! ते मया ।
भाविनी सा तवैवैषा मा विधा मृत्युसाहसम् ॥ १८ ॥

सोऽवदद् युज्यते कर्तुं परस्त्रीसंग्रहो न मे ।
इयं च परिणीतैव किं कर्तव्यं मया ततः ? ॥ १९ ॥
देवतोवाच हे वत्स ! किं बहूक्तेन संप्रति ? ।
एषा ते वल्लभाऽवश्यं न्यायेनैव भविष्यति ॥ २० ॥
तद्वाक्यमनुमेनेऽसौ सा पुनर्गुणसुन्दरी ।
षण्मासीमतिचक्राम पत्युर्विरहदुःखिता ॥ २१ ॥
अप्राप्नुवत्यसौ कान्तं रहस्यं चाविदुग्धवती ।
पूर्णेऽवधौ प्रतिज्ञां स्वां संपूरयितुमुद्यता ॥ २२ ॥
सुकाष्ठैः कारयामास चितां तस्मात् पुराद् बहिः ।
[1]चचाल वार्यमाणाऽपि प्रवेष्टुं ज्वलितानले ॥ २३ ॥
बालोऽपि सार्थवाहोऽयं वैराग्येण हि केनचित् ।
मुमूर्षतीत्युदन्तोऽयं सकलेऽपि पुरेऽभवत् ॥ २४ ॥
तमाकर्ण्य ययौ राजा सपौरः सपुरन्दरः ।
रत्नसारपुण्यसारसहितश्च तदन्तिकम् ॥ २५ ॥
राज्ञा [2]माऽभाणि केनाऽऽज्ञा खण्डिताऽत्र पुरे तव ? ।
यदतिलक्षणं काष्ठभक्षणं कुरुते भवान् ॥ २६ ॥
ऊचे च रत्नसारेण सुविचारेण किं तु ते ।
अपराद्धमहो ! दारुदारैर्भद्र ! किञ्चन ॥ २७ ॥
सोऽवदद् नापराद्धं मे केनाप्याज्ञा न खण्डिता ।
अहं त्विष्टवियोगार्तिकृता दैवेन खण्डिता ॥ २८ ॥

(१) घ चेले च । ङ लोकैश्च वार्यमाणोऽपि ।
(२) ज ट माऽभाणि ।

इति [1]जल्पन्नसावन्तर्विरहाऽग्निशिखानिभान्।
सुदीर्घतरनिःश्वासान् [2]मुश्चल्पचितं ययौ ॥ २९ ॥
राज्ञोक्तमत्र यः कश्चिद् मित्रमस्य प्रवर्तते।
संबोध्य रक्षणीयोऽयममुना मृत्युसाहसात् ॥ ३० ॥
नागरैः पुण्यसारोऽस्य तन्मित्रं परिकीर्तितः।
राज्ञाऽऽदिष्टः स निकटे गत्वाऽथ[3] तमभाषत ॥ ३१ ॥
तारुण्ये वर्तमानस्य संपदाऽलङ्कृतस्य च।
दुःखहेतुमनाख्याय युक्ता ना मित्र ! ते मृतिः ॥ ३२ ॥
[4]सोऽवदद् यस्य दुःखानि कथ्यन्ते स न दृश्यते।
हृदयात् कण्ठमागत्य यान्ति तत्रैव तान्यहो ! ॥ ३३ ॥
अपरः प्राह मित्र ! [5]त्वां तथाऽहं तर्कयामि यत्।
करोष्येवंविधां चेष्टामपत्रामकरीं नृणाम् ॥ ३४ ॥
स्मित्वा तल्लिखितश्लोकमुक्त्वा चैवमुवाच सा।
किमयं भवता श्लोकोऽलेखि नो वेति कथ्यताम् ? ॥ ३५ ॥
आमिति भणिते तेन सोचे साऽहं तव प्रिया।
या मुक्ता तोरणद्वारेऽभिधया गुणसुन्दरी ॥ ३६ ॥
प्रयासोऽयं मया चक्रे हे कान्त ! तव हेतवे।
तत् प्रमोद स्त्रिया वेषं ममाऽऽशु त्वं समर्पय ॥ ३७ ॥
गृहादानाय्य तेनाऽपि दत्तः साऽस्य मनोहरः।
प्रतिसीरान्तरात् साऽथ निर्ययौ परिधाय [6]तम् ॥ ३८ ॥

---

(१) ख घ जल्पन्नसौ। (२) ख घ सुश्चल्पमुप-। (३) घ ज गत्वा च। (४) ज ट सोऽवदत। (५) घ त्य। (६) ङ च।

वधूर्वो [1]वन्दत इति भर्त्रा निर्दिश्यमानया ।
नमश्चक्रेऽनया राजा श्वश्रूश्वशुरकौ तथा ॥ ३९ ॥
किमेतदिति पृष्टश्च पुण्यसार: कथां निजाम् ।
कथयामास भूपस्यातिविस्मयविधायिनीम् ॥ ४० ॥
विस्मितो रत्नसारेण राजैवं येन [2]मे सुता ।
उदूढा सोऽभवद् नारी तदस्या देव ! का गति: ? ॥ ४१ ॥
सोऽवादीदत्र प्रष्टव्यं किमु भो: साऽपि गेहिनी ? ।
भवतात् पुण्यसारस्योदूढा तत्प्रियया यत: ॥ ४२ ॥
सा रत्नसुन्दरी तात्र वल्लभा वल्लभीपुरात् ।
आययु: पुण्यसारस्य मन्दिरं पुण्ययोगत: ॥ ४३ ॥
एवमष्टौ कलत्राणि[3] कृतचित्राणि शृण्वताम् ।
पूर्वं विहितपुण्यस्य पुण्यसारस्य जज्ञिरे ॥ ४४ ॥
धर्मदेशनया भव्यप्राणिन: प्रतिबोधयन् ।
ज्ञानसाराभिधाऽऽचार्यस्तत्रान्येद्यु: समाययौ ॥ ४५ ॥
अथ तद्वन्दनार्हतोभक्तिभावितमानस: ।
ययौ पुरन्दर: श्रेष्ठी पुण्यसारसमन्वित: ॥ ४६ ॥
[4]सोऽथ नत्वा तमाचार्यं पप्रच्छेति कृताञ्जलि: ।
प्रभो ! मत्सूनुना पूर्वभवे किं सुकृतं कृतम् ? ॥ ४७ ॥
शशंस सोऽवधिज्ञानी पुरं नीतिपुराभिधं ।
बभूव कश्चिदुच्छिन्नसन्तान: कुलपुत्रक: ॥ ४८ ॥

(१) ह विन्दत इति । (३) छ कलत्राण्यां ।
(२) ख ज ठ मत्सुता । (४) ह स्वसौ ।

संसारवासनिर्विस्यः सुधर्ममुनिसन्निधौ ।
जग्राह स सुधीर्दीक्षां शिक्षां च द्विविधामपि ॥ ४९ ॥
स पञ्च समितीः सम्यक् पालयामास यत्नतः ।
गुप्ती चापालयत् कायगुप्तौ किं तु न निश्चलः ॥ ५० ॥
[1]कायोत्सर्गे स्थितो दंशमशकोपद्रवे सति ।
पारयामास तं शीघ्रमसंपूर्णेऽवधावपि ॥ ५१ ॥
सुधर्मसाधुनाऽभाणि किमावश्यकखण्डनम् [2] ।
[3]प्रकरोषि यतो दोषो व्रतभङ्गे भवेद् महान् ॥ ५२ ॥
ततस्तद्भयभीतोऽसावसहिष्णुरिमामपि ।
गुप्तिं निर्वाहयामास वैयावृत्त्यं चकार च ॥ ५३ ॥
मृत्वा समाधिना सोऽन्ते[3] सौधर्मे त्रिदशोऽभवत् ।
जज्ञे तव सुतः श्रेष्ठिन् ! ततः च्युत्वाऽऽयुषः क्षये ॥ ५४ ॥
सप्त प्रवचनमातॄर्येत् सुखेनैव पालिताः ।
तदनेन प्रियाः सप्त परिणीताः सुखेन हि ॥ ५५ ॥
कष्टेन पालितैका यत् प्रियाऽप्येवमभूत् ततः ।
अप्रमादो विधातव्यो धर्मकर्मणि सर्वथा ॥ ५६ ॥
तच्छ्रुत्वा जातसंवेगोऽग्रहीद् दीक्षां [4]पुरन्दरः ।
जग्राह श्रावकत्वं च पुण्यसारो विवेकवान् ॥ ५७ ॥

---

(१) घ ङ कायोत्सर्गस्थितो । (२) ङ भोः । (३) ङ सोऽपि । (४) ङ, च श्रेष्ठ प ।

ततः पुत्रेषु जातेषु पुण्यसारोऽपि वार्द्धके ।
प्रतिपद्य परिव्रज्यां मृत्वा सुगतिभागभूत् ॥ ५८ ॥

॥ इति पुण्यसारकथानकं समाप्तम् ॥

श्रुत्वेमां पुण्यसारस्य सत्कथां [1]विमलाऽऽशय: ।
जग्राह दीक्षां कनकशक्तिस्त्यक्त्वा नृपश्रियम् ॥ ५९ ॥

समोपि विमलमत्या आर्यायास्ते च तत्प्रिये ।
दीक्षां गृहीत्वा सजाते सुतपःसंयमोद्यते ॥ ६० ॥

[2]विहरन् नगनगरे सिद्धिपर्वतनामके ।
गत्वा शिलोच्चये तस्थौ प्रतिमामेकरात्रिकीम् ॥ ६१ ॥

तत्पूर्वमत्सरो तत्र हिमचूलाभिधः सुरः ।
तस्योपसर्गान् विदधे निराचक्रे स खेचरैः ॥ ६२ ॥

प्रभाते पारयित्वा तां स आगाद् रत्नसञ्चयाम् ।
तत्र सूरि[3]निपाताख्योद्याने तां प्रतिमां व्यधात् ॥ ६३ ॥

शुक्लध्यानजुषः तस्य घातिकर्मचतुष्टये ।
प्रक्षीणे केवलज्ञानमुत्पेदे विश्वदीपकम् ॥ ६४ ॥

विदधे महिमा तस्य देवविद्याधराऽसुरैः ।
वज्रायुधचक्रिणा च मानवैरपरैरपि ॥ ६५ ॥

आगत्य समवासार्षीत् पुरि तस्यामथाऽन्यदा ।
पूर्वोत्तरदिग्विभागे क्षेमङ्करजिनेश्वरः ॥ ६६ ॥

(१) ख ङ ज विगताऽऽशयः । छ ठ विरताशयः ।
(२) ठ नगनगरैः । ढ विहरन्ननगारोऽसौ सिद्धपर्वतमस्तके ।
(३) ङ -विमानाख्यो- ।

चक्री वर्द्धापितः पुम्भिस्तदाऽऽगत्य नियोजितैः ।
ततश्च सपरीवारस्तं नन्तुं [1]द्राग् ययावसौ ॥ ६७ ॥
प्रदक्षिणात्रयपूर्वं प्रणम्य परमेश्वरम् ।
निषसाद यथास्थानं शुश्रूषुर्धर्मदेशनाम् ॥ ६८ ॥
अत्रान्तरे सुतस्तस्य सहस्राऽऽयुधनामकः ।
नमस्कृत्य जिनेन्द्रं तं पप्रच्छैवं कृताञ्जलिः ॥ ६९ ॥
भगवन् ! पवनवेगादीनां पूर्वापरे भवाः ।
कथं तातेन विज्ञाता ममैतत् कौतुकं महत् ? ॥ ७० ॥
भगवानप्यथाऽवादीदवधिज्ञानचक्षुषा ।
भवस्वरूपं विज्ञातं तेषां वज्रायुधेन भोः ! ॥ ७१ ॥
पुनः पप्रच्छ [2]तद् ज्ञानं कतिभेदं भवत्यदः ।
जिनोऽवोचत् पञ्चधा तत् प्रसिद्धं ह्यस्मदागमे ॥ ७२ ॥
मतिश्रुतावधिसंज्ञं तत्र ज्ञानत्रयं भवेत् ।
तुर्यं मनःपर्यव च पञ्चमं केवलाऽभिधम् ॥ ७३ ॥
बुद्धिः स्मृतिश्च प्रज्ञा च मतिः पर्यायवाचकाः ।
धीमद्भिः पुनरेतासां पृथक् भेदाः प्रकीर्तिताः ॥ ७४ ॥
भविष्यत्कालविषया मतिस्तावत् प्रकीर्तिता ।
बुद्धिश्च वर्तमाने स्यादतीते च स्मृतिर्भवेद् ॥ ७५ ॥
कालत्रये च विज्ञेया प्रज्ञा सा च चतुर्विधा ।
[3]स्वयं गतेर्भवे जन्तोर्मत्यावरणकर्मभिः ॥ ७६ ॥

(१) ध ठ ट -प्रययाव- । (२) ड स ।
(३) ट स्वयं गते भवेद् जन्तोर्मत्यावरणकर्मणि ।

औत्पत्तिकी वैनयिकी[1] कार्मिकी पारिणामिकी ।
चतुर्विधा भवेद् बुद्धिः पञ्चमी नोपलभ्यते ॥ ७७ ॥
अदृष्टाश्रुतपूर्वे या वस्तुन्युत्पद्यते [2]क्षणात् ।
बुद्धिरौत्पत्तिकी नाम सा बुधैः परिकीर्तिता ॥ ७८ ॥
भारते रोहको नाम शिलाप्रभृतिवस्तुषु ।
दृष्टो निदर्शनं तस्यां तत्कथा श्रूयता[3]मिति ॥ ७९ ॥
उज्जयिन्यां महापुर्यामरिकेसरिनामकः ।
बुद्धिविक्रमसंपन्नो बभूव पृथिवीपतिः ॥ ८० ॥
तस्याः पुर्याः समासन्ने महत्या शिलयाऽङ्किते ।
नटग्रामेऽभवद् रङ्गशूरो नाम्ना कुशीलवः ॥ ८१ ॥
अतिमात्रकलापात्रं बुद्धिनिर्जितवाक्पतिः ।
बालोऽप्यबालभावोऽभूत् तत्पुत्रो रोहकाह्वयः ॥ ८२ ॥
तन्मातरि विपन्नायां रङ्गशूरस्य तस्य तु ।
बभूव रुक्मिणी नाम्नी प्रेयसी रूपशालिनी ॥ ८३ ॥
सा यौवनमदोन्मत्ता भर्तृगौरवगर्विता ।
रोहकस्याङ्गसंस्कारं न चकार तथाविधम् ॥ ८४ ॥
सोऽवदद् कुपितो यत् त्वं शुश्रूषां न करोषि मे ।
भविष्यति ततोऽवश्यं हे मातः ! ते न सुन्दरम् ॥ ८५ ॥

(१) ङ कार्मिका परिणामिका । (३) क ज ट ढ -मियम ।
(२) ख घ ङ ज मतिः ।

साऽब्रवीद् रे शिशो ! यत् त्वं निग्रहानुग्रहाक्षमः ।
स त्वं रुष्टोऽथवा तुष्टः करिष्यसि ममात्र किम् ? ॥ ८६ ॥
रोहकः चिन्तयामासोत्पाद्य मन्तुं कमप्यहम् ।
तथा करिष्ये तातस्यानिष्टेयं जायते यथा ॥ ८७ ॥
विचिन्त्यैवं स यामिन्यामुत्थाय सहसाऽब्रवीत् ।
यात्येष पुरुषः कोऽपि निःसृत्य गृहमध्यतः ॥ ८८ ॥
तद् निशम्य पिता तस्य शयानोऽथ गृहाजिरे ।
उत्थायोवाच रे ! दुष्टं तं दर्शय नरं मम ॥ ८९ ॥
रोहकोऽप्यवदत् तात ! स उत्प्लुत्य गतः क्षणात् ।
रङ्गोऽपि हि विरागार्हस्ततोऽभूद् गेहिनीं प्रति ॥ ९० ॥
आः ! किमन्यनराऽऽसक्ता जातेयमथवा भवेत् ? ।
किमिदं दुर्घटं येन भवन्त्येवंविधाः स्त्रियः ? ॥ ९१ ॥
पृथक्शय्याविधानेन ततोऽसौ तेन धीमता ।
अरण्यवधवद् दुःखभागिनी विदधे स्फुटम् ॥ ९२ ॥
साऽपि दध्यौ मया नापराद्धं किमपि भर्तरि ? ।
नूनमेतेन बालेन कोपितोऽयं पतिर्मम ॥ ९३ ॥
करोम्यस्यैव तद्भक्तिं भर्तृतोषविधित्सया ।
येनैवाऽऽरोपितं दुःखं स एवा[1]पनयत्वरम् ॥ ९४ ॥
ततः सा प्रार्थयामास रोहकं भक्तिपूर्वकम् ।
वत्स ! मेऽभिमुखं कान्तं कुरु दास्यस्मि ते स्फुटम् ॥ ९५ ॥

(१) ख घ ङ ०पनयेत्तराम ।

विधाय स सुधीरेवं तामात्मवशवर्तिनीम् ।
पुना रात्रौ सचन्द्रायां प्रोवाच जनकं प्रति ॥ ९६ ॥
उत्तिष्ठोत्तिष्ठ हे तात ! यात्यद्याप्यसकौ नरः ।
अथास्य पृच्छतोऽदर्शि तेन च्छाया शरीरजा ॥ ९७ ॥
त्वच्छायेयमिति प्रोक्ते पित्रा प्रोवाच रोहकः ।
अग्रेऽप्येवंविधो दृष्टस्तर्हि तात ! मया नरः ॥ ९८ ॥
रङ्गशूरः ततो दध्यौ हा ! मया वचनात् शिशोः ।
अपमानपदं चक्रे पत्नी दोषाऽभिशङ्कया ॥ ९९ ॥
ततः सा रुक्मिणी भर्तुः पूर्ववद् वल्लभाऽभवत् ।
रोहकस्य सदा भक्तिं कुरुते स्म च सादरम् ॥ ७०० ॥
स पित्रा सह भुङ्क्ते स्म तथाऽपि कुशलाऽऽशयः ।
स्वजनन्या अपि प्रायो बुद्धिमान् न हि विश्वसेत् ॥ १ ॥
अन्यदा सह तातेन स गत्वोज्जयिनीं पुरीम् ।
सर्वमालोकयामास पुरे देवकुलाऽऽदिकम् ॥ २ ॥
गते ताते पुरीमध्ये स सिप्रासैकतेऽन्यदा ।
पुरीं रेणुमयीं कृत्वा तस्थौ तद्रक्षणे स्वयम् ॥ ३ ॥
अथाल्पभृत्योऽश्वाऽऽरूढस्तेनागच्छन् पथा नृपः ।
सहसा रोहकेणोचे सावष्टम्भमिदं वचः ॥ ४ ॥
पुरः प्रासादचैत्याढ्यां राजपुत्र ! पुरीमिमाम् ।
किं त्वं भङ्क्षामि येनाश्वं निवर्तयसि नान्यतः ? ॥ ५ ॥
तस्य वुद्ध्या गिरा चैव प्रहृष्टः पृथिवीपतिः ।
कस्यायं सूनुरित्येवं पप्रच्छानुचरान् निजान् ? ॥ ६ ॥

तेऽवोचन् रङ्गशूरस्य सुतोऽयं देव ! रोहकः ।
विज्ञानवचनाभ्यां यो जातस्त्वच्चित्तमोहकः ॥ ७ ॥
मन्त्रिपञ्चशतान्यासन् तस्य राज्ञः परं नरम् ।
प्रकृष्टं मार्गयामास स विधातुं महत्तमम् ॥ ८ ॥
ततोऽसौ रोहकप्रज्ञापरीक्षणकृतेऽन्यदा ।
पुरुषं प्रेषयित्वा स्वं ग्रामीणानिदमादिशत् ॥ ९ ॥
अस्मद्योग्य इह ग्रामे प्रासादः कार्यतां परम् ।
द्रव्यव्ययेन बहुनाऽप्येकद्रव्यविनिर्मितः ॥ १० ॥
संभूय ग्रामवृद्धास्ते रङ्गशूरनटश्च सः ।
चिरमालोचयामासुस्तद् विधातुमनीश्वराः ॥ ११ ॥
विना तातमभुञ्जानो रोहकोऽथ रुदन् गृहात् ।
आगत्याकारयामास भोजनार्थेनमादरात् ॥ १२ ॥
सोऽवदद् वत्स ! दत्तोऽद्य मुद्राऽऽदेशो महीभुजा ।
एकद्रव्येण केनापि प्रासादः कार्यतामिति ॥ १३ ॥
तन्निर्णयमकृत्वैव भोजनं क्रियते कथम् ? ।
आज्ञा बलवतां यस्माद् लङ्घिता न शुभावहा ॥ १४ ॥
रोहकोऽप्यवदत् तावद् भोजनं क्रियतां ननु ।
पश्चात् सर्वं भणिष्यामि चिन्तनीयं किमत्र भोः ? ॥ १५ ॥
भोजनोर्ध्वमभाषिष्ट स सुधी राजपूरुषम् ।
इयमुच्चतरा दीर्घाऽऽयामयुक्ताऽस्ति या शिला ॥ १६ ॥
तयैव कारयिष्यामः प्रासादं नृपचिन्तितम् ।
पूरणीयं नृपेणैव पुनः शिल्पिधनाऽऽदिकम् ॥ १७ ॥

इत्यर्थे कथिते तेन पुना राज्ञा परेद्यविः ।
ग्रामस्था इत्यभाष्यन्त बस्तमुद्दिश्य पुंगिरा ॥ १८ ॥
पोषणीयः प्रतिदिनं बस्तोऽसौ चारिवारिभिः ।
अहीनाधिकमेदास्तु पुनः प्रेष्योऽस्मदन्तिकम् ॥ १९ ॥
कथितं रोहकस्यैव ततस्तेनापि धीमता ।
तृणाऽऽदिपोषितस्यास्य दर्श्यते प्रत्यहं वृकः ॥ २० ॥
तथाकृतेऽमुना राज्ञा प्रेषितः कुक्कुटोऽन्यदा ।
एकोऽपि योधनीयोऽयं दत्ताऽऽज्ञा चेट्टशी तथा ॥ २१ ॥
संक्रान्तप्रतिबिम्बोऽमावादर्शे योधितः[1]स्थिरम् ।
तिलानां शकटान् प्रेष्य भाणितं भूभुजा पुनः ॥ २२ ॥
यत्ते हि पीडयित्वाऽमून् तैलं कार्यं परं तिलाः ।
मीयन्ते येन मानेन मेयं तेनैव तैलकम् ॥ २३ ॥
रोहको मापयामास पृष्ठ्यादर्शतलेन तान् ।
भूयस्तेनैव तैलं च बुद्धेः किं नाम दुष्करम् ? ॥ २४ ॥
अन्यदाऽकारयद् वर्ति नृपतिर्वालुकामयीम् ।
अनया गोपयिष्यन्ते शालीनां किल तन्दुलाः ॥ २५ ॥
रोहकोऽप्यवदद् राजकार्यं कार्यं यथातथम् ।
परं प्रमाणं नैतस्या जानीमोऽकृतपूर्विणः ॥ २६ ॥
ततस्तस्याः पुरातन्याः खण्डमेकं प्रदर्श्यताम् ।
यतस्तेन प्रमाणेन सा नव्या क्रियते बहुः ॥ २७ ॥

---

(१ ख ग ज -तः स्वयम् ।

अन्यदा च जरद्धस्ती प्रेषितस्तत्र भूभुजा ।
कथितं च यथा यत्नात् पाल्योऽयं मम वारणः ॥ २८ ॥
संस्थितस्यास्य मे वार्ता कथनीया यथा तथा ।
मृत इत्यक्षरद्वन्द्वं नोच्चार्यं तु पुरो मम ॥ २९ ॥
ज्ञापितो रोहकेणेति मृते तस्मिन् महीपतिः ।
यद् देव ! न चरत्यद्य करी पिबति वा न च ॥ ३० ॥
चक्रे नोच्छ्वासनिःश्वासौ राजोचे तर्हि किं मृतः ? ।
सोऽवदद् वेद्मि नैवाहं देवो जानाति कारणम् ॥ ३१ ॥
राज्ञा पुनः समादिष्टं ग्रामलोकस्य तस्य तु ।
यद् भोः ! स्वादुजलाऽऽपूर्णः स्वकूपः प्रेष्यतामिह[1] ॥ ३२ ॥
प्रत्यूचे रोहकोऽप्येवं पुरस्था काऽपि कूपिका ।
देवाऽऽदौ प्रेष्यतामत्र यतः सार्द्धं तयैत्ययम् ॥ ३३ ॥
हृष्टो राजाऽप्यभाषिष्ट युक्तमेतेन जल्पितम् ।
कार्यस्याऽघटमानस्याऽघटमानमिहोत्तरम् ॥ ३४ ॥
प्रदत्ताऽऽज्ञा पुना राज्ञा यद्दीच्यां वनं दिशि ।
दक्षिणस्यां दिशि ग्रामात् तत् कथं क्रियते वद ? ॥ ३५ ॥
रोहकोऽप्यवदद् ग्रामनिवेशः क्रियतेऽन्यतः ।
तेनैव विधिना ग्रामाद् भवेद् दक्षिणतो वनम् ॥ ३६ ॥
राजाऽऽदेशात् स चान्येद्युः पायसं पावकं विना ।
पपाचावकरस्यान्तः स्थालीं विन्यस्य यत्नतः ॥ ३७ ॥

---

[1] ख घ -मिति । ग -मितः ।

समीपे भूपतिः स्वस्याकारयामास रोहकम् ।
व्यवस्थयाऽनयाऽन्येद्युरन्योऽन्यस्य विरुद्धया ॥ ३८ ॥
नागम्यं मलिनाङ्गेन कार्यं स्नानं न च त्वया ।
यानाऽऽरूढेन चागम्यं पद्भ्यां नाऽस्पृशता भुवम् ॥ ३९ ॥
नोत्पथेन न मार्गेण न रात्रौ न च वासरे ।
न कृष्णे नोज्ज्वले पक्षे न च्छायायां न चाऽऽतपे ॥ ४० ॥
नोपदापाणिना नैव रिक्तहस्तेन वा त्वया ।
आगन्तव्यं त्वयाऽभ्यामे शेमुषीशालिना ध्रुवम् ॥ ४१ ॥
ततश्चैडकिकाऽऽरूढः स्पृशन् पद्भ्यां धरातलम् ।
प्रक्षालिताङ्गस्तोयेन सन्ध्याकाले कुहूदिने ॥ ४२ ॥
धृतचालनकः शीर्षे चक्ररेखान्तरालगः ।
मृदुपायन[1]पाणिश्च स ययौ नृपपर्षदि ॥ ४३ ॥
कृत्वा प्रणामं भूपस्य समीपे निषसाद च ।
ढौकयामास चामुष्य प्राभृतं मृत्तिकामयम् ॥ ४४ ॥
किमेतदिति राज्ञोक्ते कथयित्वाऽऽत्मनः कथाम् ? ।
सोऽवदद् देव ! गुर्वीयं जगन्मातेव मृत्तिका ॥ ४५ ॥
ततश्च स्वाऽऽगतप्रश्नद्रव्यदानाऽऽदिना नृपः ।
संमान्यैनं सभामध्ये प्रशशंस सविस्मयः ॥ ४६ ॥
अहो ! अस्य महापुंसो विलोक्य मतिवैभवम् ।
वयं मन्यामहे रूढं सत्यमेतत् सुभाषितम् ॥ ४७ ॥

(१) ख घ ङ -पाणिभ्या ।

वाजिवारणलोहानां काष्ठपाषाणवाससाम् ।
नारीपुरुषतोया[1]नामन्तरं महदन्तरम् ॥ ४८ ॥
अथाऽङ्गरक्षकत्वे तं निवेश्य निशि भूपतिः ।
सुष्वाप शयने तस्मिन् रोहकोऽपि महामतिः ॥ ४९ ॥
यामिन्याः प्रथमे यामे जातनिद्राक्षयोऽथ सः ।
विबोध्य रोहकं स्माऽऽह सुप्तो जागर्षि वा भवान् ? ॥ ५० ॥
सोऽवदद् नैव सुप्तोऽस्मि देव ! चिन्तां करोम्यहम् ।
अविकालिगिण्डकाः को नु करोत्येवंविधा इति ? ॥ ५१ ॥
भूपपृष्टेन तेनैव कृतस्तन्निर्णयो यथा ।
वातप्राबल्यतस्तासां जायन्ते तास्तथाविधाः ॥ ५२ ॥
द्वितीयप्रहरेऽप्येवं पृष्टो राज्ञा जजल्प सः ।
यथा पिप्पल[2]पर्णानामादिरन्तोऽथवा गुरुः ॥ ५३ ॥
तेनैव निर्णयश्चक्रे द्वावप्येतौ समाविति ।
तृतीयप्रहरे खाडिहिलादेहस्य चिन्तनम् ॥ ५४ ॥
[3]निर्णीतमिति तेनैव समत्वं देहपुच्छयोः ।
यावती श्वेतता तावत् कृष्णत्वमपि तत्तनौ ॥ ५५ ॥
चतुर्थप्रहरे विद्धः कण्टकेन महीभुजा ।
जगाद रोहको देव ! चिन्ता त्वत्तातजा मम ॥ ५६ ॥

(१) ह. -ना दृश्यते ।
(२) ख घ न पत्राणां ।
(३) ह. निर्णीय कृ ।

कीदृशीति नृपेणोक्ते सोऽवदद् राजगुह्यकौ ? ।
निर्णेजकालिमातङ्गाश्चेति ते जनकाः स्फुटम् ॥ ५७ ॥
राजोचे किमसंबद्धं ब्रूषे जानासि वा कथम् ? ।
सोऽप्यवोचत जानामि भूपते ! तव चेष्टया ॥ ५८ ॥
न्यायेन पालयस्युर्वीं येन तेन नृपाऽऽत्मजः ।
तुष्टो ददासि यद् भूरि धनं तद् धनदात्मजः ॥ ५९ ॥
कोपं करोषि यद् गाढं तत् त्वं चण्डालनन्दनः ।
रुष्टो हरसि सर्वस्वं येन तद् रजकाऽऽत्मजः ॥ ६० ॥
विद्धः कम्बिकया यस्माद् दूनोऽहमलिदंशवत् ।
तेन जानाम्यहं राजन् ! वृश्चिकोऽपि पिता तव ॥ ६१ ॥
इत्यर्थे संशयश्चेत्ते जननीं पृच्छ तन्निजाम् ।
तयाऽप्यनुमतं ह्येतदतिनिर्बन्धपृष्टया ॥ ६२ ॥
वीक्ष्याभिलषिता एते यदृतुस्नातया मया ।
तेन पञ्चाप्यमी वत्स ! पितृभावं भजन्ति ते ॥ ६३ ॥
ततोऽसौ रोहको नामाऽनन्यसामान्यधीधनः ।
पञ्चमन्त्रिशतस्वामी कृतस्तुष्टेन भूभुजा ॥ ६४ ॥
तस्य बुद्धिप्रभावेण दृप्ता अपि महीभुजः ।
अरिकेसरिभूपस्य बभूवुर्वशवर्तिनः ॥ ६५ ॥

॥ इति रोहककथानकं समाप्तम् ॥

बुद्धिर्वैनयिकी सा या विनयेन भवेद् गुरोः ।
अधीतेऽपि निमित्ताऽऽदिशास्त्रे चारुविचारकृत् ॥ ६६ ॥

घटचित्राऽऽदिकरणशिल्पिनां लेखकस्य च ।
भवेत् कर्मसमुत्था या सा बुद्धिः कार्मिकी स्फुटम् ॥ ६७ ॥
परिणामवशात् सर्ववस्तुनः कृतनिश्चया ।
स्यात् पारिणामिकी बुद्धिः प्रतिबोधविधायिनी ॥ ६८ ॥
सर्वासामपि बुद्धीनां दृष्टान्ता आगमोदिताः ।
अनेके सन्ति ते ग्रन्थगौरवादिह नोदिताः ॥ ६९ ॥
बुद्धिश्चतुर्विधाऽप्येषा मतिज्ञानमिहोच्यते ।
सति यस्मिन् श्रुतमपि प्रादुर्भवति देहिनाम् ॥ ७० ॥
त्रिकालविषयं वस्तु येनाऽधीतेन विद्यते ।
तत् सिद्धमातृकामुख्यं श्रुतज्ञानं प्रकीर्तितम् ॥ ७१ ॥
कियन्तोऽपि भवा येन विज्ञायन्ते शरीरिणाम् ।
प्रोक्तं तदवधिज्ञानं सर्वदिक्षु कृतावधि ॥ ७२ ॥
भावा मनोगता येन ज्ञायन्ते संज्ञिदेहिनाम् ।
मनःपर्यवसंज्ञं तच्चतुर्थं ज्ञानमुच्यते ॥ ७३ ॥
सर्वत्र सर्वदा यस्य स्खलना न कथञ्चन ।
तद्भवे केवलज्ञानं पञ्चमं सिद्धिसौख्यकृत् ॥ ७४ ॥
अथोत्थाय जिनं नत्वा गृहं गत्वा च चक्रभृत् ।
राज्ये न्यवेशयत् पुत्रं [1]स सहस्राऽऽयुधाभिधम् ॥ ७५ ॥
चतुःसहस्रै राज्ञां तत्संख्यैः पार्थिवैस्तथा ।
सप्तपुत्रशतैः सार्द्धं स श्रामण्यं ततोऽग्रहीत् ॥ ७६ ॥

(१) ड· सहस्रायुधनामकम् ।

गृहीत्वा द्विविधां शिक्षां गीतार्थो विहरन् भुवि ।
ययौ सोऽपि गिरिवरं सिद्धिपर्वतसंज्ञकम् ॥ ७७ ॥
तत्र वैरोचने स्तम्भे रमणीये शिलातले ।
स सांवत्सरिकीं तस्थौ प्रतिमां मेरुनिश्चलः ॥ ७८ ॥
इतोऽश्वग्रीवतनयौ मणिकुम्भमणिध्वजौ ।
भवं भ्रान्त्वा सुरत्वेन समुत्पन्नौ तदा हि तौ ॥ ७९ ॥
तत्प्रदेशं समायातौ भगवन्तं निरीक्ष्य तम् ।
उत्पन्नमत्सरौ तस्योपसर्गानिति चक्रतुः ॥ ८० ॥
तीक्ष्णदंष्ट्राकरालास्यं दीर्घलाङ्गूलमादितः ।
तौ सिंहव्याघ्रयो रूपं मुक्तनादं वितेनतुः ॥ ८१ ॥
ततश्च रूपमास्थाय करिणोरतिभीषणम् ।
क्रुद्धौ विदधतुः तस्य दन्तघाताद्युपद्रवम् ॥ ८२ ॥
भूत्वाऽथ सर्पसर्पिण्यौ फटाटोपभयङ्करौ ।
ततः पिशाचराक्षस्यावुपदुद्रुवतुश्च तम् ॥ ८३ ॥
रम्भातिलोत्तमानाम्नौ शक्रस्याग्रप्रिये तदा ।
वज्रायुधमुनीन्द्रं तं नमस्कर्तुमुपेयतुः ॥ ८४ ॥
तं विलोक्य समायान्त्यौ (१)त्वरितं तौ प्रणेशतुः ।
ताभ्यां संतर्जितौ गाढं वचनैर्भयकारिभिः ॥ ८५ ॥
साङ्गहारं सविलासं हावभावरसोत्तरम् ।
रम्भा नृत्यं स्वयं चक्रे वज्रायुधमुनेः पुरः ॥ ८६ ॥

(१) क ज विरतौ तौ प्रणेमतुः । ख ट शरितौ ।

सप्तस्वरसमायुक्तं ग्रामत्रयपवित्रितम् ।
तिलोत्तमाऽपि सपरीवारा गीतं व्यधाद् वरम् ॥ ८७ ॥
विधायैवंविधां भक्तिं मुनीन्द्रं तं प्रणम्य च ।
रम्भातिलोत्तमे देव्यौ जग्मतुः स्थानमात्मनः ॥ ८८ ॥
वार्षिकीं पारयित्वा तां प्रतिमामतिदुष्कराम् ।
विजहार महीपीठे वज्रायुधमहामुनिः ॥ ८९ ॥
क्षेमङ्करे गते मोक्षं गणभृत् पिहिताश्रवः ।
आययौ नगरेऽन्येद्युः सहस्रायुधभूपतिः ॥ ९० ॥
धर्मं तदन्तिके श्रुत्वा प्रतिबुद्धः सकोऽपि हि ।
राज्ये शतबलं पुत्रं निवेश्य व्रतमाददे ॥ ९१ ॥
गीतार्थो मिलितः सोऽथ तातसाधोस्ततश्च तौ ।
भूम्यां विहरतः स्मोभौ कुर्वन्तौ विविधं तपः ॥ ९२ ॥
ईषत् प्राग्भारसंज्ञेऽथ समारुह्य महीधरं ।
संतस्थतुः कृतप्रायौ पादपोपगमेन तौ ॥ ९३ ॥
त्यक्त्वा देहमिदं सलाघितमुभौ तौ देवलोकोत्तरं
संप्राप्तौ नवमं गतावमुमथ ग्रैवेयकाग्र्यकम् ।
इत्थं शान्तिजिनेश्वरस्य चरिते तस्यैव वर्याष्टमः
प्रोक्तोऽयं मयका भवः सनवमः सङ्घस्य कुर्याच्छिवम् ॥ ९४ ॥

इत्याचार्यश्रीअजितप्रभसूरिविरचिते श्रीशान्तिनाथचरिते
अष्टमनवमभववर्णनो नाम चतुर्थः प्रस्तावः ॥

---

अर्हम्

# अथ पञ्चमः प्रस्तावः ।

इतोऽस्य जम्बूद्वीपस्य प्राग्विदेहस्य [1]मध्यगे ।
विजये पुष्कलावत्यामस्ति पूः पुण्डरीकिणी ॥ १ ॥
नीतिकीर्तिजयश्रीणां स्त्रीणां सङ्केतमन्दिरम् ।
अभूत् तीर्थङ्करस्तत्र राजा घनरथाभिधः ॥ २ ॥
रूपलावण्यसंयुक्ते तस्याऽभूतामुभे प्रिये ।
आद्या प्रीतिमतीनाम्नी द्वितीया च मनोहरी ॥ ३ ॥
वज्रायुधस्य जीवोऽथैकत्रिंशत्सागरस्थितेः ।
तस्मात् सर्वोत्तमग्रैवेयकादायुःक्षये च्युतः ॥ ४ ॥
तत्पूर्वप्रेयसीकुक्षिशुक्तौ मुक्तामणिप्रभः ।
समुत्पेदे सुतत्वेन मेघस्वप्नोपसूचितः ॥ ५ ॥ ( युग्मम् )
सहस्रायुधजीवोऽथ ततश्च्युत्वोदरेऽभवत् ।
राज्ञः पत्न्याः द्वितीयस्याः सुरथस्वप्नसंमितः ॥ ६ ॥
पूर्णकालेऽथ ते देव्यौ प्रसूते शुभलक्षणौ ।
मेघरथदृढरथनामानौ वरनन्दनौ ॥ ७ ॥
अतिक्रान्तशिशुत्वौ तौ कलाचार्यस्य सन्निधौ ।
सुविनीतौ महाप्राज्ञौ पेठतुः सत्कला इति ॥ ८ ॥

---

(१) ख घ ज भूषणे ।

लेख्यं गणितमालेख्यं नाट्यं गीतं च वादितम् ।
स्वरपुष्करगतं समतालं चेति तत् त्रिधा ॥ ९ ॥
अष्टापदं नालिका च जनवादं तथैव च ।
त्रिधा द्यूतं चान्नपानविधिः शयनसंयुतः ॥ १० ॥
आभरणविधिश्चाऽऽर्या गाथा गीतिः प्रहेलिका ।
श्लोकश्च गन्धयुक्तिश्च तरुणीनां प्रसाधनम् ॥ ११ ॥
नगरस्त्रीहयहस्तीनां लक्षणानि गवां तथा ।
लक्षणं ताम्रचूडस्य तथा [1]मेद्रस्य लक्षणम् ॥ १२ ॥
चक्रच्छत्रमणिदण्डकाकिणीखड्गचर्मणाम् ।
प्रत्येकं लक्षणानीह ज्ञातव्यानि कलाविदा ॥ १३ ॥
चन्द्रसूर्यग्रहराहुचरितं सूपकारता ।
विद्याकारो मन्त्रगतं रहस्यगतमेव च ॥ १४ ॥
व्यूहं चापि प्रतिव्यूहं चारं च प्रतिचारकम् ।
स्कन्धावारप्रमाणं च मान च पुरवास्तुनः ॥ १५ ॥
स्कन्धावारपुरवास्तुनिवेशं चाऽश्वशिक्षणम् ।
हस्तिशिक्षा तत्त्ववादं नीतिशास्त्रं सविस्तरम् ॥ १६ ॥
धनुर्वेदमणिस्वर्णधातुवादं तथैव च ।
बाहुयुद्धं दण्डयुद्धं दृष्टिमुष्ट्योर्युधं तथा ॥ १७ ॥
नियुद्धं वाग्युधं सर्पवश्यापां स्तम्भनं तथा ।
पत्रच्छेदं वैद्यकं च कृषिर्वाणिज्यकर्म च ॥ १८ ॥

(१) क ख ङ ज मण्डस्य ।

विज्ञेयो वलिपलितनाश: पश्चिकृतं तथा ।
कला द्विसप्ततिश्चैता विद्वद्भि: परिकीर्तिता: ॥ १८ ॥
कलाकलापसम्पूर्णौ रूपनिर्जितमन्मथौ ।
क्रमेण यौवनं प्राप्तौ कुमारौ तौ बभूवतु: ॥ २० ॥
सुमन्दिरपुराधीशनिहतारिनृपाऽऽत्मजे ।
उपयेमे मेघरथ: प्रियमित्रामनोरमे ॥ २१ ॥
तस्यैव भूपते: पुत्री कनिष्ठा रूपसंयुता ।
पत्नी दृढरथस्यापि जज्ञे सुमतिसंज्ञका ॥ २२ ॥
नन्दिषेणमेघसेनाऽभिधानौ वरनन्दनौ ।
जातौ [1]मेघरथस्याऽथ पत्नीद्वितयसंभवौ ॥ २३ ॥
पुत्री दृढरथस्यैका रथसेनाभिधाऽभवत् ।
ते त्रयोऽपि कलाऽभ्यासं समये चक्रिरेऽखिलम् ॥ २४ ॥
राजा मेघरथोऽन्यद्यु: पुत्रपौत्रसमन्वित: ।
सिंहासननिविष्टोऽधितष्ठावास्थानमण्डपम् ॥ २५ ॥
प्रोक्ता मेघरथेनाथ न वाधीता निजात्मजा: ।
वत्सा: ! प्रज्ञाप्रकाशाऽर्थं ब्रूत प्रश्नोत्तराणि च ॥ २६ ॥

ततस्तद्वचनानन्तरमेव एकेन कनिष्ठेन पठितम् —

कथं संबोध्यते ब्रह्मा दानार्थो धातुरत्र क: ? ।
क: पर्यायश्च योग्यानां को वाऽलङ्करणं नृणाम् ? ॥ २७ ॥

(१) क मेघरथस्तेऽमी विनयादिगुणैर्युतौ ।

विचिन्त्य द्वितीयेनोक्तम्—'कलाऽभ्यासः' इति ।

स च पठितवान् :—

दण्डनीतिः कथं पूर्वं महाखेदे क उच्यते ? ।
काऽबलानां गतिर्लोकपालः कः पञ्चमो मतः ? ॥ २८ ॥

ज्येष्ठेन तस्योत्तरं दत्तम् —"महीपतिरिति" ।

ततश्च स पपाठ :—

किमाशीर्वचनं राज्ञां का शम्भोः तनुमण्डनम् ? ।
कः कर्ता सुखदुःखानां [1]पात्रं च सुकृतस्य कः ? ॥ २९ ॥

अन्येषु अजानत्सु मेघरथेन तस्योत्तरमादायि—'जीवरक्षाविधिरिति ।

स्वयं च भणितवान्—

सुखदा का शशाङ्कस्य मध्ये च भुवनस्य कः ? ।
निषेधवाचकः को वा का संसारविनाशिनी ? ॥ ३० ॥

राज्ञोक्तम् 'भावनेति' ।

तत्रैका गणिका तत्रोपविश्य नृपमब्रवीत् ।
जीयते देव ! नान्येन कृकवाकुरयं मम ॥ ३१ ॥
यदि वाऽन्यस्य कस्याऽपि गर्वोऽस्ति चरणायुधात् ।
स पादमूले भवतामानयत्वात्मकुक्कुटम् ॥ ३२ ॥
जेष्यते कुक्कुटो मे चेत् ताम्रचूडेन कस्यचित् ।
तत् तस्मै संप्रदास्यामि द्रव्यलक्षमहं स्फुटम् ॥ ३३ ॥
राज्ञी मनोरमा तस्याः समाकर्ण्याथ तद्वचः ।
दास्या राजाज्ञया तत्रानाययद् निजकुक्कुटम् ॥ ३४ ॥

---

(१) ठ मत च सुकृतस्य कः ।

मुक्तस्तेन पणिनाऽसौ ततस्तौ नृपतेः पुरः ।
योद्धुं प्रवृत्तावन्योऽन्यं चञ्चुघातक्षतक्षतौ ॥ ३५ ॥
चञ्चुपादप्रहारैस्तौ युध्यन्तावरुणेक्षणौ ।
राजसभ्यजनकृतां प्रशंसां समवापतुः ॥ ३६ ॥
तीर्थङ्करत्वादागर्भवासाद् ज्ञानत्रयाऽन्वितः ।
अत्रान्तरे मेघरथं राजा घनरथोऽब्रवीत् ॥ ३७ ॥
चिरं युध्वाऽनयोर्मध्याद् वत्स ! नैकोऽपि जेष्यति ।
पृष्टोऽथ कारणं तेन पुनरेव जगाद सः ॥ ३८ ॥
इहैव भरतक्षेत्रेऽभूतां रत्नपुरे पुरे ।
धनदत्तसुदत्ताख्यौ वणिजौ मित्रतां गतौ ॥ ३९ ॥
वाहयन्तौ बलीवर्दौ क्षुत्तृष्णाभरपीडितौ ।
व्यवहारं सदा गत्वरा चक्रतुः समसेव तौ ॥ ४० ॥
मिथ्यात्वमोहितौ कूटतुलामानविधानतः ।
अर्जयामासतुर्वित्तं तौ चाल्पं परवञ्चकौ ॥ ४१ ॥
अन्यदा कलहायन्तौ तौ प्रहृत्य परस्परम् ।
विपद्य चार्तध्यानेन संजातौ वनदन्तिनौ ॥ ४२ ॥
कूले सुवर्णकूलायाः वर्द्धमानौ बभूवतुः ।
काञ्चनताम्रकलशाऽभिधानौ यूथनायकौ ॥ ४३ ॥
तौ च यूथस्य लोभेन युद्ध्वा मृत्वा बभूवतुः ।
मेरिभौ पुर्ययोध्यायां नन्दिमित्रस्य मन्दिरे ॥ ४४ ॥
गृहीत्वा राजपुत्राभ्यां योधितौ तौ परस्परम् ।
विपद्य पुरि तत्रैव संजातौ मेषकौ दृढौ ॥ ४५ ॥

मिथः शृङ्गाऽग्रघातेन भिन्नशीर्षौ सविस्मयम् ।
मृत्वेमौ कुक्कुटौ जातौ रोषारुणविलोचनौ ॥ ४६ ॥
ततश्च नैतयोर्मध्याद् वत्सैकोऽपि विजेष्यते ।
इति श्रुत्वा मेघरथोऽवधिज्ञानी शशंस च ॥ ४७ ॥
न केवलमिमौ तात ! (१)मत्सरावेष्टितौ दृढम् ।
खेचराधिष्ठितौ चात्र कारणं कथयामि वः ॥ ४८ ॥
अस्त्यत्र भरतक्षेत्रे वैताढ्यवरपर्वते ।
सुवर्णनाभं नगरमुत्तरश्रेणिभूषणम् ॥ ४९ ॥
तत्राऽऽसीद् गरुडवेगाभिधानः खेचरेश्वरः ।
तस्य पुत्रौ चन्द्रसूरतिलकाऽऽख्यौ नभश्चरौ ॥ ५० ॥
अन्यदा तौ नमस्कर्तुं प्रतिमाः शाश्वतार्हताम् ।
जग्मतुर्मेरुशिखरे जिनस्नात्रपवित्रिते ॥ ५१ ॥
तत्र सागरचन्द्राऽऽख्यं चारणश्रमणं वरम् ।
दृष्ट्वा प्रणमतुः स्वर्णशिलाऽऽसीनमिमौ मुदा ॥ ५२ ॥
पृष्टो मुनिवरस्ताभ्यां निजपूर्वभवस्थितिम् ।
सोऽपि ज्ञानेन विज्ञाय कथयामास ताविति ॥ ५३ ॥
अस्तीह धातकीखण्डद्वीपस्यैरवते पुरम् ।
नाम्ना वज्रपुरं तत्राभयघोषोऽभवद् नृपः ॥ ५४ ॥
सुवर्णतिलका तस्य राज्ञी तत्कुक्षिसम्भवौ ।
अभूतां जयविजयाभिधानौ वरनन्दनौ ॥ ५५ ॥

(१) क युद्धेरतौ वैरसंयुतौ । खेचरावेष्टितौ । ख घ ङ मत्सरावेष्टितौ युतौ । युद्धेरतौ रोषरक्तौ । ठ पूर्वदुष्कर्मवैरिणौ । मत्सरावेष्टितौ ।

इतः सुवर्णनगरस्वामिनः शङ्खभूपतेः ।
पृथ्वीदेवीभवा पृथ्वीसेना नाम्नी सुकन्यका ॥ ५६ ॥
भूपस्याभयघोषस्य समायाता स्वयंवरा ।
परिणीताऽतिहर्षेण तेनासौ मृगलोचना ॥ ५७ ॥
अन्यदाऽथ वसन्तर्तौ सुपुष्पवनबन्धुरे ।
ययौ क्रीडितुमुद्यानं राजा राज्ञीशतान्वितः ॥ ५८ ॥
भ्रमन्त्या तत्र तत्पत्न्या पृथ्वीसेनाभिधानया ।
अदर्शि दान्तदमनाभिधानो मुनिपुङ्गवः ॥ ५९ ॥
तत्पार्श्वे धर्ममाकर्ण्य तया च प्रतिबुद्धया ।
अनुज्ञाप्य महीपालं प्रव्रज्यां प्रत्यपद्यत ॥ ६० ॥
राजाऽप्युद्यानलक्ष्मीं तामनुभूय ययौ पुरम् ।
प्राप्तश्च तद्गृहेऽन्येद्युश्छद्मस्थोऽनन्ततीर्थकृत् ॥ ६१ ॥
प्रासुकैरन्नपानैश्च स तेन प्रतिलाभितः ।
चक्रिरे पञ्च दिव्यानि तद्गृहे च दिवौकसः ॥ ६२ ॥
उत्पन्नकेवलस्यास्य सभोपि स महीपतिः ।
तनयाभ्यां समं ताभ्यां प्रव्रज्यां प्रतिपन्नवान् ॥ ६३ ॥
विंशतिस्थानकैः तीर्थकरकर्म निबध्य सः ।
कृत्वा कालं ससुतोऽप्यच्युतकल्पे सुरोऽभवत् ॥ ६४ ॥
ततश्च्युतोऽभयघोषजीवः स्वस्याऽऽयुषः क्षये ।
राजा घनरथो जज्ञे हेमाङ्गदनृपाऽऽत्मजः ॥ ६५ ॥
जीवौ जयविजययोः सञ्जातौ वा दिवश्च्युतौ ।
इति तेनानगारेण तयोस्तात ! निवेदितम् ॥ ६६ ॥

ततस्तौ द्रष्टुमुत्कौ त्वामिहायातौ नभश्चरौ ।
अपश्यतां युध्यमानौ कौतुकात् [1]कुर्कुटाविमौ ॥ ६७ ॥
ताभ्यामधिष्ठितावेतौ विद्यया तस्थतुश्च तौ ।
इहैव गोपयित्वा स्वं स्वविद्यायाः प्रभावतः ॥ ६८ ॥
वाक्यं मेघरथस्येद श्रुत्वा तौ खेचरावुभौ ।
राज्ञो घनरथस्यांह्री प्रकटीभूय नेमतुः ॥ ६९ ॥
तौ पूर्वभवतातस्य तस्य नत्वा क्रमद्वयम् ।
क्षणं स्थित्वा निजं स्थानं पुनरेव प्रजग्मतुः ॥ ७० ॥
ततो दीक्षां गृहीत्वा तौ तपस्तप्त्वा सुदुश्चरम् ।
उत्पन्नकेवलज्ञानौ सनातनपदं गतौ ॥ ७१ ॥
अथ तौ कुर्कुटौ सर्वां श्रुत्वा पूर्वभवस्थितिम् ।
महापापविधातारं मनसा स्वं निनिन्दतुः ॥ ७२ ॥
प्रणम्य चरणद्वन्द्वं राज्ञो घनरथस्य तौ ।
स्वभाषयोचतुश्चैवमावां किं कुर्वहे [2]प्रभो ! ? ॥ ७३ ॥
ततो राज्ञा समभ्यक्तो धर्मोऽहिंसाऽऽदिलक्षणः ।
तयोर्निवेदितस्ताभ्यां भावसारं प्रतीप्सितः ॥ ७४ ॥
[3]प्रायं कृत्वा विपन्नौ तौ देवयोनौ बभूवतुः ।
ताम्रचूलस्वर्णचूलौ भूतौ भूताऽटवीं गतौ ॥ ७५ ॥

---

(१) कुक्कुटकुर्कुटशब्दयोः पर्यायत्वात् केषु पुस्तकेषु कुक्कुटशब्दस्य केषुचन कुर्कुटस्योल्लेखः ।

(२) क ट विभो' ।

(३ ङ आयुःक्षये ।

ततो विमानमारुह्याऽऽगत्य नत्वा महीपतिः ।
कृतोपकारं तं प्राशंसतां विरचिताञ्जली ॥ ७६ ॥
राजानं समनुज्ञाप्य जग्मतुस्तौ स्वमाश्रयम् ।
राजाऽपि पालयामास राजलक्ष्मीमसौ चिरम् ॥ ७७ ॥
एत्य लोकान्तिकैर्देवै राजा घनरथोऽन्यदा ।
तीर्थं प्रवर्तयेत्युक्त्वा दीक्षाकालं विबोधितः ॥ ७८ ॥
दत्त्वा सांवत्सरं दानं राज्ये मेघरथं सुतम् ।
स्थापयित्वा स जगृहे दीक्षां देवेन्द्रवन्दितः ॥ ७९ ॥
उत्पाद्य केवलज्ञानं भविकान् प्रतिबोधयन् ।
विजहार महीपीठे श्रीमान् घनरथो जिनः ॥ ८० ॥
युक्तो दृढरथेनाथ युवराजेन सप्रियः ।
उद्याने देवरमणे ययौ मेघरथोऽन्यदा ॥ ८१ ॥
तत्राशोकतरोर्मूले निविष्टस्यास्य भूपतेः ।
पुरोभूतैः समारब्धा कश्चित् प्रेक्षणकक्रिया ॥ ८२ ॥
नानाशस्त्रधराः कृत्तिवाससो भूतिमण्डिताः ।
तेऽतीव विस्मयकरं नृत्यं विदधिरे क्षणम् ॥ ८३ ॥
तेषु नृत्यं प्रकुर्वत्सु किङ्किणीकृतमालितम् ।
विमानमेकमाकाशादाययौ नृपसन्निधौ ॥ ८४ ॥
तन्मध्ये सुन्दराऽऽकारं नारीपुरुषयोर्युगम् ।
दृष्ट्वा पप्रच्छ कावेताविति देवी महीपतिम् ॥ ८५ ॥
राजा प्रोवाच हे देवि ! शृणु वैताढ्यपर्वते ।
उत्तरस्यां वरश्रेण्यां नगरी विद्यतेऽलका ॥ ८६ ॥

विद्युद्रथखेचरेन्द्रपुत्रस्तत्र महाभुजः ।
अयं सिंहरथो नाम्ना सर्वविद्याधरेश्वरः ॥ ८७ ॥
इयं वेगवतीनाम्नी भार्याऽस्य सहितोऽनया ।
गतोऽभूद् धातकीखण्डद्वीपेऽसौ वन्दितुं जिनम् ॥ ८८ ॥
ततो निवर्तमानोऽसौ यावदागादिह प्रिये ! ।
प्रतिघातो गतेस्तावदस्याभूत् सहसैव हि ॥ ८९ ॥
मां दृष्ट्वाऽचिन्तयदसौ सामान्योऽयं नृपो न हि ।
यत्प्रभावेण सञ्जाता विमानस्खलना मम ॥ ९० ॥
ततोऽनेन प्रहृष्टेन भूतरूपाण्यनेकशः ।
कृत्वा मम पुरश्चक्रे प्रिये ! प्रेक्षणकौतुकम् ॥ ९१ ॥
पप्रच्छैवं पुनर्देवी किमनेन पुराभवे ? ।
सुकृतं विहितं येन जाता नाथर्द्धिरीदृशी ॥ ९२ ॥
राजोवाच प्रिये ! पूर्वं पुरे सङ्गपुराभिधे ।
राजगुप्ताभिधः कश्चिद् बभूव कुलपुत्रकः ॥ ९३ ॥
शङ्खिका नाम तद्भार्या निर्धनत्वेन पीडितौ ।
तौ कृत्वाऽन्यगृहे कर्म प्राणवृत्तिं वितेनतुः ॥ ९४ ॥
काष्ठाद्यर्थमथान्येद्युर्गताभ्यां काननान्तरे ।
दृष्ट्वा भक्तिवशात् ताभ्यां साधुरेको नमस्कृतः ॥ ९५ ॥
उपदिष्टस्तयोरग्रे तेन धर्मो जिनोदितः ।
विधिनाऽऽराधितश्चिन्तामणिकल्पद्रुमोपमः ॥ ९६ ॥
जन्मान्तरोपार्जितानां पापानामन्तकारकम् ।
आदिष्टं च तपो द्वात्रिंशत्कल्याणाभिधं वरम् ॥ ९७ ॥

त्रिरात्रद्वितयं तत्र भवेच्चातुर्थिकानि च ।
द्वात्रिंशदिति ताभ्यां तद् विदधे भक्तिपूर्वकम् ॥ ९८ ॥
तस्य पारणके ताभ्यां मुनिरेको गृहागतः ।
प्रणम्य प्रासुकैर्भक्तपानाद्यैः प्रतिलाभितः ॥ ९९ ॥
प्रतिपन्नाऽथ कालेन ताभ्यामप्यनगारता ।
राजगुप्तः स चाचाम्लवर्धमानं तपोऽकरोत् ॥ १०० ॥
आयुःक्षये विपन्नोऽसौ ब्रह्मलोके सुरोऽभवत् ।
ततश्च्युतः सिंहरथाभिधोऽयं समभूत् प्रिये ! ॥ १ ॥
शङ्खिका च तपः कृत्वा कल्पे गत्वा च पञ्चमे ।
इयं वेगवतीनाम्नी जज्ञेऽस्यैव हि वल्लभा ॥ २ ॥
इति मेघरथप्रोक्तमाकर्ण्य चरितं निजम् ।
प्रतिबुद्धः सिंहरथो गतो निजगृहं ततः ॥ ३ ॥
निवेश्य तनयं राज्ये प्रियया सहितस्तया ।
श्रीघनरथतीर्थेशपादान्ते व्रतमग्रहीत् ॥ ४ ॥
घोरं कृत्वा तपःकर्माऽवाप्य केवलमुत्तमम् ।
धौतकर्ममलः सिद्धिं ययौ सिंहरथो मुनिः ॥ ५ ॥
वनाद् गेहं समायातो राजा मेघरथोऽन्यदा ।
मुक्ताऽलङ्करणाऽऽरम्भो विदधे पौषधव्रतम ॥ ६ ॥
मध्ये पौषधशालायाः स्थितो योगाऽऽसने सुधीः ।
पुरः समस्तभूपानां विदधे धर्मदेशनाम् ॥ ७ ॥
अत्रान्तरे कम्पमानशरीरस्तरलेक्षणः ।
संत्रस्तोऽस्मि महाराज ! तवाहं शरणाऽऽगतः ॥ ८ ॥

इति जल्पन् मनुष्योक्त्या कुतोऽप्येत्य भयद्रुतः ।
पपात भूपतेः क्रोडे पक्षी पारापताभिधः ॥ ९ ॥ (युग्मम्
भयभीतममुं दृष्ट्वा दयालुः स महीपतिः ।
प्रोचे त्वं भद्र ! मा भैषीः कुतोऽपि मम सन्निधौ ॥ १० ॥
एवमाभाषितो राज्ञा निर्भयः समभूदसौ ।
तावत् तत्र समायातः क्रूरः श्येनाऽभिधो द्विजः ॥ ११ ॥
सोऽवदत् शृणु राजेन्द्र ! त्वदुत्सङ्गगतोऽस्ति यः ।
पारापतः स मे भक्ष्यं तं मुञ्च क्षुधितोऽस्म्यहम् ॥ १२ ॥
जजल्प भूपतिर्भद्र ! ममाऽयं शरणाऽऽगतः ।
युक्तो नाऽर्पयितुं येन पठन्त्येवं मनीषिणः ॥ १३ ॥
शूरस्य शरणाऽऽयातोऽहर्मणिश्च सटा हरेः ।
गृह्यन्ते जीवतां नैतऽमीषां मत्या उरस्तथा ॥ १४ ॥
परप्राणैः निजप्राणपोषणं पुण्यशोषणम् ।
तवाऽपि नोचितं स्वर्गवारणं श्वभ्रकारणम् ॥ १५ ॥
छिद्यमानेऽप्येकपिच्छे यथा ते जायते व्यथा ।
तथाऽन्येषामपि भवेदिदं चित्ते विभावय ॥ १६ ॥
भाविनी ते क्षणं तृप्तिः पललेऽप्यस्य भक्षिते ।
सर्वप्राणविनाशोऽस्येति चित्ते परिभावय ॥ १७ ॥
पञ्चेन्द्रियाणां जीवानां वधं कृत्वा दुराशयाः ।
गच्छन्ति नरकं जीवा इदं चित्ते विभावय ॥ १८ ॥
श्रूयते जीवहिंसावान् निषादो नरकं गतः ।
दयाऽऽदिगुणयुक्ता च वानरी त्रिदिवं गता ॥ १९ ॥

इहाऽऽसीदमरावत्याः शाखानगरसन्निभा।
शाखामृग[1]शताऽऽकीर्णा हरिकान्ताऽभिधा पुरी ॥ २० ॥
तत्राभूत् पृथिवीपालो हरिपालाभिधः सुधीः।
हरीणां पालनत्वेन यदाख्या सत्यतां गता ॥ २१ ॥
तस्यामेव पुरि क्रूरो यमकिङ्करसन्निभः।
कृतघ्नो निर्दयश्चाभूद् निषादो नाम घातकः ॥ २२ ॥
स पापर्द्धिरतः पापो गत्वा नित्यं वनान्तरे।
जघानानेकशो जीवान् वराहहरिणादिकान् ॥ २३ ॥
इतस्तस्मिन् पुरासन्ने वनेऽनेकद्रुमाकुले।
भूपप्रसादवल्गिनो वसन्ति स्म वलीमुखाः ॥ २४ ॥
तन्मध्ये वानरी काऽपि कापेयविरता सदा।
हरिप्रियाऽभिधानाऽभूद् दयादाक्षिण्यशालिनी ॥ २५ ॥
एकदा च निषादोऽयं नृशंसः शस्त्रपाणिकः।
अपश्यत् पुरतो घोरं मृगारिं मृगयापरः ॥ २६ ॥
सप्राणोऽपि ततः प्राणभयभीतो द्रुतं द्रुतम्।
नंष्ट्वा क्वापि समासन्नेऽधिरूढो जगतीरुहे ॥ २७ ॥
समारोहन्नसौ तत्र पादपे समलोकयत्।
विस्रस्तास्यां भयात् तस्य पूर्वारूढां हरिप्रियाम् ॥ २८ ॥
यस्य बाणप्रहारेण मातङ्गोऽपि विपद्यते।
सोऽस्या अपि तदा भीतो यद् भयो भयमीक्षते ॥ २९ ॥

[1] ख घ ठ -समाकीर्णा।

व्याघ्रात् त्रस्तं तमुद्वीक्ष्य वानरी सा झटित्यपि ।
प्रविहायात्मनः क्षोभं प्रसन्नवदनाऽभवत् ॥ ३० ॥
विश्वस्तोऽभूद् निषादोऽथ निषसश्च तदन्तिके ।
सा तस्य शिरसः केशान् व्यात्रुणोद् बन्धुवत्सला ॥ ३१ ॥
तदुत्सङ्गे शिरः कृत्वा सुप्तोऽसौ विटपाश्रितः ।
वीक्ष्य निद्रायमाणं तं व्याघ्रः प्रोवाच वानरीम् ॥ ३२ ॥
भद्रे ! नोपकृतिं वेत्ति सर्वकोऽपि महीतले ।
मनुष्यस्तु विशेषेणास्मिन्नर्थे श्रूयतां कथा ॥ ३३ ॥
एकस्मिन् सन्निवेशेऽभूत् शिवस्वामीति स द्विजः ।
स्वतीर्थवन्दनार्हतो निरगान्निजमन्दिरात् ॥ ३४ ॥
एकस्यां पतितोऽटव्यां तृष्णार्तोऽन्वेषयन् जलम् ।
पुराणकूपमद्राक्षीद् गूढं तरुलतादिभिः ॥ ३५ ॥
कृत्वा दाम तृणैस्तेन बद्ध्वा च करपत्रकम् ।
कूपान्तः क्षेपयामास जलार्थं सोऽजडाशयः ॥ ३६ ॥
रज्ज्वा तत्र विलग्यैको निर्ययौ कूपकात् कपिः ।
सफलोऽयं समारम्भ इति दध्यौ द्विजोऽपि हि ॥ ३७ ॥
पुनर्द्वितीयवेलायां व्याघ्रसर्पौ विनिर्गतौ ।
ब्राह्मणस्यांघ्रियुग्मं ते प्रणेमुः प्राणदायिनः ॥ ३८ ॥
मतिमान् वानरस्तेषु जातिस्मरणपण्डितः ।
द्विजातिं ज्ञापयामास लिखित्वेत्यक्षरावलिम् ॥ ३९ ॥
वसामो मथुरोपान्ते वयं तत्र त्वयाऽपि हि ।
समागम्यं ततः किञ्चित् स्वागतं ते करिष्यते ॥ ४० ॥

कूपेऽमुष्मिन्मनुष्योऽपि पतितोऽस्ति परं त्वया।
न स्मर्त्तव्यो यतः सोऽयं कृतघ्नः किं करिष्यति ? ॥ ४१ ॥
इत्युदीर्य ययुस्तेऽथ चिन्तयामास स द्विजः।
कथमेष मनुष्योऽपि वराको न हि कृष्यते ? ॥ ४२ ॥
सर्वस्याप्युपकारो हि विधातव्यः स्वशक्तितः।
मनुष्यजन्मनः सारमेतदेव निगद्यते ॥ ४३ ॥
कूपे क्षिप्ता ततो रज्जुं सोऽप्याकृष्टो द्विजन्मना।
कोऽसि त्वं कुत्र वास्तव्य इति पृष्टो जगाद च ? ॥ ४४ ॥
अहं हि मथुरावासी स्वर्णकारोऽत्र केनचित्।
कारणेनागतः कूपे पतितः तृष्णयाऽर्दितः ॥ ४५ ॥
कूपान्तरप्ररूढस्य शाखामालम्ब्य शाखिनः।
यावदस्थामहं तावत्ते पेतुर्वानरादयः ॥ ४६ ॥
समानव्यसनत्वाच्च त्यक्तवैराः परस्परम्।
परोपकाररसिक ! त्वया जीवापिता वरम् ॥ ४७ ॥
मथुरायां समागच्छेरित्युदित्वा ययौ च सः।
द्विजश्च क्रमयोगेण तत्र प्राप्तो भुवि भ्रमन् ॥ ४८ ॥
ततोऽसौ वानरो दृष्टस्तमुद्दिश्योपलक्ष्य च।
हृष्टः सम्मानयामास तत्कालं पेशलैः फलैः ॥ ४९ ॥
व्याघ्रोऽपि तस्य सम्मानं विधातुं वाटिका गतः।
जघान चाविवेकित्वात् तत्र राजसुतं बलात् ॥ ५० ॥
तस्याभरणमादाय बहुमूल्यं सुखेन सः।
ब्राह्मणाय ददौ तस्मै जीवितव्यप्रदायिने ॥ ५१ ॥

कृतप्रणामं दीर्घायुर्भवेत्याशीर्गिरा स तम् ।
तुष्टस्तुष्टाव किं कोऽपि नोपकारेण तुष्यति ? ॥ ५२ ॥
ततश्च ब्राह्मणो नत्वा मथुरायां जनार्दनम् ।
पृच्छन् पृच्छन् पुरीमध्ये स्वर्णकारगृहं ययौ ॥ ५३ ॥
सलोभो लोलुपो दूरादीषद् दृष्ट्याऽवलोक्य तम् ।
अर्धादृष्टिस्तथैवाऽस्थाद् रचयन् भूषणादिकम् ॥ ५४ ॥
ब्राह्मणः स्माह भोः ! किं नु नाडिन्धम ! न वेत्सि माम् ? ।
सम्यग् नाहं विजानामीत्युक्ते तेनावदत् पुनः ॥ ५५ ॥
येन त्वमटवीमध्ये पुरा कूपात् समुद्धृतः ।
सोऽस्मि द्विजो महाभागागतः प्राघुणिकस्तव ॥ ५६ ॥
ततोऽसावुपविष्टः सन्तोषवन्नम्रो ननाम तम् ।
ढौकयित्वाऽऽसनं किं ते करोमीति जगाद च ? ॥ ५७ ॥
भूषणं दर्शयित्वाऽथ विप्रः प्रोवाच मुष्टिकम् ।
दक्षिणायामिदं लब्धं मया क्वापि कुतोऽपि हि ॥ ५८ ॥
अस्य मूल्यविधौ धीमांस्त्वमेवासि महाशय ! ।
तद्गृहीत्वा यथायोग्य मूल्यं भव्यं प्रयच्छ मे ॥ ५९ ॥
इति तस्यार्पयित्वा तन्नद्यां स्नातुं ययौ द्विजः ।
शुश्राव स्वर्णकारश्च पटहोद्घोषणामिमाम् ॥ ६० ॥
हत्वाऽद्य राजतनयं केनाप्यात्तं विभूषणम् ।
यस्तं वेत्ति स आख्यातु वध्योऽसौ भूपतेर्यतः ॥ ६१ ॥
इत्याकर्ण्य कलादोऽपि वितर्काऽऽकुलितोऽभवत् ।
मयैव घटितं ह्येतदिति सम्यग् विवेद च ॥ ६२ ॥

दध्यौ चासंस्तुतो मेऽयं श्रोत्रियो गोत्रिकश्च न ।
तत्कथं युज्यते कर्तुमस्यार्थेऽनर्थमात्मनः ? ॥ ६३ ॥
ततश्च पटहं धृत्वा गत्वा दत्त्वा च भूषणम् ।
राज्ञे तदपहर्तारं ब्राह्मणं तं न्यवेदयत् ॥ ६४ ॥
राज्ञाऽऽज्ञाप्य निजान् पत्तीन् स बद्धाऽऽनायितस्ततः ।
पृष्टाः पौराणिकाः किं भोः ! युज्यतेऽत्र ममेत्यथ ? ॥६५॥
तेऽवोचन् वेदवेदाङ्गपारगोऽपि द्विजोत्तमः ।
महाहत्याकरो राज्ञा वध्यो नास्त्यत्र पातकम् ॥ ६६ ॥
रासभारोपितं कृत्वा राजादेशात् पदातयः ।
रक्तचन्दनलिप्तं च तं निन्युर्वध्यभूमिकाम् ॥ ६७ ॥
नीयमानो महात्माऽसौ चिन्तयामास चेतसि ।
अहो ! मे दैवदोषेण कीदृशी दुर्दशाऽभवत् ? ॥ ६८ ॥
अहो ! दुष्टस्य धृष्टस्य मुष्टिकस्य कृतघ्नता ।
व्याघ्रवानरयोः पश्य कीदृशी च कृतज्ञता ? ॥ ६९ ॥
स्मृत्वा तदुदितं वाक्यमात्मनश्चाऽज्ञतां पुनः ।
पश्चात्तापाऽभितप्ताङ्गः श्लोकयुग्मं पपाठ सः ॥ ७० ॥
व्याघ्रवानरसर्पाणां यन्मया न कृतं वचः ।
तेनाहं दुर्विनीतेन कलादेन विनाशितः ॥ ७१ ॥
वेश्याऽ[1]क्षकुक्कुराश्चौरनीरमार्जारमर्कटाः ।
जातवेदाः कलादश्च न विश्वास्या इमे क्वचित् ॥ ७२ ॥

---

(१) ख ठ द च -श्वकुक्कुरा- । ग वेश्या च कुक्कुराश्चौरा । गूर्जरभाषानिबद्धश्रीमल्लिनाथरासनाम्नि पुस्तके तु वेश्याश्वा राजनागाश्चेत्युपलभ्यते ।

इदं पुनः पुनस्तेन पठ्यमानं निशम्य सः ।
तं च विज्ञाय तत्रस्थो भुजगोऽचिन्तयच्चिदम् ॥ ७३ ॥
वयं येनोद्धृताः कूपात् पुराऽरण्ये महात्मना ।
स एवाद्य महीदेवो व्यसने पतितो हहा ! ॥ ७४ ॥

उक्तञ्च—

उपकारिणि विस्रब्धे साधुजने यः समाचरति पापम् ।
तं जनमसत्यसन्धं भगवति ! वसुधे ! कथं वहसि ? ॥७५॥
इयत्यपि गते सोऽहं कृत्वा किञ्चिद्विधानकम् ।
यास्याम्यस्योपकारस्यानृण्यं बुद्धिवशाद् [1]द्रुतम् ॥ ७६ ॥
ततश्च वाटिकां गत्वा क्रीडन्तीं सममालिभिः ।
लतागुल्मान्तरीभूय सोऽदशद् राजनन्दिनीम् ॥ ७७ ॥
निराधारा लतेवैषा मूर्च्छिताऽङ्गाऽपतद्भुवि ।
सख्यस्तूर्णं तदाचख्युः पूत्कुर्वत्यो महीपतेः ॥ ७८ ॥
राजा च तत् समाकर्ण्य स्फूर्जथुप्रतिमं वचः ।
[2]महाशोकाकुलः काममाबाधाविधुरोऽवदत् ॥ ७९ ॥
यावन्नैकस्य दुःखस्य पारमासाद्यते मया ।
द्वितीयं ढौकितं तावच्छिद्रेऽनर्था भवन्त्यहो ! ॥ ८० ॥
मान्त्रिकास्तान्त्रिकाश्चैव समाहूता महीभुजा ।
चिकित्सा च समारब्धा तत्रैको मान्त्रिकोऽवदत् ॥ ८१ ॥

---

(१) ठ ध्रुवम् ।
(२) द महाशोकाक्रममाबाधाविधुरो नरवरोऽवदत् ।

समास्ति निर्मलज्ञानं तेन जानामि भूपते ! ।
योऽसौ व्यापादयति विप्रस्तमवेहि निरागसम् ॥ ८२ ॥
अनेन किल कान्तारे पुरा कूपात् समुद्धृताः ।
व्यालवानरशार्दूलाः कलादश्च चतुर्थकः ॥ ८३ ॥
सोऽयमत्रागतोऽपूजि वानरेण फलादिभिः ।
अस्य पूजाकृते राजन् ! हतो व्याघ्रेण ते सुतः ॥ ८४ ॥
व्याघ्रदत्तं तमादायालङ्कारमजुर्धीरयम ।
पार्श्वे कृतोपकारस्य कलादस्य समागतः ॥ ८५ ॥
कलादवचसा देव ! भवता हन्तुमादरात् ।
समादिष्टोऽथ दृष्टश्च भोगिना तेन सोऽध्वनि ॥ ८६ ॥
ततश्च तद्विमोक्षार्थं दष्टा युष्मत्सुताऽमुना ।
यद्येष मुच्यते विप्रस्तदा जीवत्यसावपि ॥ ८७ ॥
अत्रार्थे प्रत्ययः कश्चिदित्युक्ते भूभुजाऽथ सः ।
तत्रावतारयामास मान्त्रिकस्तं महोरगम् ॥ ८८ ॥
तेनाप्यनुमतं सर्वं यदुक्तं मन्त्रवादिना ।
संजातप्रत्ययो राजा ततश्चामोचयद् द्विजम् ॥ ८९ ॥
मुक्तं दृष्ट्वा द्विजन्मानमुरगो गौरवाञ्चितम् ।
प्रत्याजहार गरलमात्मीयं दंशधावनात ॥ ९० ॥
अथ सा राजतनया कामदेवोदयं ययौ ।
राजलोकस्तदा सर्वो बभूव कुमुदोपमः ॥ ९१ ॥
तस्य द्विजन्मनश्चाग्रे कथयामास मान्त्रिकः ।
यत्ते दत्तं जीवदानं पन्नगेनामुना खलु ॥ ९२ ॥

विप्रोऽवोचदहो ! रम्यं चरित्रं देहिनामिह ।
क्रूरा अपि कृतज्ञत्वं दधत्यन्ये कृतघ्नताम् ॥ ९३ ॥
दधात्वमी भूतधात्री द्वाविव पुरुषौ सदा ।
उपकारे मतिर्यस्य यश्च नोपकृतं हरेत् ॥ ९४ ॥
ततश्च विस्मयाद्राज्ञा पृष्टः कथयति स्म सः ।
समारभ्य प्रवासादि बन्धनान्तां निजां कथाम् ॥ ९५ ॥
पुनः स्माह महाराज ! सुखदुःखकृतौ कृतौ ।
ध्रुवं कृतान्त एवैकः सर्वेषामिह देहिनाम् ॥ ९६ ॥
तत्कथाश्रवणाद् गाढं तुष्टेनाथ महीभुजा ।
शिवस्वामी कृतः स्वामी विषयस्य गरीयसः ॥ ९७ ॥
शिवस्वाम्यपि देशे स्वे कृतज्ञैकशिरोमणिः ।
प्रावर्तयन्नागपूजाविधाने नागपञ्चमीम् ॥ ९८ ॥
कथयित्वा कथामेतां पुनर्व्याघ्रोऽब्रवीदिदम् ।
हरिप्रिये ! यथा तेन सरलेन द्विजन्मना ॥ ९९ ॥
कृतादापद्विपदः प्राप्ता निषादोऽयं तथैव हि ।
विधाता ते महानर्थं तन्मुञ्चैनं समागतम ॥ २०० ॥ (युग्मम्
एवमुक्ताऽपि नामुञ्चत् साधुप्रकृतिवानरी ।
यावत्तावत् स आसीनो व्याघ्रस्तस्य तरोरधः ॥ १ ॥
इति व्यचिन्तयदहो । तिरश्चामपि चेतसि ।
मैत्र्यादि दृश्यते बुद्धिर्दुर्लभा या तु योगिनाम् ॥ २ ॥
प्रबुद्धस्याथ दुष्टस्य निषादस्य दुरात्मनः ।
अस्वपद् वानरी साऽपि निवेश्याङ्के निजं शिरः ॥ ३ ॥

व्याघ्रोऽप्यभ्याममागत्य तं जगाद निषादकम् ।
मित्रं मामनया कृत्वा निर्भयो भव सर्वतः ॥ ४ ॥
ममाहंक्षुधितस्यैनां समर्पय न चेदथ ।
प्रभूतेनापि कालेन स्वगृहं न गमी ततः ॥ ५ ॥
अपरं च न सङ्गोऽस्याः शुभोदर्काय ते ध्रुवम् ।
नाश्रौषीस्त्वं पुरा किं वा वानरेण हतो नृपः ? ॥ ६ ॥
इत्यर्थे श्रूयतां भद्र ! प्रथयामि कथामहम् ।
सहर्षः स निषादोऽपि प्राहाऽऽख्याहि शृणोम्यहम् ॥ ७ ॥
पुरे नागपुरे भूपः स्वरूपजितमन्मथः ।
शत्रुवंशव्रजस्यासीद्दावाभः पावकाह्वयः ॥ ८ ॥
वाहकेल्यां शूकलेन वाजिना काननेऽन्यदा ।
बलान्नीतो नृपो दूरमध्वानं प्रविलङ्घ्य सः ॥ ९ ॥
एकाकिनो वने तस्मिन् भ्रमतो नृपतेस्तदा ।
क्षुधितस्य तृषार्तस्य मिलितः कोऽपि वानरः ॥ १० ॥
फलान्यानीय रम्याणि तेन दत्तानि भूभुजे ।
दर्शितं शुचिपानीयपूर्णं चापि सरोवरम् ॥ ११ ॥
फलान्यास्वाद्य पीत्वा च वारि हारि धरापतिः ।
आससाद परां प्रीतिं सनसस्तावदागतम् ॥ १२ ॥
तत्सैन्यं सल्लिसामन्तवाजिवारणबन्धुरम् ।
नीतोऽसौ वानरो राज्ञा कृतज्ञेन निजं पुरम् ॥ १३ ॥
बुभुजे सोऽथ पक्वान्नं मोदकादि मुहुर्मुहुः ।
फलानि कदलीचूतप्रमुखानि नृपाज्ञया ॥ १४ ॥

भ्रमरं प्रकृतिं तां च तं सदा निजपार्श्वगम् ।
चकार नृपतिश्चैषा प्रकृतिः पौरुषी यतः ॥ १५ ॥
वसन्ते सङ्गतेऽन्येद्युः कामिनां चित्तशालिनाम् ।
ऋतौ पुष्पफलाकीर्णे कानने 'कमिताञ्चति ॥ १६ ॥
अन्दोलजलकेल्यादि प्रक्रीड्य कदलीगृहे ।
सुष्वाप श्रमनाशाय प्लवगे त्वङ्गरक्षके ॥ १७ ॥ ( युग्मम् )
कुधिया कपिना तेन स्वामिभक्तत्वमानिना ।
भ्रमरव्याजतो राज्ञः कृत्ता खड्गेन कन्धरा ॥ १८ ॥
यथा तेन हितोऽस्मिन हितादपि हि वानरात् ।
प्राप्तं तु मरणं तस्मात्तदिदं श्रेयसे न ते ॥ १९ ॥
इत्याकर्ण्य कथा तेन व्याघ्रेनाशु हरिप्रिया ।
पातिताऽस्य मृगारातेः पुरः प्रोवाच तामसौ ॥ २० ॥
न धार्यं हृदये दुःखं भद्रे ! प्राप्ता त्वया ननु ।
तादृशी फलसम्प्राप्तिर्यादृशः सेवितो नरः ॥ २१ ॥
प्रत्युत्पन्नमतिः साऽथ व्याघ्रं स्माह स्वसंज्ञया ।
रक्षणीया त्वया नाहं भक्षणीयैव केवलम् ॥ २२ ॥
हितं ते वच्म्यदो वाक्यं वानराणां मृगाधिप ! ।
प्राणा वसन्ति लाङ्गूले ग्राह्यास्तत्रैव तत्त्वया ॥ २३ ॥
तथैव कृतवान् व्याघ्रः सहसा साऽपि वानरी ।
वृक्षे त्वरितमारूढा पुच्छं मुक्त्वा मुखेऽस्य तत् ॥ २४ ॥

१. द कामिताऽञ्चते ।

विलक्षवदनो व्याघ्रो व्याघुट्याऽगाददृश्यताम् ।
उत्ततार ततो वृक्षात् सनिषादा च वानरी ॥ २५ ॥
अग्रे भूत्वा तया निन्ये स स्वावासे लताश्रये ।
तस्याः शिशवस्तत्रासंस्तेषां पार्श्वे निवेश्य तम ॥ २६ ॥
विधातुं स्वागतं तस्य सा त्वनालस्यशालिनी ।
वनमध्ये ययौ स्वादुफलानयनहेतवे ॥ २७ ॥ ( युग्मम् )
जिघत्सुना निषादेन तदपत्यानि तान्यपि ।
खादितानि कुतः कृत्याकृत्यविदो दुरात्मनाम् ? ॥ २८ ॥
फलान्यादाय स्वादूनि वानरी यावदाययौ ।
तावत्सुप्तं निषादं तमपश्यन्न च तान् शिशून् ॥ २९ ॥
तथाऽप्युत्थाप्य यत्नेन दत्त्वा चास्मै फलानि सा ।
अपत्यान्वेषणं कर्तुं सार्धं तेन प्रचक्रमे ॥ ३० ॥
पातिताऽपि पुरा वृक्षादपत्यैर्वर्जितेर्ष्वपि ।
प्रतिपन्नमगर्भेऽस्मिन् नाशशङ्के तथाऽप्यसौ ॥ ३१ ॥
दध्यौ चित्ते निषादोऽपि विषादाकुलितो भृशम् ।
अहो ! मेऽद्य समस्तोऽपि व्यापारोऽभून्निरर्थकः ॥ ३२ ॥
रिक्त एव कथं गेहे यास्यामीति विचिन्त्य सः ? ।
[1]यष्ट्या चाहत्य हतवान् शीर्षमस्तामेव वानरीम् ॥ ३३ ॥
तां च कावाकृतौ क्षिप्त्वा नीयमाना निरीक्ष्य सः ।
आविर्भूयाऽवदद् व्याघ्रः किमिदं रे कृतं त्वया ? ॥ ३४ ॥

(१) क ह व्यापाद्य वानरीं स्कन्धे निधाय प्रचचाल सः ॥
यावत्प्रयात्यसौ गेहं प्रति तावद्ददर्श च ।

यथा त्वं पुत्रवत् पाप ! पालितो लालितश्चिरम् ।
तस्याः प्रकुर्वतो घातं किं न ते 'शटितौ करौ ? ॥ ३५ ॥
रे पापिष्ठ ! निकृष्टात्म ! कृतघ्नाभव्य ! दुर्मते ! ।
प्रयाहि मेऽप्यवध्योऽसि त्वन्मुखं वीक्ष्यते कथम् ? ॥ ३६ ॥
निषादस्यागतो गेहे ज्ञात्वा तद्वृत्तमादितः ।
राज्ञा चाज्ञापितो वध्यो बद्धोऽसौ बन्धनैर्दृढम् ॥ ३७ ॥
राजादिष्टैर्नरैर्यावत् स नीतो वध्यभूमिकाम् ।
तावद् व्याघ्रोऽवदद्युक्तमहो ! नैतस्य मारणम् ॥ ३८ ॥
अथ तैर्विस्मयापन्नैः कथितं तन्महीभुजे ।
स्वयं राजाऽपि तत्रागात् कौतुकोत्तानमानसः ॥ ३९ ॥
तथैव व्याजहाराऽसौ मृगराजो महीपते ! ।
पापिनोऽस्य वधान्मा भूस्त्वमप्यंशहरोऽधमः ॥ ४० ॥
स्वयमेव पतन्त्येव विपत्तौ पापजन्तवः ।
निमज्जति यथा तूर्णं सम्पूर्णः कलसोऽम्भसि ॥ ४१ ॥
राजा प्रोवाच हे व्याघ्र ! तिरश्चोऽपि कथं नु ते ।
प्रकृष्टा मानवी भाषा, विवेकित्वं तथेदृशम् ? ॥ ४२ ॥
व्याघ्रोऽप्येवमभाषिष्ट विशिष्टज्ञानसंयुतः ।
उद्याने सूरिरत्रास्ति स सर्वं कथयिष्यति ॥ ४३ ॥
इत्युदित्वा ययौ सोऽथ तं निषादं महीपतिः ।
पुर्या निष्कासयामास सुरेन्द्र इव सङ्गमम् ॥ ४४ ॥

---

१ इ त्रोटितौ ।

ततश्च वनखण्डान्तर्मूर्तं धर्ममिवाग्रतः ।
ददर्शायं परिवृतं सूरिं भूरितपोधनैः ॥ ४५ ॥
नमस्कृत्य गुरोः पादावनुज्येष्ठं मुनीनपि ।
उपविश्य च गुर्वन्ते पप्रच्छैवं कृताञ्जलिः ॥ ४६ ॥
प्रभो ! सर्वं विजानासि निर्मलज्ञानचक्षुषा ।
तेन पृच्छामि सा मृत्वा कां गतिं वानरी ययौ ? ॥ ४७ ॥
गुरुः प्रोवाच भूपाल ! मरालधवलाशया ।
धर्मध्यानपरा धन्या सुरलोकमियाय सा ॥ ४८ ॥

यतः—

तपःसंयमदानोपकारेषु निरतः सदा ।
गुरुवाक्यरुचिर्जीवो दयावांश्च दिवं गमी ॥ ४९ ॥
अपृच्छद्भूपतिर्भूयो भूयः पापपरायणः ।
जात्या च क्रियया चापि निषादाख्यः क्व यास्यति ? ॥५०॥
सूरिश्च कथयामास सर्वस्यापि स्फुटं स्फुटः ।
यदास्य पापिनः स्थानं किमन्यन्नरकं विना ॥ ५१ ॥
जीवहिंसामृषावादस्तेनान्यस्त्रीनिषेवणैः ।
परिग्रहकषायैश्च विषयैर्विषयीकृतः ॥ ५२ ॥
कृतघ्नो निर्दयः पापी परद्रोहविधायकः ।
रौद्रध्यानपरः क्रूरो नरो नरकभाग् भवेत् ॥५३॥ (युग्मम)
प्रस्तावादपरगतिद्वयलक्षणमपि शृणु ।
[1]पिशुनो गोमतिश्चैव मित्रे शाठ्यरतः सदा ॥ ५४ ॥

[1] ठ पिशुनो दुर्विनीतश्च ।

आर्तध्यानेन जीवोऽयं तिर्यग्गतिमवाप्नुयात् ।
मार्दवार्जवसम्पन्नो गतदोषकषायकः ।
न्यायवान् गुणगृह्यश्च मनुष्यगतिभाग् भवेत् ॥ ५५ ॥
पृच्छति स्म पुनर्भूपः कथं व्याघ्रो मनुष्यवाक् ? ।
निषादसूदनाद् येन वारितोऽहं प्रभो ! बलात् ॥ ५६ ॥
जगाद पुनराचार्यो भूपते ! शृणु कारणम् ।
सौधर्मे देवलोकेऽस्ति शक्रसामानिकः सुरः ॥ ५७ ॥
तस्य प्राणप्रिया देवी च्युत्वा क्वापि मनुष्यभूत् ।
रक्षपालाः सुरास्तस्या अपृच्छंस्तत्प्रियं सुरम् ॥ ५८ ॥
स्वामिन्नस्मिन् विमाने का भविता देवता न वा ? ।
तेन सा वानरी तेषां भाविनी देवतोदिता ॥ ५९ ॥
व्याघ्ररूपधरो भूत्वा तत्परीक्षार्थमागतः ।
एको देवस्ततो राजंस्तस्य वाग् मानुषी वरा ॥ ६० ॥
हरिप्रियानिषादाभ्यां सह तेन विनिर्ममे ।
विवादो बहुधा मायामृगालानुचरेण च ॥ ६१ ॥
प्रतिबुद्धस्ततो राजा राज्यं न्यस्य सुते निजे ।
तेषामेव मुनीन्द्राणां पार्श्वे जातो महाव्रती ॥ ६२ ॥
हरिपालाख्यराजर्षिः पालयित्वा व्रतं चिरम् ।
सुरलक्ष्मीमवापोच्चैस्तस्मिन्नेव सुरालये ॥ ६३ ॥

इति निषादवानरी कथा ।

यथाऽसौ नरकं प्राप्तो निषादो जीवहिंसया ।
तथाऽन्योऽपि भवेत्तस्मात्याज्येयं सर्वथा त्वया ॥ ६४ ॥

श्रुत्वा मेघरथस्योक्तिं श्येनोऽवोचन्महीपते ! ।
धर्माधर्मविचारं त्वं करोष्येवं सुखी यतः ॥ ६५ ॥
पारापतोऽयं मद्भीतः शरणं त्वां समाश्रितः ।
बुभुक्षाराक्षसीग्रस्तः शरणं कं श्रयाम्यहम् ? ॥ ६६ ॥
राजन् ! सत्पुरुषोऽसि त्वं दुःखं कस्यापि नेच्छसि ।
रक्ष रक्ष कृपाशूर ! तदेनमिव मामपि ॥ ६७ ॥
कृत्याकृत्यं स्वयं वेत्सि किन्त्वेकं कथयामि ते ।
मादृशे क्षुधिते क्षुद्रे कीदृशी धर्मवासना ? ॥ ६८ ॥
विवेको ह्री दया [1]धर्मो विद्या स्नेहश्च सौम्यता ।
सत्त्वं च जायते नैव क्षुधार्तस्य शरीरिणः ॥ ६९ ॥
प्रतिपन्नमपि प्रायो लुप्यते क्षुन्निपीडितैः ।
इत्यर्थे नीतिशास्त्रोक्तो दृष्टान्तः श्रूयतां प्रभो ! ॥ ७० ॥
करीरवनसंकीर्णे निर्जले मरुमण्डले ।
अवात्सीत् कूपके क्वापि द्विजिह्वः प्रियदर्शनः ॥ ७१ ॥
नीरासन्नबिलस्यान्तः सुखेन निवसन्नसौ ।
विदधे सर्वदाऽऽहारं भेकादिजलजन्तुभिः ॥ ७२ ॥
सुखप्राप्तिकृते तधार्मिकेन हरिणा सह ।
गङ्गदत्ताभिधानेन स मैत्रीत्वं प्रपन्नवान् ॥ ७३ ॥
कूपान्तरकृतावासा चित्रलेखा च सारिका ।
बभूव मधुरालापा तस्य सर्पस्य वल्लभा ॥ ७४ ॥

---

(1) ठ सत्यं ।

एवं गच्छति कालेऽस्याऽन्यदा द्वादशवार्षिकी ।
अनावृष्टिरभूत्तेन कूपे तत्राम्बु निष्ठितम् ॥ ७५ ॥
तस्मिंश्च निष्ठिते सर्वे जलजीवाः क्षयं गताः ।
तदाऽऽहारस्य तस्याहेर्वृत्तिच्छेदोऽभवत्ततः ॥ ७६ ॥
गङ्गदत्तस्तु शालूरः पङ्कशेषकृताशनः ।
जीवन्नन्येद्युरित्यूचे सर्पेणायं रहःस्थितः ॥ ७७ ॥
भद्राहं क्षुधितोऽत्यन्तं त्वज्जातिकृतभक्षणः ।
सा त्वनावृष्टिदोषेण विगता किं करोम्यहम् ? ॥ ७८ ॥
सोऽथ दध्यावयं क्रूरो निहन्तुं मां समीहते ।
रक्षामि स्वं ततोऽमुष्मात् कृत्वोपायं हि कञ्चन ॥ ७९ ॥
इति ध्यात्वाऽवदत् स्वामिन् ! गत्वा सिन्धुह्रदादिषु ।
निजजातिं विलोभ्याहमानेष्यामि कृते तव ॥ ८० ॥
धृत्वा चञ्चुपुटे चित्रलेखा नेष्यति तत्र माम् ।
ततस्ते प्रचुरा नित्यं प्राणयात्रा भविष्यति ॥ ८१ ॥
अथानेन समादिष्टा तदर्थं पक्षिणी सका ।
चञ्च्वा कृत्वा मुमोचैनं नीत्वा क्वापि महाह्रदे ॥ ८२ ॥
नीरमध्यप्रविष्टोऽसौ संजातः सुखभाजनम् ।
तदाशयमजानन्त्या भणितश्चित्रलेखया ॥ ८३ ॥
एह्येहि भद्र ! शीघ्रं त्वं विधाय स्वसमीहितम् ।
कष्टेन वर्तते स्वामी सोऽथ तामित्यभाषत ॥ ८४ ॥

आख्याहि भद्रे ! प्रियदर्शनस्य
न गङ्गदत्तः पुनरेति कूपम् ।

बुभुक्षितः किं न करोति पापं ?
क्षीणा नरा निष्करुणा भवन्ति ॥ ८५ ॥

इत्यात्मचिन्तितं तस्या आख्याय पुनरब्रवीत् ।
त्वयाऽपि तस्य विश्वासो न कर्तव्यः कथञ्चन ॥ ८६ ॥

एवं राजन् ! क्षुधार्तः सन् कृत्याकृत्यं न वेद्म्यहम् ।
तदाशु प्रीणय त्वं मां यावत् प्राणा न यान्त्यमी ॥ ८७ ॥

एवं श्येनेन भणिते प्रोवाच जगतीपतिः ।
यच्छामि ते वराहारं भद्र ! त्वं क्षुधितो यदि ॥ ८८ ॥

पक्ष्यूचे नान्य आहारोऽस्माकमिष्टो विनाऽऽमिषम् ।
तदप्यानीय शूनाया दास्यामीति नृपोऽवदत् ॥ ८९ ॥

पश्यतो मेऽङ्गिनो मांसं छित्त्वा चेद्दीयते ततः ।
तृप्तिर्भवेदिति पुनर्वदति स्म स नीडजः ॥ ९० ॥

राजोचे यत्प्रमाणोऽयं भवेत् पक्षी तुलाधृतः ।
तावन्मात्रं निजं मांसं यच्छामि किमु ते वद ? ॥ ९१ ॥

एवमस्त्विति तेनोक्ते तुलामानाययन्नृपः ।
न्यवेशयच्च तत्रैकपार्श्वे पारापतं द्विजम् ॥ ९२ ॥

उत्कृत्योत्कृत्य देहं स्वं तीक्ष्णक्षुरिकयाऽक्षिपत् ।
द्वितीयपार्श्वे मांसं च करुणारससागरः ॥ ९३ ॥

छित्त्वा निजकमांसानि स चिक्षेप यथा यथा ।
पारापतोऽधिकतरमवर्धिष्ट तथा तथा ॥ ९४ ॥

गुरुभारमसुं ज्ञात्वा स्वगं साहसिकाग्रणीः ।
तुलायामारुरोहाऽस्यां स्वयमेव महीपतिः ॥ ९५ ॥

तुलारूढं नृपं दृष्ट्वा सकलोऽपि परिग्रहः ।
हाहाकारं प्रकुर्वाणः सविषादमदोऽवदत् ॥ ९६ ॥
हा ! नाथ ! जीवितत्यागसाहसं किं करोष्यदः ? ।
एकस्य पक्षिणोऽस्यार्थे किमस्मांश्चावमन्यसे ? ॥ ९७ ॥
इदमौत्पातिकं किञ्चित् प्रभो ! सम्भाव्यते यतः ।
भवेन्नैतादृशो भारः क्षुद्रकायस्य पक्षिणः ॥ ९८ ॥
परोपकारकरणरसिकः सरलाशयः ।
तथोपयोगं भूपोऽसौ न ददौ ज्ञानवानपि ॥ ९९ ॥
इदं च चिन्तयामास धन्यास्ते धरिणीतले ।
निर्वाहयन्ति ये श्रेयः कार्यमङ्गीकृतं खलु ॥ ३०० ॥
सर्वोऽपि स्वार्थलुब्धोऽयं चलस्नेहः परिग्रहः ।
कृतघ्नमशुचेर्गेहं देहं चापि विनश्वरम् ॥ १ ॥
अपेक्षयाऽनयोः सोऽहं स्वार्थभ्रंशं करोमि किम [illegible] ।
स्वसन्धां पूरयिष्यामि यद्वा तद्वा भवत्वहो ! ॥ २ ॥
अत्रान्तरे चलत्स्वर्णकुण्डलालङ्कृतश्रुतिः ।
किरीटहारकटकधारी कश्चित् सुरो वरः ॥ ३ ॥
आविर्भूय जगादैवं धन्योऽसि त्वं महीपते ! ।
तव धीर ! दयावीर ! सफलं जन्मजीवितं ॥ ४ ॥
येनाद्य त्वद्गुणग्रामं शशाङ्ककरनिर्मलम् ।
ईशानेन्द्रः सभामध्ये प्रशशंस सविस्मयः ॥ ५ ॥
अश्रद्दधानस्तमहं त्वत्परीक्षार्थमागतः ।
अधिष्ठितौ मया ह्येतौ पूर्वमत्सरिणौ खगौ ॥ ६ ॥

अथापृच्छन्नृपो वैरं कथं देवानयोरभूत् ? ।
इत्याख्याहि यतोऽस्माकं वर्तते कौतुकं महत् ॥ ७ ॥
आख्यच्च त्रिदशोऽत्रैव नगरे समभूत्पुरा ।
वणिक् सागरदत्तो विजयसेना च तत्प्रिया ॥ ८ ॥
युगलेन समुत्पन्नौ वाणिज्यकलयाऽन्वितौ ।
धननन्दननामानावभूतां नन्दनौ तयोः ॥ ९ ॥
पितरं समनुज्ञाप्य सार्थेन सममन्यदा ।
जग्मतुस्तौ वणिज्यार्थं पुरं नागपुराभिधम् ॥ १० ॥
व्यवहारं प्रकुर्वद्भ्यां ताभ्यामेकमुपार्जितम् ।
बहुमूल्यं तत्र रत्नं कथञ्चिद्दैवयोगतः ॥ ११ ॥
ततस्तौ तस्य लोभेनान्योन्यघाताभिलाषिणौ ।
मज्जन्तावन्यदा नद्यां विवादमिति चक्रतुः ॥ १२ ॥
एकोऽवोचन्मयैवेदं चारु रत्नमुपार्जितम ।
द्वितीयः स्माह मयका त्वं लोभं कुरुषे वृथा ॥ १३ ॥
इत्यन्योन्यं रुषाक्रान्तौ तौ युद्धाऽरुणलोचनौ ।
पतितौ निम्नगानीरे चार्तध्यानेन संस्थितौ ॥ १४ ॥
संजातौ पक्षिणावेतौ वनमध्ये ततोऽधुना ।
मिलितौ कलहायन्तौ मया भोः ! समधिष्ठितौ ॥ १५ ॥
इत्युक्त्वा निर्जरः सोऽथ जगाम त्रिदशालयम् ।
पप्रच्छुर्विस्मयापन्नाः सभ्या मेघरथं नृपम् ॥ १६ ॥
नृनाथ ! त्रिदशः कोऽयं येन यूयं निरागमः ।
विधाय बहुधा मायां पातिताः प्राणसंशये ? ॥ १७ ॥

ततो मेघरथो राजा जगाद यदि कौतुकम् ।
भवतामस्ति तत्सावधानाः शृणुत मद्वचः ॥ १८ ॥
इतो भवादतिक्रान्ते पञ्चमेऽहं भवेऽभवम् ।
अग्रजोऽनन्तवीर्यस्य बलदेवोऽपराजितः ॥ १९ ॥
तदाऽऽवयोरभूच्छत्रुर्दमितारिर्महाभुजः ।
अपहृत्य सुतां तस्य स आवाभ्यां निपातितः ॥ २० ॥
भ्रान्त्वा संसारकान्तारमिहैव भरतार्धके ।
अष्टापदगिरेर्मूले सोऽभवत्तापसात्मजः ॥ २१ ॥
कृत्वा बालतपो मृत्वा सुरूपाख्योऽमृताशनः ।
ईशानकल्पे जातोऽयं तदेन्द्रः प्रशशंस माम् ॥ २२ ॥
अश्रद्दधत्प्रशंसां तामिहायातस्ततः परम् ।
यज्जातं भवतां तद्धि प्रत्यक्षं सर्वमेव भोः ! ॥ २३ ॥
स्ववृत्तं देववृत्तं च तावाकर्ण्य विहायसौ ।
संजातजातिस्मरणौ स्ववाचैवं जजल्पतुः ॥ २४ ॥
इदं स्वचरितं स्वामिन् ! श्रुत्वा संवेग आवयोः ।
संजातोऽतिगुरुश्चित्ते यत् कर्तव्यं तदादिश ॥ २५ ॥
राज्ञोक्तं भोः ! सुदृष्टित्वं प्रतिपद्य महाशयौ ! ।
भावसारं विदधीथांऽनशनं पापनाशनम् ॥ २६ ॥
ततस्तौ विहितप्रायौ स्मृतपञ्चनमस्कृती ।
मृत्वा धन्यौ समुत्पन्नौ देवौ भुवनवासिषु ॥ २७ ॥
पौषधं पारयित्वा तं विधिना कृत्वा च पारणम् ।
भोगानभुङ्क्त भूयोऽपि राजा मेघरथः सुधीः ॥ २८ ॥

परीषहोपसर्गेभ्योऽभीतः संवेगवासितः।
सोऽन्यदाऽष्टमभक्तेन तस्थौ प्रतिमया स्थिरः॥ २९॥
अष्टाविंशतिलक्षाणां विमानानामधीशिना।
अत्रान्तरे भक्तिवशादीशानेन्द्रेण जल्पितम्॥ ३०॥
माहात्म्यनिर्जिताऽशेषत्रैलोक्य ! गतकल्मष !।
भविष्यदर्हते तुभ्यं महासत्त्व ! नमो नमः॥ ३१॥
तमाकर्ण्य समीपस्थाः पृच्छन्ति स्मेति तस्त्रियाः।
स्वामिन् ! कस्य नमस्कारो युष्माभिर्विहितोऽधुना ?॥३२॥
सोऽवदत् शृणु त्रैलोक्यसुन्दरि। क्षितिमण्डले।
नगर्यां पुण्डरीकिण्यां राजा मेघरथाभिधः॥ ३३॥
कृताष्टमतपःकर्मा स्थिरप्रतिमया स्थितः।
वर्तमानः शुभध्याने मया भक्त्या नमस्कृतः॥३४॥ (युग्मम्)
एवंविधशुभध्यानाद् धर्मे तल्लीनमानसम्।
शक्ताश्चालयितुं नैनं सेन्द्रा अपि दिवौकसः॥ ३५॥
इत्याकर्ण्य सुरूपातिरूपे तद्वल्लभे उभे।
क्षोभनार्थं नृपस्यास्य समीपे समपेयतुः॥ ३६॥
उत्कृष्टरूपलावण्यकान्तियुक्ते सविभ्रमे।
सुशृङ्गारे पुरो भूत्वा तस्यैवं ते अजल्पतुः॥ ३७॥
आवां देवाङ्गने स्वामिंस्त्वयि स्नेहविमोहिते।
इहायाते ततो वाञ्छां पूरय त्वं प्रियावयोः॥ ३८॥
विमुच्य त्रिदशाधीशं स्वाधीनं निजकं पतिम्।
आवामिहागते लुब्धे त्वद्रूपगुणयौवनैः॥ ३९॥

इत्यादिरागजननपेशलैर्वचनैस्तयोः ।
हावभावैश्च विविधैर्न लुब्धं तस्य मानसम् ॥ ४० ॥
अनुकूलोपसर्गांस्ते विधाय सकलां निशाम् ।
प्रशान्तविक्रिये प्रातरेवं संस्तुवतः स्म तम् ॥ ४१ ॥
सरागं हृदयं चक्रेऽरागेणापि त्वयाऽऽवयोः ।
अहो ! चित्तं न रक्तोऽसि प्रक्षिप्तोऽप्यत्र सुन्दर ! ॥ ४२ ॥
विलीयते नरो लोहमयोऽप्यस्मद्विचेष्टया ।
न स्तोकमपि ते धीर ! चचाल हृदयं तया ॥ ४३ ॥
क्षमयित्वाऽपराधं स्वं नमस्कृत्याथ तं नृपम् ।
कुर्वत्यौ तद्गुणश्लाघां जग्मतुस्ते निजाश्रयम् ॥ ४४ ॥
प्रतिमां पारयामास पौषधं च यथाविधि ।
राजा मेघरथः प्रातर्विदधे पारणं ततः ॥ ४५ ॥
अन्यदाऽऽस्थानमासीनः ससामन्तः स भूपतिः ।
उद्यानपालकेनैवं भणितो भक्तिपूर्वकम् ॥ ४६ ॥
स्वामिन् ! संवर्ध्यसे दिष्ट्या यदद्य नगरे तव ।
जनकः समवासार्षीज्जिनो घनरथः प्रभुः ॥ ४७ ॥
ततो दानं हिरण्यादि दत्त्वाऽस्मै पारितोषिकम् ।
कुमारसंयुतो राजा ययौ नन्तुं जिनेश्वरम् ॥ ४८ ॥
वन्दित्वा भगवन्तं तं शेषानपि तपोधनान् ।
निषसाद यथास्थानं भक्तिभावितमानसः ॥ ४९ ॥
अत्रान्तरे जिनः सर्वभाषानुगगिरा वराम् ।
जन्तूनां प्रतिबोधार्थं विदधे धर्मदेशनाम् ॥ ५० ॥

भो भव्याः! इह कर्तव्यौ जिनार्चननमस्कृती।
अपूर्वपाठश्रवणे चाऽप्रमादो निरन्तरम् ॥ ५१ ॥
पुण्यात्मा यो भवेज्जीवोऽप्रमत्तो धर्मकर्मणि।
तस्याऽऽपदपि सौख्याय शूरस्येव प्रजायते ॥ ५२ ॥
प्रस्तावेऽत्र गणधरो जिनं नत्वा व्यजिज्ञपत्।
प्रभो! कः शूरनामाऽसौ योऽप्रमत्तो ह्यपेऽभवत्? ॥ ५३ ॥
अथावादीज्जिनो भद्र! यदि ते श्रुतिकौतुकम्।
तदस्याख्यानकं सम्यग् कथ्यमानं मया शृणु ॥ ५४ ॥
अस्त्यस्य जम्बूद्वीपस्य मध्यखण्डे हि भारते।
क्षितिप्रतिष्ठितं नाम पुरं पुरगुणान्वितम् ॥ ५५ ॥
तं पुरं पालयामास शेषसामन्तवन्दितः।
लोकावनैककर्मिष्ठो वीरसेनाभिधो नृपः ॥ ५६ ॥
तस्यासीदुदारिणी देवी देवीव धरणीगता।
ददर्श साऽन्यदा स्वप्ने पुरो यान्तं सुरेश्वरम् ॥ ५७ ॥
पत्युः शशंस सा स्वप्नं सोऽवादीद्भविता सुतः।
चलेन्द्रदर्शनात्सोऽपि भावी किञ्चिच्चलाचलः ॥ ५८ ॥
जज्ञे च समये पुत्रोऽभिधानदिवसेऽस्य च।
देवराज इति नाम चक्रे स्वप्नानुसारतः ॥ ५९ ॥
तस्मिन् प्रवर्धमानेऽपि स्वप्ने राज्ञ्यन्यदैक्षत।
शशाङ्कोज्ज्वलं पुष्टदेहं निजोत्सङ्गगतं वृषम ॥ ६० ॥
तस्मिंश्च कथिते राज्ञा भणितं देवि! ते सुतः।
भविष्यति महाबाहू राज्यभारधुरन्धरः ॥ ६१ ॥

जातस्य समये तस्याप्यकारि जगतीभुजा ।
वत्सराज इति स्वप्नानुसारेणाभिधा वरा ॥ ६२ ॥
क्रमेण वर्धमानोऽसावष्टवर्षोऽखिलाः कलाः ।
अधीते स्म महाप्राज्ञः कलाचार्यस्य सन्निधौ ॥ ६३ ॥
अन्यदा ज्वरदाघादिरोगग्रस्तशरीरकः ।
आयुष्पर्यन्तकालत्वाद्बभूव पृथिवीपतिः ॥ ६४ ॥
दृष्ट्वा रोगार्दितं भूपं दुःखितोऽभूत् परिग्रहः ।
लोकाः सम्भूय सर्वेऽपि मन्त्रयाञ्चक्रिरे मिथः ॥ ६५ ॥
अयं हि वयसा ज्येष्ठो देवराजोऽस्ति यद्यपि ।
तथाऽपि हि गुणज्येष्ठो वत्सराजोऽस्त्वसौ नृपः ॥ ६६ ॥
जनवादममुं श्रुत्वा महालाच्यैकमन्त्रिणा ।
स्वीचक्रे देवराजेन सैन्यं वाजिगजादिकम् ॥ ६७ ॥
तं नियुक्तकृतं श्रुत्वाऽऽरवं किमिति भूपतिः ? ।
पप्रच्छ कथयामास सर्वं परिजनोऽस्य तत् ॥ ६८ ॥
ततश्च स जगादेवं व्याध्याधिभ्यां निपीडितः ।
अहो ! अयुक्तं विदधे कार्यमेतद्धि मन्त्रिणा ॥ ६९ ॥
वत्सराजकुमारोऽयं योग्यो राज्यस्य नापरः ।
परमेतदवस्थोऽहमशक्तः किं करोमि भोः ! ? ॥ ७० ॥
इत्युक्त्वा संस्थितः सोऽथ देवराजोऽभवन्नृपः ।
विना जनानुरागेण राज्यं पालयति स्म सः ॥ ७१ ॥
चकार वत्सराजोऽपि प्रणिपातादिसत्क्रियाम् ।
पितृवद्देवराजस्य स्वभावविनयान्वितः ॥ ७२ ॥

अनुरागपरं तस्मिन् विज्ञाय सकलं जनम्।
दध्यौ मन्त्री वर्धमानो राज्यमेष हरिष्यति ॥ ७३ ॥
तदस्मिन्नहिते स्वस्य नोपेक्षा युज्यते खलु।
कोमलोऽपि रिपुश्छेद्यो व्याधिवद् बुद्धिशालिना ॥ ७४ ॥
विचिन्त्येदमसौ मन्त्री ज्ञापयामास भूपतिम्।
सोऽवदन्ननु भो मन्त्रिन्! किमत्र क्रियतामिति? ॥ ७५ ॥
मन्त्र्यूचे वत्सराजोऽयं तिष्ठन्नत्र न ते हितः।
पुरान्निर्वास्यतां देव! तत्कनिष्ठोऽप्यनिष्टकृत् ॥ ७६ ॥
ततश्च देवराजेन भूभुजा भणितोऽनुजः।
गन्तव्यं त्वयकाऽन्यत्र मुक्त्वा मे विषयं पुनः ॥ ७७ ॥
भ्रातुराज्ञां गृहीत्वा तां जनन्याः स न्यवेदयत्।
तच्छ्रुत्वा दुःखिता माऽपि बभूवाश्रुमुखी क्षणात् ॥ ७८ ॥
ज्ञात्वा तां दुःखितां वत्सराजोऽवादीत्किमम्बिके (१)।
एवं खेदं करोषि त्वं देशाद्देशं व्रजाम्यहम् ॥ ७९ ॥
देवी प्रोवाच हे वत्स! यद्येवं त्वयका सह।
आगमिष्याम्यहमपि भगिन्या सहिता ध्रुवम् ॥ ८० ॥
वत्सराजोऽब्रवीन्मातः! स्थयमत्रैव हि त्वया।
यदन्यदेशो विषमो देवराजोऽपि ते सुतः ॥ ८१ ॥
जनन्यूचे त्वयैवाहं समेष्यामि वत्सक (१)।
नार्थो मे देवराजेन यस्तवाप्यपकारकृत् ॥ ८२ ॥

---

(१ ह पुत्र)।

ततश्च देवराजेन राज्ञोद्दालितवाहना ।
चचाल धारिणी पादचारिणी सह सूनुना ॥ ८३ ॥
स हन्तव्यो मयाऽवश्यं योऽनेन सह यास्यति ।
इत्युक्त्वा वारितः सर्वः परिवारस्तु भूभुजा ॥ ८४ ॥
ततश्चोच्छलितो लोकहाकारः सकले पुरे ।
स कोऽपि नाभवत्तत्र येन नो रुदितं तदा ॥ ८५ ॥
जजल्प च जनोऽद्यैतदनाथमभवत्पुरम् ।
सम्प्राप्तोऽद्यैव पञ्चत्वं वीरसेनो नरेश्वरः ॥ ८६ ॥
परित्यक्ता वयमहो ! यदनेन महात्मना ।
इति लोकवचः शृण्वन् पुराद्दक्षो विनिर्ययौ ॥ ८७ ॥
ततः शनैः शनैर्मात्रा मातृष्वस्रा च संयुतः ।
सोऽवन्तिदेशमध्यस्थामियायोज्जयिनीं पुरीम ॥ ८८ ॥
जितशत्रुनृपस्तस्यां यथार्थाख्यः पराक्रमी ।
बभूव कमलश्रीश्च तस्याग्रमहिषी वरा ॥ ८९ ॥
बहिष्पुर्यास्तरुच्छायां विश्रान्ता साऽथ धारिणी ।
चिन्तयामास हा दैव ! किमरे ! विहितं त्वया ? ॥ ९० ॥
भूत्वाऽपि वीरसेनस्य भूपतेः प्राणवल्लभा ।
हन्तेदृश्यां दुर्दशायां मसुता पतिता कथम् ? ॥ ९१ ॥
अथ तां समनुज्ञाप्य तत्स्वसा विमलाभिधा ।
प्रविवेश पुरीमध्ये वासस्थानविधित्सया ॥ ९२ ॥
सा त्रस्तहरिणीनेत्रा वीक्षमाणा पुरीजनम् ।
श्रेष्ठिनं सोमदत्ताख्यं ददर्शैकत्र मन्दिरे ॥ ९३ ॥

शान्तमूर्त्तिममुं दृष्ट्वा सोचे तात ! विदेशगा ।
अहं सङ्गिनी तस्याः सुतश्चेहागतास्त्रयः ॥ ९४ ॥
निवासस्थानकं किञ्चिच्चेत्त्वं दर्शयसे तदा ।
सन्तिष्ठामो वयं तत्र सुखेन तव निश्रया ॥ ९५ ॥
सोऽथापवरिकामेकां दर्शयित्वा जगाद ताम् ।
स्थेयमत्र परं त्वं मे भाटकं किं प्रदास्यसि ? ॥ ९६ ॥
विमलोवाच मे भद्र ! भाटकं नास्ति किञ्चन ।
[1]किन्त्वावां त्वद्गृहे कर्म करिष्यावोऽखिलं सदा ॥ ९७ ॥
भोजनं च त्वया देयमस्माकं श्रेष्ठिपुङ्गव ! ।
ईश्वराणां तृणेनापि कार्य्यं स्यात् किन्न देहिनाम् ? ॥९८॥
एवमस्त्विति तेनोक्ते धारिणी [2]सस्रुता च सा ।
तस्थौ तत्र गृहे तस्य चक्रतुः कर्म ते उभे ॥ ९९ ॥
धारिणीविमले कर्मकर्य्यौ ते वणिजो गृहे ।
अभूतामुदरस्यार्थे किं तदात्र विधीयते ? ॥ ४०० ॥
अन्यदा वणिजा तेन प्रोक्ते ते एष बालकः ।
किं करोत्युपविष्टः सन्नस्तु मे वत्सपालकः ? ॥ १ ॥
वत्सराजकुमारोऽथ वत्सरूपाणि तद्गृहे ।
विनीतो मातृवचसाऽचारयद्दैवयोगतः ॥ २ ॥
अन्यदा वत्सरूपाणि गृहीत्वाऽगाद्वनान्तरे ।
चरत्सु तेषु तत्राऽसौ विशश्राम क्षणान्तरम् ॥ ३ ॥

(1) ट किन्तु तव गृहे । (2) ट सस्रुतस्त्वसा ।

श्रुत्वैकत्र स्वरं राज्ञः पुत्राणां कुर्वतां श्रमम् ।
जगाम सोऽपि तत्राशु तदालोकनकौतुकी ॥ ४ ॥
तेषां मध्याद्यदा कोऽपि घाताद् भ्रश्येन्मनागपि ।
वत्सराजः समीपस्थस्तदा म्लानमुखोऽभवत् ॥ ५ ॥
घातो यदि पुनः स्थाने भवेत्तु तोषनिर्भरः ।
प्रहृष्टवदनस्यामुं प्राशंसत् साधु साध्विति ॥ ६ ॥
तद् दृष्ट्वा तत्कलाचार्य्यो दध्यौ कोऽप्येष कोविदः ।
बालोऽपि शस्त्रकर्माणि य एवं वेत्ति निश्चितम् ॥ ७ ॥
एवं पृष्टोऽमुना सोऽथ कुतो वत्स ! त्वमागतः ? ।
जगाद वत्सराजोऽपि तात ! वैदेशिकोऽस्म्यहम् ॥ ८ ॥
स पुनः स्माह भो भद्र ! कृत्वा प्रहरणं करे ।
आत्मनः शस्त्रकौशल्यं[१] त्वं मदग्रे प्रकाशय ॥ ९ ॥
विज्ञायावसरं सोऽपि तथा चक्रे महामतिः ।
तेषां योग्यं कुमाराणां तदा भक्तं समाययौ ॥ १० ॥
भोजितो वत्सराजोऽपि ततस्तैरात्मना सह ।
तत्कलाभ्याससन्तुष्टैर्गुणैः सर्वत्र पूज्यते ॥ ११ ॥
सोऽस्थात्तत्र दिनं सर्वं वत्सरूपाणि तानि तु ।
रक्षपालं विना गेहे सकालेऽपि समाययुः ॥ १२ ॥
एयुः सद्दिवसेऽप्यद्य किमेतानीति जल्पिते ? ।
श्रेष्ठिना विमलोवाच नाहं जानामि कारणम् ॥ १३ ॥

---

(१) क॰ ठ ल्यमथादपे ।

अमीषां रक्षको वत्सोऽप्यागतो न गृहे यतः ।
श्रेष्ठ्यूचे यदसौ बालो नाययौ तत्र [1]शोभनम् ॥ १४ ॥
प्रदोषसमये सोऽथ समायातो निजं गृहम् ।
लग्ना किमियती वेलेत्यूचे माता[2]ऽन्यया तथा ? ॥ १५ ॥
सोऽवदन्ननु हे मातः ! सुप्तोऽभूवमहं बहिः ।
केनापि बोधितो नैवाधुना जागरितः स्वयम् ॥ १६ ॥
एवं द्वितीयदिवसे तृतीयेऽपि व्यधादसौ ।
तर्णकेष्वागतेषूपालम्भं श्रेष्ठी ददौ तयोः ॥ १७ ॥
रुष्टाभ्यामथ ताभ्यां स भणितो वत्स ! किं तव ।
परदेशागतिः कर्मकरत्वं चैव विस्मृतम् ? ॥ १८ ॥
परवेश्मनिवासश्च तथा कष्टेन भोजनम् ।
यदेवं त्वमुपालम्भमानयस्यद्य बालक ! ॥ १९ ॥
वत्सराजोऽब्रवीन्मातर्वत्सरूपाणि न स्वयम् ।
कदाऽपि चारयिष्यामीत्याख्येयं वणिजोऽस्य हि ॥ २० ॥
तया चाख्यायि तत्तस्य वत्सराजोऽपि सर्वदा ।
तेषां पार्श्वे कुमाराणां यात्वा भुङ्क्ते स्म तत्र च ॥ २१ ॥
क्व गच्छसि सदैव त्वं भोजनं वा कथं तव ? ।
इति पृष्टोऽम्बयाऽन्येद्युर्वत्सस्तस्यै शशंस तत् ॥ २२ ॥
अश्रुप्रपातपूर्वं च तयैवं भणितस्ततः ।
कथं त्वमावयोः चिन्तां करोषि न हि पुत्रक ! ? ॥ २३ ॥

---

(१) ठ सुन्दरम् । (२) ठ तथाऽन्यया ।

अन्यच्च नावयोर्गेहे सन्त्येधांसि च नन्दन ! ।
पुरवासे यतः प्रायो दुष्प्रापं स्याज्जलेन्धनम् ॥ २४ ॥
सोऽब्रवीत् श्रेष्ठिनः पार्श्वाद्याचित्वा त्वं कुठारिकाम् ।
कावाकृतिं च हे अम्ब ! समर्पयसि मे यदि ॥ २५ ॥
ततोऽहमिन्धनं सारमानयामि वनान्तरात् ।
तयाऽथ तत्तथा चक्रे ययौ सोऽप्यटवीं प्रगे ॥ २६ ॥(युग्मम्)
पश्यमानाद्द्रुमांस्तत्र स दध्यौ यदि कञ्चन ।
पश्यामि प्रवरं वृक्षं तत् छित्त्वा तस्य दारुभिः ॥ २७ ॥
कुलदारिद्र्यवृक्षस्य च्छेदनं प्रकरोम्यहम् ।
अम्बायास्तद्भगिन्याश्च वाञ्छितं पूरयामि च ॥ २८ ॥
तत्रैका देवकुलिका तेनाथ ददृशे वरा ।
तदन्तर्यक्षराजश्च प्रत्यक्षो भक्तिशालिनाम् ॥ २९ ॥
तत्र दूरे समाघ्राय सुगन्धं स व्यचिन्तयत् ।
नूनमत्र वने क्वापि विद्यते चन्दनद्रुमः ॥ ३० ॥
सम्यग् निरीक्षमाणेन यतोऽसौ सर्पवेष्टितः ।
दृष्टोऽथ साहसेनैते परिक्षिप्ता महोरगाः ॥ ३१ ॥
पुरा यक्षवनमिति च्छिन्नो द्रुः स न केनचित् ।
चिच्छेद स तु तस्यैकशाखां साहससंयुतः ॥ ३२ ॥
विधाय काष्ठखण्डानि क्षिप्त्वा कावाकृतौ तथा ।
परितुष्टमनाः सोऽथ चचाल स्वगृहं प्रति ॥ ३३ ॥
नगर्या यावदासन्ने स समेतस्तदाऽन्तरा ।
जगामास्तं रविः पुर्या द्वाराणि पिहितानि च ॥ ३४ ॥

| Title | Rs. | As. |
|---|---|---|
| Markandēya Purāṇa, (English) Fasc. 1--9 @ 1/- each ... | Rs. 9 | 0 |
| *Markandeya Purana, Fasc. 5-7 @ /10/ each ... | 1 | 14 |
| *Mimāṁsā Darçana, Fasc. 10-19 @ /10/ each ... | 6 | 4 |
| Nyāyavārtika, Fasc. 1--6 @ /10/ each ... | 3 | 12 |
| *Nirukta, Vol. IV, Fasc. 1--8 @ /10/ each ... | 5 | 0 |
| *Nitisara, Fasc. 3-5 @ /10/ each ... | 1 | 14 |
| Nityācārapaddhatiḥ, Fasc. 1--7 @ /10/ each ... | 4 | 6 |
| Nityācārapradīpaḥ Vol. I. Fasc. 1--8 ; Vol. II, Fasc. 1-2. @ /10/ each ... | 6 | 4 |
| Nyayabinduṭīkā, Fasc. 1 @ /10/ each ... | 0 | 10 |
| *Nyāya Kusumāñjali Prakaraṇa Vol. I, Fasc. 2--6 ; Vol. II, Fasc. 1--3 @ /10/ each ... | 5 | 0 |
| Padumawati, Fasc. 1--5 @ 2/ ... | 10 | 0 |
| *Pariçista Parvan, Fasc. 3--5 @ /10/ each ... | 1 | 14 |
| Prākrita-Paingalam, Fasc. 1--7 @ /10/ each ... | 4 | 6 |
| Prithivirāj Rāsa. Part II, Fasc. 1--5 @ /10/ each ... | 3 | 2 |
| Ditto (English) Part II, Fasc. 1 @ 1/- ... | 1 | 0 |
| Prākrta Lakṣaṇam Fasc. 1 @ 1/8/ each ... | 1 | 8 |
| Parāçara Smṛti, Vol I, Fasc. 1--8 ; Vol. II, Fasc. 1--6 ; Vol III, Fasc. 1--6 @ /10/ each ... | 12 | 8 |
| Parāçara, Institutes of (English) @ 1/- each ... | 1 | 0 |
| Pariksamukha Sutram ... | 1 | 0 |
| Prabandhacintāmaṇi (English) Fasc. 1--3 @ 1/4/ each ... | 3 | 12 |
| Rasarnavam, Fasc. 1-2 ... | 2 | 8 |
| Saddarsana-Samuccaya, Fasc. 1-2 @ /10/ each ... | 1 | 4 |
| *Sāma Vēda Saṁhitā, Vols I, Fasc. 7--10 ; II, 1-6 ; III, 1--7 ; IV, 1--6 ; V, 1--8, @ /10/ each ... | 19 | 6 |
| Samaraieca Kaha Fasc. 1-2, @ /10/ ... | 1 | 4 |
| Sāṅkhya Sūtra Vṛtti, Fasc. 1-4 @ /10/ each ... | 2 | 8 |
| Ditto (English) Fasc 1-3 @ 1/- each ... | 3 | 0 |
| *Sankara Vijaya, Fasc. 2-3 @ /10/ each ... | 1 | 4 |
| Srāddha Kriyā Kaumudī, Fasc. 1-6 @ /10/ each ... | 3 | 12 |
| Sragdharā stotra ( Sanskrit and Tibetan ) ... | 2 | 0 |
| Srauta Sutra Latyayan, Fasc. 4-9 @ /10/ each ... | 3 | 12 |
| ,, ,, Asbalayana, Fasc. 4-11 @ /10/ each ... | 5 | 0 |
| Suçruta Saṁhita, (Eng ) Fasc 1 @ 1/- each ... | 1 | 0 |
| Suddhikaumudī, Fasc 1-4 @ /10/ each ... | 2 | 8 |
| *Taittreya Brahmana, Fasc 11-25 @ /10/ each ... | 9 | 6 |
| ,, Pratisakhya, Fasc 1-3 @ /10/ each ... | 1 | 14 |
| *Taitterīya Saṁhitā, Fasc 27-45 @ /10/ each ... | 11 | 14 |
| Tāṇḍya Brāhmaṇa, Fasc 10-19 @ /10/ each ... | 6 | 4 |
| Tantra Vārteka (English) Fasc. 1-6 @ 1/4/ each ... | 7 | 8 |
| Tattva Cintāmaṇi, Vol. I, Fasc 1-9, Vol II, Fasc 2-10, Vol III, Fasc 1-2, Vol. IV, Fasc. 1, Vol V, Fasc 1--5, Part IV, Vol II, Fasc. 1-12 @ /10/ each | 23 | 12 |
| Tattvārthadhigama Sutram, Fasc 1 3 @ /10/ each ... | 1 | 14 |
| Trikāṇḍa-Maṇḍanam, Fasc. 1-3 @ /10/ each ... | 1 | 14 |
| Tul'si Satsai, Fasc. 1--5 @ /10/ each ... | 3 | 2 |
| Upamita-bhava-prapañca-kathā, Fasc 1, 5 13 @ /10/ each ... | 6 | 4 |
| Uvāsagadasāo, (Text and English) Fasc. 1--6 @ 1/- each ... | 6 | 0 |
| Vallāla Carita, Fasc 1 @ /10/ ... | 0 | 10 |
| Varṣa Kriyā Kaumudī, Fasc 1--6 @ /10/ each ... | 3 | 12 |
| *Vāyu Purāṇa, Vol. I, Fasc. 3 -6 ; Vol. II, Fasc 1--7, @ /10/ each ... | 6 | 14 |
| Vidhāna Pārijata, Fasc 1-8 Vol. II Fasc. I @ /10/ each ... | 5 | 10 |
| Ditto Vol. II, Fasc 2-3 @ 1/4/ ... | 2 | 8 |
| Vivādaratnākara, Fasc 1--7 @ /10/ each ... | 4 | 6 |
| Vṛhat Svayambhū Purāṇa, Fasc 1--6 @ /10/ each ... | 3 | 12 |
| *Yoga Aphorisms of Patanjali, Fasc. 3-5 @ /10/ each ... | 1 | 14 |
| Yogasāstra of Hemchandra Vol. I. Fasc. 1-2 ... | 2 | 8 |

*Tibetan Series.*

| Title | Rs. | As. |
|---|---|---|
| Baudhyastotrasangraha, Vol. I ... | 2 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1--4 @ 1/- each ... | 4 | 0 |
| Nyayabindu of Dharmakirti, Fasc. 1 ... | 1 | 0 |
| Pag-Sam S'hi Ṭiñ, Fasc. 1--4 @ 1/- each ... | 4 | 0 |
| Rtogs *brjod dpag hkhri* S'iñ ( Tib & Sans Avadāna Kalpalatā ) Vol. I, Fasc. 1--6 ; Vol. II. Fasc. 1--5 @ 1/- each | 11 | 0 |
| Sher-Phyin, Vol. I, Fasc 1-5 ; Vol. II, Fasc. 1-3 ; Vol III, Fasc 1-6, @ 1/ each | 14 | 0 |

*Arabic and Persian Series.*

| Title | Rs. | As. |
|---|---|---|
| 'Ālamgirnāmah, with Index, (Text Fasc. 1--13 @ /10/ each ... | 8 | 2 |
| Al-Muqaddasi (English) Vol I. Fasc 1--3 @ 1/- each ... | 3 | 0 |
| Āin-i-Akbari, Fasc 1-22 @ 1/8/ each ... | 33 | 0 |
| Ditto (English) Vol. I, Fasc. 1--7, Vol. II, Fasc. 1--5, Vol. III, Fasc. 1--5, @ 2/- each ... | 34 | 0 |

[illegible] other Fasciculi of these works are out of stock and complete copies cannot

Arabic Bibliography, by Dr. A. Sprenger, @ /10/ ... 17
Bâdshâhnâmah, with Index, Fasc. 1-19 @ /10/ each ... 9
Conquest of Syria, Fasc. 1-9 @ /10/ each ... 11
Catalogue of Arabic Books and Manuscripts, 1-2 @ 1/- each ... 5
Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1--3 @ 1/ each ... 2 / 3
Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1-21 @ 1/8/ each ... 31
Farhang-i-Rashîdî, Fasc. 1-14 @ 1/8/ each ... 21
Fihrist-i-Tûsi. or, Tûsy's list of Shy'ah Books, Fasc. 1--4 @ 1/- each ... 4
Futûḥ-ush-Shâm of Wâqidî, Fasc 1--9 @ /10/ each ... 5
Ditto of Azdi, Fasc. 1--4 @ /10/ each ... 2
History of Gujarat ... 1
Haft Asmân, History of the Persian Masnawi, Fasc. 1 @ /12/ each ... 0
History of the Caliphs, (English) Fasc. 1--6 @ 1/4/ each ... 7
Iqbâlnâmah-i-Jahângirî, Fasc. 1--3 @ /10/ each ... 1
Iṣâbah, with Supplement, 51 Fasc. @ 1/- each ... 51
Ma'âṣir-i-'Âlamgîrî, Fasc 1--6 @ /10/ each ... 3
Maâṣir-ul-Umarâ, Vol. I, Fasc. 1--9, Vol. II, Fasc. 1--9; Vol. III, 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc. 10-12; Index to Vol. III, Fasc. 11-12 @ /1/ each ... 35
Maghâzi of Wâqidî, Fasc. 1--5 @ /10/ each ... 3
Muntakhabu-t-Tawârîkh, Fasc. 1--15 @ /10/ each ... 9
Ditto (English) Vol. I, Fasc. 1--7; Vol. II, Fasc. 1--5 and 3 Indexes; Vol. III, Fasc 1 @ 1/ each ... 16
Muntakhabu-l-Lubâb, Fasc. 1- 19 @ /10/ each ... 11
Nukhbatu-l-Fikr, Fasc. 1 @ /10/ ... 0
Niẓâmi's Khiradnâmah-i-Iskandari, Fasc. 1--2 @ /12/ each ... 1
Qawaninu 's-Sayyad of Khuda Yar Khan 'Abbasi, edited in the original Persian with English notes by Lieut. Col. D. C. Phillott
Riyâṣu-s-Salâtîn, Fasc. 1--5 @ /10/ each ... 5
Ditto (English) Fasc. 1--5 @ 1/ ... 3
Tabaquât-i-Nâṣirî, (English), Fasc. 1-14 @ 1/- each ... 5
Ditto Index ... 14
Târîkh-i-Fîrûz Shâhi of Ziyâu-d-dîn Barni Fasc. 1--7 @ /10/ each ... 1 / 4
Târîkh-i-Fîrûzshâhi, of Shams-i-Sirâj Aif, Fasc. 1--6 @ /10/ each ... 3
Ten Ancient Arabic Poems, Fasc. 1--2 @ 1/8/ each ... 3
Tuzuk-i-Jahângîrî, (Eng) Fasc. 1 @ 1/ ... 1
Wis-o-Râmin, Fasc. 1--5 @ /10/ each ... 3
Zafarnâmah, Vol. I, Fasc. 1--9, Vol. II, Fasc. 1--8 @ /10/ each ... 10

## ASIATIC SOCIETY'S PUBLICATIONS.

1. Asiatic Researches. Vols. XIX and XX @ 10/ each ... 20
2. Proceedings of the Asiatic Society from 1870 to 1904 @ /8/ per No.
3. Journal of the Asiatic Society for 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7), 1901 (7), 1902 (9), 1903 (8), 1904 (16), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members

*N. B.—The figures enclosed in brakets give the number of Nos. in each Volume.*

4. Journal and Proceedings, N. S., 1905, to date. (Nos. 1-4 of 1905 are out of stock), @ 1-8 per No. to Members and Rs. 2 per No. to Non-Members.
5. Memoirs, 1905, to date. Price varies from number to number. Discount of 25% to Members
6. Centenary Review of the Researches of the Society from 1784-1883 ... 3 0
7. Catalogue of the Library of the Asiatic Society, Bengal, Part I, A to E; Part 2, F to M ... 4 0
8. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts 1--III, with 8 coloured Plates, 4to. @ 6/ each ... 18 0
9. Kaçmiraçabdâmrta, Parts I & II @ 1/8/ ... 3
10. Persian Translation of Haji Baba of Ispahan, by Haji Shaikh Ahmad-i-Kirmani, and edited with notes by Major D. C. Phillott. ... 10 0

Notices of Sanskrit Manuscripts, Fasc. 1-34 @ 1/ each ... 34
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... 5

*N.B.*—All Cheques, Money Orders, &c. must be made payable to the "Treasurer Asiatic Society," only.

**Books are supplied by V. P. P.**

BIBLIOTHECA INDICA:

A COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, NO. 1298.

# श्रीशान्तिनाथचरित्रम् ।




# ÇRĪ ÇĀNTINĀTHA CARITRA,

OR A BIOGRAPHY OF ÇĀNTINĀTHA.

BY

ÇRĪ AJITA PRABHĀCĀRYA.

EDITED BY

UPADHYAYA ÇRI INDRAVIJAYA

DISCIPLE OF

ÇĀSTRA VIÇĀRADA JAINĀCĀRYA

ÇRĪ VIJAYA DHARMA SŪRI.

FASCICULUS IV.

Calcutta:

PRINTED BY UPENDRA NATHA CHAKRAVARTI, AT THE SANSKRIT PRESS,
No. 5, Nandakumar Chawdhury's 2nd Lane.

AND PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL, 1, PARK STREET.

1914.

THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL.

**No. 1, PARK STREET, CACUTTA,**

AND OBTAINABLE FROM

**THE SOCIETY'S AGENTS, MR. BERNARD QUARITCH, 11, GRAFTON STREET, NEW BOND STREET, LONDON, W., AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.**

*Complete copies of those works marked with an asterisk * cannot be supplied.—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

*Sanskrit Series*

| | | Rs. | |
|---|---|---|---|
| Advaitachintā Kaustubha, Fasc. 1-3 @ /10/ each ... | Rs. | 1 | 14 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-5; Vol. III, Fasc. 1-5, Vol. IV, Fasc. 1-8 @ /10/ each ... .. ... | | 14 | 6 |
| Aiterēya Lochana. ... ... ... .. | | 2 | 0 |
| Amarkosha, Fasc. 1 ... ... ... ... .. | | 2 | 0 |
| *Aṇu Bhāṣhya, Fasc. 2-5 @ /10/ each ... ... ... | | 2 | 8 |
| Anumana Didhiti Prasarini, Fasc. 1 @ /10/- .. .. | | 1 | 4 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1-6 @ /10/ each ... ... | | 3 | 12 |
| Atmatattaviveka, Fasc I. ... ... ... ... | | 0 | 10 |
| Açvavaidyaka, Fasc. 1-5 @ /10/ each .. ... ... ... | | 3 | 2 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1-10; Vol. II. Fasc. 1-10 @ 1/ each ... ... | | 20 | 0 |
| Bālam Bhaṭṭi, Vol. I, Fasc 1-2, Vol II, Fasc. 1 @ /10/ each ... ... | | 1 | 14 |
| Baudhāyana S'rauta Sūtra, Fasc. 1-3 Vol. II, Fasc 1-5 @ /10/ each ... | | 5 | 0 |
| Bhāsavritty ... ... .. ... | | 0 | 10 |
| Bhāṭṭa Dipikā Vol. I, Fasc 1-6; Vol. 2, Fasc. 1, @ /10 each ... | | 4 | 6 |
| Bauddhastotrasangraha ... ... ... .. ... | | 2 | 0 |
| Bṛhaddēvatā Fasc. 1-4 @ /10/ each ... ... ... .. | | 2 | 8 |
| Bṛhaddharma Purāṇa Fasc 1-6 @ /10/ each ... ... ... | | 3 | 12 |
| Bodhicaryāvatāra of Çāntideva, Fasc. 1-6 @ /10/ each .. ... | | 3 | 12 |
| Cri Cantinatha Charita, Fasc. 1-3 ... ... ... ... | | 1 | 14 |
| Çatadūṣaṇī, Fasc. 1-2 @ /10/ each ... ... ... | | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc 1-4 @ 2/ each ... ... | | 8 | 0 |
| Çatapatha Brāhmaṇa, Vol I, Fasc. 1-7, Vol II, Fasc. I-5, Vol. III, Fasc. 1-7 Vol. V, Fasc. 1-4 @ /10/ each .. ... . | | 14 | 6 |
| Ditto Vol VI, Fasc. 1-3 @ 1/4/ each ... .. | | 3 | 2 |
| Ditto Vol. VII, Fasc. 1-5 @ /10/ ... .. . | | 3 | 2 |
| Ditto Vol IX. Fasc 1-2 ... .. ... | | 1 | 4 |
| Çatasāhasrikā Prajñāpāramitā Part, I. Fasc I--17 @ /10/ each .. ... | | 10 | 10 |
| *Caturvarga Chintāmaṇi, Vol. II, Fasc. 1-25; Vol. III. Part I, Fasc 1-18. Part II, Fasc. 1-10 Vol IV. Fasc 1-6 @ /10, each ... | | 36 | 14 |
| Ditto Vol. IV, Fasc. 7-8, @ 1/4/ each .. .. | | 2 | 8 |
| Ditto Vol. IV, Fasc. 9-10 @ /10/ ... .. . | | 1 | 4 |
| Çlockavartika, (English) Fasc 1 7 @ 1/4/ each ... ... | | 8 | 12 |
| *Çrauta Sūtra of Çānkhāyana, Vol. I, Fasc 1-7; Vol. II, Fasc 1-4; Vol. III, Fasc. 1-4; Vol 4, Fasc. 1 @ /10/ each .. .. | | 10 | 0 |
| Çrī Bhāshyam, Fasc 1-3 @ /10/ each ... ... ... | | 1 | 14 |
| Dāna Kriyā Kaumudī, Fasc 1-2 @ /10/ each . . ... | | 1 | 4 |
| Gadadhara Paddhati Kālasāra Vol. I, Fasc 1-7 @ /10/ each ... ... | | 4 | 6 |
| Ditto Āchārasārah Vol II, Fasc. 1-4 @ /10/ each .. ... | | 3 | 2 |
| Gobhiliya Grihya Sutra, Vol I @ /10/ each ... ... | | 3 | 2 |
| Ditto Vol II. Fasc. -2 @ 1/4/ each ... ... | | 2 | 8 |
| Ditto (Appendix) Gobhila Parisista ... ... ... | | 2 | 0 |
| Ditto Grihya Sangraha ... ... ... ... | | 0 | 10 |
| Haralata ... ... .. ... ... | | 1 | 14 |
| Karmapradipā, Fasc. I ... ... ... . ... | | 1 | 4 |
| Kāla Viveka, Fasc. 1-7 @ /10/ each ... ... ... | | 4 | 6 |
| Kātantra, Fasc 1-6 @ /12/ each ... ... ... | | 4 | 8 |
| *Kūrma Purāṇa, Fasc. 8-9 @ /10/ each ... ... ... ... | | 5 | 10 |
| Kiranavali, Fasc. 1-2 @ /10/ each .. ... .. | | 1 | 4 |
| Madana Pārijāta, Fasc 1-11 @ /10/ each ... .. | | 6 | 14 |
| Mahā-bhāṣya-pradipōdyōta, Vol. I, Fasc 1-9; Vol. II, Fasc 1-12 Vol. III, Fasc. 1-10 @ /10/ each ... .. ... ... | | 19 | 6 |
| Ditto Vol IV, fasc. 1 @ /4 ... .. ... | | 2 | 8 |
| Manuṭikā Sangraha, Fasc. 1-3 @ /10/ each ... ... ... | | 1 | 14 |
| Mārkaṇḍēya Purāṇa, (English) Fasc. 1-9 @ 1/- each ... .. | | 9 | 0 |
| *Mimāṃsā Darçana, Fasc. 10-19 @ /10/ each ... ... | | 6 | 4 |
| *Mugdhabodha Vyakarana, Fasc. 1-4 @ /10/ each .. ... .. | | 2 | 8 |

तस्यां पुर्यामयं कल्पः शाकिनीनां भयेन यत् ।
उद्घाट्यन्ते गोपुराणि भानुमत्युदिते सति ॥ ३५ ॥
वत्सराजस्ततो दध्यौ पुर्यां बाह्यगृहेषु न ।
वसनीयं यतो गन्धः शक्यो रोढुं न चान्दनः ॥ ३६ ॥
क्व गम्येयं मया रात्रिः शीते पतति दारुणे ? ।
हुं ज्ञातं वा तत्र देवकुलिकायां व्रजाम्यहम् ॥ ३७ ॥
इति ध्यात्वा द्रुतं तत्र गत्वा चैकत्र पादपे ।
कावाकृतिं चावलम्ब्याऽविशद्देवकुलान्तरे ॥ ३८ ॥
तत्कपाटे पिधायाऽथ मुक्त्वा पार्श्वे कुठारिकाम् ।
तत्रैकदेशे सुष्वाप निर्भयो वीरसेनजः ॥ ३९ ॥
अत्रान्तरे च संजातं रात्रिमध्ये यदद्भुतम् ।
वत्सस्य तस्युषस्तत्र तदितः श्रूयतां जनाः ! ॥ ४० ॥
अतिरम्यविमानस्थो वैताढ्यवरपर्वतात् ।
समाययौ खेचरीणां सार्थोऽस्मिन् यक्षमन्दिरे ॥ ४१ ॥
विहितस्फारशृङ्गारा गीतनृत्यसमुद्यताः ।
तद्रङ्गमण्डपगता जल्पन्ति स्मेति ता मिथः ॥ ४२ ॥
चित्रलेखे ! प्रवीणे ! त्वं वीणां वादय सुन्दराम् ।
[1]हले ! मदनिके ! तालावादनं त्वं पुनः कुरु ॥ ४३ ॥
पटिष्ठे ! पटहं सज्जं विधेहि वेगवत् परम् ।
मृदङ्गमङ्ग प्रगुणं क्षिप्रं पवनिके ! तनु ॥ ४४ ॥

---

(१) क- ख ग हला।

गाय गान्धर्विके ! गीतं नृत्यं कुर्मो वयं यतः ।
पूरयामो निजां स्वेच्छामिह स्थाने ¹मनोरमे ॥ ४५ ॥
एवं वदन्त्यस्तास्तत्र क्रीडन्ति स्म यथासुखम् ।
हासतोषपरवशा महाविस्मयकारिकाः ॥ ४६ ॥
ततः स्वेदजलार्द्राणि मुक्त्वाऽऽदायाऽम्बराणि ताः ।
क्षणमेकं च विश्रम्य स्वस्थानं प्रस्थिताः पुनः ॥ ४७ ॥
वत्सराजकुमारोऽपि कुञ्चिकाविवरेण तत् ।
व्यलोकयत् कौतुकेन सर्वं तासां विचेष्टितम् ॥ ४८ ॥
तत्रैव विस्मृतं तासां भक्तिचित्रं सुकञ्चुकम् ।
ददर्श चैकं रत्नौघमण्डितं तं महाद्युतिम् ॥ ४९ ॥
अथोद्घाट्य कपाटे तं गृहीत्वा वरकञ्चुकम् ।
प्रविवेश झटित्येव पुनर्देवकुलान्तरे ॥ ५० ॥
मध्ये तासां खेचरीणां स्मृत्वोचेऽथ प्रभावती ।
महामूल्यो वारवाणस्तत्र मे विस्मृतो हला ! ॥ ५१ ॥
ततस्ताभिरभाणीयं वेगवत्या समन्विता ।
गत्वा त्वं सत्वरं तत्रानय तं निजकञ्चुकम् ॥ ५२ ॥
इत्युक्ता सा ययौ शीघ्रं स्थाने नैक्षिष्ट तत्र तम् ।
अजल्प च गतः क्वाऽयमियत्या सखि ! वेलया ॥ ५३ ॥
स्थानं निर्मानुषं चैतत् त्रियामा च त्रियामिता ।
ततः संभाव्यते नाऽस्य ग्राहकः कोऽपि निश्चितम् ॥ ५४ ॥

---

(१) क मनोहरे ।

वेगवत्यवदद्दूरं नीतो नूनं स वायुना ।
ततः प्रमादमुत्सृज्य निरीक्षावोऽत्र सर्वतः ॥ ५५ ॥
अथावलोकयन्तीभ्यां ताभ्यामेषा विहङ्गिका ।
दृष्टाऽवलम्बिता वृक्षेऽन्योन्यमेवमभाणि च ॥ ५६ ॥
अस्य देवकुलस्यान्तर्गूढः कोऽप्यस्ति पूरुषः ।
'कूर्पासहर्ता, तदमुं भीषयावः कथञ्चन ॥ ५७ ॥
इत्यूचतुश्च मध्यास्त्वमरे ! मानुष ! निस्सर ।
मुञ्च नौ कञ्चुकं नो चेद्धरिष्यावः शिरस्तव ॥ ५८ ॥
एवमुक्तोऽप्यसौ ताभ्यां क्षत्रियत्वाद् बिभाय न ।
उद्घाटयामासतुस्ते भिया यक्षस्य नागरी ॥ ५९ ॥
मन्त्रयाञ्चक्रतुश्चापसृत्य तं योऽत्र कश्चन ।
उषितोऽभिजनस्तस्य रुदिष्यति पुरान्तरे ॥ ६० ॥
तत्र गत्वा ततश्चावां जानीवोऽस्याभिधादिकम् ।
मन्त्रयित्वेति खेचर्यौ जग्मतुस्तत्र तं द्रुतम् ॥ ६१ ॥
धारिणीविमले तावन्महादुःखाभिपीडिते ।
मुहुर्विलपतः स्मैवं स्मारं स्मारं स्वनन्दनम् ॥ ६२ ॥
हा ! वीरसेनभूपालप्रसूत ! सुखलालित ! ।
वत्सराज ! कुमाराऽभूद्दशा कीदृशी तव ? ॥ ६३ ॥

(१) ड कञ्चुकहर्ता ।

राज्यापहार: प्रथमं देशान्तरगतिस्तत: ।
परवेश्मनिवासश्च तथा कष्टेन भोजनम् ॥ ६४ ॥
हा वत्स ! प्रेषितोऽस्यद्य त्वमिन्धनकृते कथम् ? ।
श्रावकाभ्यामधन्याभ्यां यदद्याऽपि समेषि न ॥ ६५ ॥
तच्छ्रुत्वा ज्ञातवृत्तान्ते ते खेचर्य्यावुपेयतु: ।
तत्र देवकुले मातृस्वरेणैवं जजल्पतु: ॥ ६६ ॥
त्वद्वियोगार्दिते आवामिहायाते कथञ्चन ।
हा वत्स ! राजवत्स ! त्वमात्मानं नौ प्रदर्शय ॥ ६७ ॥
सोऽथ दध्यौ जनन्योर्मे नाऽऽगतिर्घटतेऽधुना ।
तन्नूनमेते ते एव खेचर्य्यौ माययाऽऽवृते ॥ ६८ ॥
ध्यात्वेति प्रददौ धीमान् वाङ्मात्रमपि नैतयो: ।
उदिते च रवावेते खिन्ने स्वस्थानमीयतु: ॥ ६९ ॥
कुञ्चिकाविवरेणान्त:प्रविष्टा रविरोचिष: ।
विलोक्य निर्ययौ देवकुलमध्यात्कुठारिक: ॥ ७० ॥
कञ्चुकं स्थगयित्वा तं श्रीखण्डतरुकोटरे ।
कावाकृतिं गृहीत्वा च काष्ठं कृत्वा परं करे ॥ ७१ ॥
चचाल गेहाऽभिमुखं पुरद्वारगतोऽथ स: ।
चिक्षेप काष्ठखण्डं तत्प्रतोलीपालकस्य च ॥ ७२ ॥ (युग्मम्)
यात: परिमलस्तस्योच्छलति स्म स चान्दन: ।
ततोऽवलोकयामास दिङ्मुखान्यखिलो जन: ॥ ७३ ॥
कुत: स्फुरति गन्धोऽयमित्यन्योन्यं जजल्प च ? ।
तमेधोवाहक इति हेलया पश्यति स्म स: ॥ ७४ ॥

गत्वा स्वगेहे तन्मध्ये गोपयामास [1]सोऽथ तत् ।
आर्पयत् खण्डमेकं च निजमातृष्वसुः करे ॥ ७५ ॥
तया तदनुमत्या तद्विक्रीतं गन्धिकापणे ।
तन्मूल्यद्रव्यमानीय प्रचुरं चास्य दर्शितम् ॥ ७६ ॥
सोऽथ प्रोवाच हे अम्ब ! मा कार्षीः कर्म गर्हितम् ।
अस्मिंश्च निष्ठिते खण्डे विक्रेतव्यमथाऽपरम् ॥ ७७ ॥
दातव्यं श्रेष्ठिनो गेहभाटकं च यथोचितम् ।
विधेयं स्वं पराधीनं भवतीभ्यां न कस्यचित् ॥ ७८ ॥
अहं तु स्वेच्छयाऽवश्यं क्रीडिष्याम्यखिलं दिनम् ।
गेहेऽत्र शयितुं रात्रावागमिष्यामि सर्वदा ॥ ७९ ॥
इत्युदित्वा कुमाराणां समीपेऽथ ययावसौ ।
तैरूचे ह्यस्तनदिने न भ्रातः ! किमिहागतः ? ॥ ८० ॥
शरीरापाटवं किञ्चिन्ममासीदिति सोऽब्रवीत् ।
तेऽवदन् सदनं ते न विद्मोऽस्येमोऽन्यथाऽस्तिकम् ॥ ८१ ॥
जगाद तमुपाध्यायो वत्स ! ते कतमत् कुलम् ? ।
कस्तातो जननी का वा जन्मभूमिश्च का ननु ? ॥ ८२ ॥
भणति स्म कुमारोऽदस्तात ! मा पृच्छ सम्प्रति ।
प्रस्तावे तत्पुनः सर्वं कथयिष्यामि ते ध्रुवम् ॥ ८३ ॥
ज्ञात्वा तद्भावमाकारसंवरं चक्रिरेऽथ ते ।
कुमारा ददिरे चास्मै भोजनाच्छादनादिकम् ॥ ८४ ॥

---

[1] अ भ चोर्ऽपि ।

अथान्येद्युरुपाध्यायो गृहीत्वा तान् कुमारकान् ।
वत्सराजं [2]समाकार्य समीपे भूपतेर्ययौ ॥ ८५ ॥
प्रणिपातं विधायास्य निषेदुस्ते यथोचितम् ।
वत्सराजकुमारं च दृष्ट्वा पप्रच्छ तान्नृपः ॥ ८६ ॥
को नु वत्साः ! कुमारोऽयं दृश्यते युष्मदन्तिके ? ।
प्रतिपन्नसगर्भोऽयमस्माकमिति तेऽब्रुवन् ॥ ८७ ॥
ततः पृष्टोऽमुनाऽऽचार्यो भद्रायं कस्य नन्दनः ? ।
विज्ञानं कीदृशं वाऽस्येत्युक्तः सोऽवोचदञ्जसा ? ॥ ८८ ॥
राजन्नस्य कुमारस्य सम्यग् जानामि नान्वयम् ।
विज्ञानेन पुनः पृथ्व्यां तुल्यो नास्त्यस्य कश्चन ॥ ८९ ॥
अथो राज्ञः कुमारैस्तैः स्वविज्ञाने प्रदर्शिते ।
वत्सराजोऽपि तत्तस्य सविशेषमदर्शयत् ॥ ९० ॥
हृष्टो राजाऽवदद्वत्स ! शंस गोत्रं निजं मम ।
स्थगितानां मौक्तिकानां नार्घो विज्ञायते यतः ॥ ९१ ॥
विज्ञायाऽवसरं तेन सकलाऽपि निजा कथा ।
मूलादारभ्य निःशङ्कमाचचक्षेऽस्य सूनृता ॥ ९२ ॥
ततो राज्ञः समीपस्था कमलश्रीति वल्लभा ।
मातृष्वसा कुमारस्य तच्छ्रुत्वाचे ससम्भ्रमम् ॥ ९३ ॥
हे वत्स ! किमिहायातं धारिणीविमले अपि ? ।
आमेति भणिते तेन सोवाच जगतीपतिम् ॥ ९४ ॥

---

(२) ब. समाकार्य ।

प्राणेश ! मम यामी ते पूर्वजे तत्तवाज्ञया ।
मिलनाय तयोर्यामीत्युक्ते सा भणिताऽमुना ॥ ९५ ॥
याहि देवि ! भगिन्यौ ते कुमारेण समन्विते ।
इहानय यतस्तत्र वर्तेते ते सुदुःखिते ॥ ९६ ॥
करेणुकामारूढा परिवारसमन्विता ।
प्रतच्छताऽथ सा यावच्छ्रेष्ठिनः सदनं गता ॥ ९७ ॥
श्रेष्ठी ससम्भ्रमस्तावदुपचारमनेकशः ।
कर्तुं प्रवृत्तोऽलमिति तयैव हि निवारितः ॥९८॥ (युग्मम्)
धारिणीविमलानाम्नोस्तयोर्नत्वा क्रमानथ ।
कथयित्वाऽऽत्मनो वार्तां वत्सराजोऽभ्यधादिदम् ॥ ९९ ॥
इहाऽस्ति भूपतिर्योऽसौ युवयोर्भगिनीपतिः ।
संप्राप्ता भगिनी सा वा मिलनाय गृहाश्रिते ॥ ५०० ॥
जानीवोऽदः परं ह्यात्मा क्रिया वत्सक ! गोपितः ।
इत्युक्तवत्यौ ते हर्षाद् निःसृते मन्दिराद्बहिः ॥ १ ॥
करेणुकाया उत्तीर्य लगित्वा कण्ठकन्दले ।
भगिन्योः कमलश्रीः सा रुदत्येवमभाषत ॥ २ ॥
हा ! जाता दारुणावस्था युवयोः कथमीदृशी ? ।
दोषोऽथवा विधेरेव यत् सतां विपदागमः ॥ ३ ॥
इहागताभ्यामप्यात्मा युवाभ्यां किं निगूहितः ? ।
संप्राप्ते व्यसने दैवात् का त्रपा शुभकर्मणाम् ? ॥ ४ ॥
अथवाऽहमधन्यैव वसन्त्यौ नगरे निजे ।
समागते न यया ज्ञाते पुत्रस्ताम्भिते अपि ॥ ५ ॥

इदानीं किं बहुक्तेनाध्याकृष्य करिणीमिमाम् ।
आगच्छतं ममावासे युवां पुत्रसमन्विते ॥ ६ ॥
अथासौ भणितस्ताभ्यां श्रेष्ठी यत्किञ्चिदप्रियम् ।
आवाभ्यां त्वद्गृहस्थाभ्यां कृतं तत् क्षम्यतामिति ॥ ७ ॥
युवां वणिक्स्वभावेन यद्गृहे कर्म गर्हितम् ।
कारिते मर्षितव्यं तदित्यूचे सोऽपि ते प्रति ॥ ८ ॥
अन्योऽन्यं क्षमयित्वैवं वत्सराजसमन्विते ।
जग्मतुस्ते नृपावासे भगिन्या उपरोधतः ॥ ९ ॥
प्रासादमर्पयित्वैकं सामग्रीसंयुतं तयोः ।
ऊचे राजा कुमारं तं वत्स ! किं ते ददाम्यहम् ? ॥१०॥
सोऽवदन्नापरं याचे सेवां कर्तास्मि ते सदा ।
दिनावसाने गेहे तु प्रेषितव्यः स्वयं त्वया ॥ ११ ॥
प्रतिपन्नमिदं राज्ञा सेवां तस्य चकार सः ।
चक्रे च तद्गृहं सुस्थं [1]राजा धान्यादिवस्तुभिः ॥ १२ ॥
अन्यदा मेदिनीपालः कथमप्यविसृज्य तम् ।
सुप्तो वासगृहे तत्र यामिकैः परिवेष्टितम् ॥ १३ ॥
वत्सराजकुमारोऽपि खड्गव्यग्रकरो बहिः ।
तस्थौ वासगृहस्याऽस्य विनीतो वरभृत्यवत् ॥ १४ ॥
[2]निशीथसमये जाते शुश्राव करुणस्वरम् ।
कस्याश्चिदतिदुःखिन्याः कामिन्या रुदितं नृपः ॥ १५ ॥

---

(१) च अ राज्ञा ।
(२) ख च अ निशीथे गतनिद्रोऽथ ।

आभाषितास्ततस्तेन सर्वे प्राहरिका नराः ।
ते तु प्रमाददोषेण सुप्ता नो ददिरे वचः ॥ १६ ॥
वत्सराजोऽवदत् स्वामिन् ! कार्यमादिश्यतां मम ।
[1]राजोचे किं मया नाद्य विसृष्टोऽसि महाशय ! ॥ १७ ॥
आमेति भणिते तेन सोऽब्रवीदधुनाऽपि हि ।
विसृष्टोऽसि गृहं याहि प्रेष्यत्वं तव नोचितम् ॥ १८ ॥
सोऽवदत् त्वत्समादेशं कुर्वतः का मम त्रपा ? ।
अवश्यं तं करिष्यामि कार्यमादिश्यतां प्रभो ! ॥ १९ ॥
राजोचे तर्हि गत्वा त्वं पृष्ट्वा दुःखस्य कारणम् ।
[2]वत्सैनां कामिनीं दीनां रुदतीं प्रतिषेधय ॥ २० ॥
सोऽथ शब्दानुसारेण कृत्वा प्राकारलङ्घनम् ।
मध्यभागे श्मशानस्य ययौ सत्त्वसमन्वितः ॥ २१ ॥
तत्रैकदेशे सद्वस्त्रालङ्कारपरिशोभिताम् ।
विलोक्य[3] ललनामेकां रुदतीमित्यभाषत ॥ २२ ॥
का त्वं मुग्धे ! कथं चात्र श्मशाने हन्त ! रोदिषि ? ।
न चेद्गोप्यं तदाख्याहि निजं दुःखस्य कारणम् ॥ २३ ॥
साऽवोचच्चलितोऽसि त्वं यत्र तत्र प्रयाहि भोः ! ।
असमर्थतनोस्ते किमनया मम चिन्तया ? ॥ २४ ॥
वत्सोऽवादीद्दुःखिनीं त्वां दृष्ट्वा नो गन्तुमुत्सहे ।
भवन्ति साधवो यस्मात् परदुःखेन दुःखिताः ॥ २५ ॥

---

(१) ङ राजोचे ।
(२) ङ च वत्सेमां । (३) ख ङ ञ कयाचायवा- । ट-क्य लिषवक्ता ।

साऽऽख्यदेवंविधाः सन्तो यदि तद्भवतोऽत्र किम् ? ।
तदा तैलस्य किं मूढ ! चेत् सुगन्धं भवेद् घृतम् ? ॥ २६ ॥
जजल्प वत्सराजस्तु कथं कुपुरुषस्त्वया ।
ज्ञातोऽहं, साऽवदद्येन दृश्यसे बालकाकृतिः ॥ २७ ॥
स पुनः स्माह किं सूरो हन्ति बालोऽपि नो तमः ? ।
तुङ्गमातङ्गपूगं वा किं न हन्याद् हरिः शिशुः ? ॥ २८ ॥
किं वा चिन्तामणिः स्वल्पः कुर्यान्न सकलेप्सितम् ।
एवं मय्यपि बालोऽयमित्यनास्थां विधेहि मा ॥ २९ ॥
स्मित्वाऽभाषिष्ट साऽप्येवं तर्हि भोः ! शृणु कारणम् ।
अत्रैव पुरि वास्तव्योत्तमपुंसो गृहिण्यहम् ॥ ३० ॥
विनाऽपराधमेतेन भूभुजा स तु मे पतिः ।
शूलिकायामिहाऽऽरोपि वर्तमानोऽपि यौवने ॥ ३१ ॥
सर्वदा भोजनविधाविष्टा एते यतोऽभवन् ।
अहं प्रवेशमिच्छामि घृतपूरान् मुखेऽस्य तत् ॥ ३२ ॥
एतत् कर्तुमशक्ताऽहमयमुच्चतरो यतः ।
तेन रोदिमि भर्तारं स्मृत्वा भर्तारमात्मनः ॥ ३३ ॥
भणिता वत्सराजेन सुभ्रु ! स्कन्धेऽधिरुह्य मे ।
समीहितं विधेहि स्वमित्युक्त्वा सा तथाऽकरोत् ॥ ३४ ॥
चखाद मांसखण्डानि कर्तित्वा सा दुराशया ।
स्कन्धदेशे कुमारस्य खण्डमेकमथाऽपतत् ॥ ३५ ॥
किमेतदिति सञ्चिन्त्य यावदूर्ध्वमलोकयत् ।
तावत्तच्चेष्टितं तस्याः स ददर्श चुकोप च ॥ ३६ ॥

खड्गमाकृष्य रे रण्डे ! प्रचण्डे ! किं करोष्यदः ? ।
इत्युक्ता वत्सराजेन सोत्पपात नभस्तले ॥ ३७ ॥
सोत्पतन्ती परिधानचीवरे जगृहेऽमुना ।
तद्विमुच्य करे तस्य क्षणात् क्वाऽपि ययावसौ ॥ ३८ ॥
अत्रान्तरे घनरथं जिनं पप्रच्छ कश्चन ।
भगवन् ! कामिनी काऽसौ चक्रे कर्म किमीदृशम् ? ॥३९॥
भगवानप्यथोवाच सा पापा दुष्टदेवता ।
करोत्येवंविधं कर्म च्छलनार्थं नृणामहो ! ॥ ४० ॥
भूयः पृष्टोऽमुना स्वामी किं नु खादन्ति देवताः ।
मांसं, नेति जगादासौ क्रीडा तासामियं पुनः ॥ ४१ ॥
वत्सराजोऽथ तद्वस्त्रमादाय स्वगृहं गतः ।
तावच्छयितवान् यावदुदियाय दिवाकरः ॥ ४२ ॥
ततस्तद्वस्त्रमादाय राज्ञः पार्श्वं ययावसौ ।
प्रणिपातं विधायाऽस्य निषसाद यथास्थिति ॥ ४३ ॥
पृष्टोऽस्य रात्रिवृत्तान्तः प्रस्तावे जगतीभुजा ।
तेनाऽप्यस्य स निःशेषो यथा वृत्तो निवेदितः ॥ ४४ ॥
तद्देवतानिवसनमर्पितं च महीपतेः ।
वररत्नमण्डितं तु तद्दृष्ट्वा स विसिष्मिये ॥ ४५ ॥
राज्ञ्याः पार्श्वं निविष्टाया राज्ञा तद्वस्त्रमर्पितम् ।
तस्मिन् परिहिते तस्याः शोभते स्म न कञ्चुकः ॥ ४६ ॥
ततः सोचेऽमुना तुल्यो न कूर्पासः सुवाससा ।
यदि स्यादेष संयोगस्तदा प्राणेश ! सुन्दरम् ॥ ४७ ॥

ततो वृत्तान्तमाख्यायानीय तं वरकञ्चुकम् ।
वत्सराजकुमारोऽसावर्पयामास भूपतेः ॥ ४८ ॥
राजा समर्पयामास तं देव्याः साऽपि साञ्जसम् ।
सद्यः परिदधाति स्म प्रहृष्टवदनाम्बुजा ॥ ४९ ॥
तयोरननुरूपं चोत्तरीयं प्रेक्ष्य सा पुनः ।
कुरुते स्माऽधृतिं लोभो लाभे सति विवर्धते ॥ ५० ॥
राजा प्रोवाच हे देवि ! कञ्चुकेऽपि समर्पिते ।
किं त्वं श्याममुखी साऽथ स्वाऽभिप्रायं शशंस तम् ॥ ५१ ॥
तच्छ्रुत्वा भूपतिर्दध्यावसन्तुष्टा अहो ! स्त्रियः ।
तृप्यन्ति न कदाप्येता वस्त्रालङ्करणादिषु ॥ ५२ ॥
ऊचे च लोभं हे देवि ! मा विधेहि निरर्थकम् ।
वस्तुनोऽविद्यमानस्य कृते त्वमविवेकिनि ! ॥ ५३ ॥
प्रच्छादनं यदा लप्स्ये शाटिकाचोलयोः समम् ।
तदा भोक्ष्येऽहमित्युक्त्वा साऽविशत् कोपमन्दिरे ॥ ५४ ॥
ततो राज्ञा वत्सराजः प्रोक्तः साहसिक ! त्वया ।
दिव्यवस्त्रे समानीयाऽनर्थोऽयं विहितः खलु ॥ ५५ ॥
इमां मातृष्वसारं स्वां कथञ्चिदपि तोषय ।
त्वां विना नापरः कश्चिदस्य व्याधेश्चिकित्सकः ॥ ५६ ॥
प्रोक्ताऽपि तेन साऽमुञ्चत् स्त्रीस्वभावेन नाग्रहम् ।
ततो राज्ञः पुरश्चक्रे प्रतिज्ञेयं सुदुस्तरा ॥ ५७ ॥
देव्या समीहितं वस्त्रं षण्मासाऽभ्यन्तरे यदि ।
नानयामि ततो वह्नौ प्रविशामि न संशयः ॥ ५८ ॥

प्रोचेऽथ भूपतिर्भद्र ! प्रतिज्ञां मेदृशीं विधाः ।
सम्यक् कृतान्तपाशानां पातो न ज्ञायते यतः ॥ ५८ ॥
सोऽवदत् त्वत्प्रसादेन सर्वं साधु भविष्यति ।
किन्तु मां विसृज क्षिप्रं यामि देशान्तरं यतः ॥ ६० ॥
स्वहस्तगतताम्बूलं दत्त्वाऽसौ तेन साञ्जसम् ।
विसृष्टः स्वगृहे गत्वा जनन्योस्तं न्यवेदयत् ॥ ६१ ॥
अनिच्छन्त्यपि तच्चित्ते पुत्रापायाऽभिशङ्किनी ।
भूयात् ते विजयो वत्सेत्यूचे सा बुद्धिशालिनी ॥ ६२ ॥
किञ्चित्पाथेयमादायोपानद्गूढपदद्वयः ।
खड्गखेटकसंयुक्तो नगर्या निर्ययावसौ ॥ ६३ ॥
दक्षिणां दिशमाश्रित्य बहुग्रामपुराकुलाम् ।
पश्यन् वसुमतीमेकामाममादाटवीमसौ ॥ ६४ ॥
तुङ्गप्राकारमद्राक्षीत् तत्रैकं लघुपत्तनम् ।
विलोक्य विजनं तच्च वत्सराजो व्यचिन्तयत् ॥ ६५ ॥
किमिदं हन्त ! भूतानां पुरं वा यक्षरक्षसाम् ।
अनया चिन्तया किं वा प्रविश्यालोकयाम्यहम् ॥ ६६ ॥
प्रविशंश्च ददर्शासौ तन्मध्ये तुङ्गमन्दिरम् ।
तत्पार्श्वे लघुगेहानि ततस्तत्र विवेश सः ॥ ६७ ॥
दृष्टासनोपविष्टं च तत्रैकं पुरुषं वरम् ।
परिवारनरं तस्य वत्सः पप्रच्छ कञ्चन ॥ ६८ ॥
किंनामेदं पुरं भद्र ! किंनामाऽयं महीपतिः ।
सोऽवादीद् नगरं नैतद् न चायं पृथिवीपतिः ॥ ६८ ॥

किञ्चितो नातिदूरेऽस्ति पुरं भूतिलकाभिधम् ।
वैरिसिंहो नृपस्तत्र श्रेष्ठी दत्ताभिधस्तथा ॥ ७० ॥
श्रीदेवीनामधेयाया भार्यायाः कुक्षिसम्भवा ।
रूपलावण्यसंयुक्ता श्रीदत्ता तस्य नन्दिनी ॥ ७१ ॥
साऽभवद् यौवनप्राप्ता दोषग्रस्तशरीरका ।
तस्याः प्राहरिको रात्रौ यो भवेद् म्रियते हि सः ॥ ७२ ॥
यदि प्राहरिको नास्या भवेत् तत्सम पूरुषाः ।
विपद्यन्ते, ततो राज्ञा स श्रेष्ठ्येवं प्रजल्पितः ॥ ७३ ॥
श्रेष्ठिन् ! त्वं नगरं मुक्त्वा गच्छाटव्यां ममाज्ञया ।
त्वत्सुतादोषजनितः किल लोकक्षयोऽस्तु मा ॥ ७४ ॥
सोऽयं श्रेष्ठी समेतोऽत्र स्वपरीवारसंयुतः ।
चक्रे च चौररक्षार्थं सप्राकारमिदं गृहम् ॥ ७५ ॥
अनेन गोलकाबद्धाः कृता यामिकपूरुषाः ।
प्रभूतधनलोभेन ते च सन्त्यस्य सन्निधौ ॥ ७६ ॥
तेषां मध्यादथैकैको म्रियते च दिने दिने ।
तान् मुक्त्वा नापरः कश्चिदिह स्थाने वसत्यहो ! ॥ ७७ ॥
ततस्त्वमपि हे पान्थ ! याह्यन्यत्र बिभेषि चेत् ।
इति श्रुत्वा कुमारोऽपि ययौ दत्तस्य सन्निधौ ॥ ७८ ॥
दत्तोऽप्यासनमेतस्मै ससम्भ्रममदापयत् ।
ततस्तत्रोपविष्टाय ताम्बूलं प्रददौ स्वयम् ॥ ७९ ॥
पृच्छति स्मादरेणैवं वत्स ! त्वं कुत आगतः ? ।
सोऽथावादीदुज्जयिन्याः कारणेनाऽहमागतः ॥ ८० ॥

एवं यावज्जजल्पाऽसौ कुमारः श्रेष्ठिना सह।
तत्रैकस्तावदायातः पुमान् शृङ्गारशोभितः॥ ८१॥

विमनस्कममुं दृष्ट्वा कुमारः श्रेष्ठिनं प्रति।
जगाद किमयं तात! विच्छायो दृश्यते पुमान्?॥ ८२॥

ततो दीर्घं विनिःश्वस्य श्रेष्ठ्यावे तव सुन्दर!।
अत्यन्तगोपनीयोऽपि वृत्तान्तोऽयं [1]निवेद्यते॥ ८३॥

अस्ति मे तनया तस्या रात्रौ यो यामिको भवेत्।
अतिप्रचण्डदोषेण सोऽवश्यं वत्स! हन्यते॥ ८४॥

बभूव पुरुषस्याऽस्य यामिकत्वेऽद्य वारकः।
तेनाऽयं विमना [2]मृत्योः कस्य वा न भयं भवेत्?॥ ८५॥

वत्सराजस्ततोऽवादीत् तिष्ठत्वेष यथासुखम्।
अहमद्य भविष्यामि तस्याः प्राहरिको निशि॥ ८६॥

श्रेष्ठी जगाद वत्स! त्वमद्य प्राघुणको मम।
भुक्तं च न त्वया किञ्चित् किमङ्गीकुरुषे मृतिम्?॥ ८७॥

वत्सराजोऽवदत् तात! कार्यमेतन्मया [3]ध्रुवम्।
परोपकाररसिकैर्यदिदं पठ्यते बुधैः॥ ८८॥

कृतोपकारः सर्वोऽपि करोत्युपकृतिं जनः।
विनोपकारं यस्त्राता विपदः, सोऽत्र सज्जनः॥ ८९॥

आवासस्योपरितनभूमौ सोऽथ कुमारकः।
आरोहति स्म यत्रासीत् श्रीदत्तश्रेष्ठिनः सुता॥ ९०॥

(१) अ निगद्यते। (२) ख ङ अ द मृत्यौ।
(३) अ -ठनम।

साऽपि दध्यौ विलोक्यैनमहो ! रूपमहो ! प्रभा ।
शरीरं पुरुषस्याऽस्य किं तद्यन्न मनोहरम् ॥ ९१ ॥
हा दैव ! निर्मिताऽहं तु नारी मारीव किं त्वया ।
ईदृग्मनुष्यरत्नानां जीवितान्तविधायिनी ॥ ९२ ॥
तदासन्नस्थशय्यायामासीनोऽथ महामतिः ।
आललाप कुमारस्तां मधुरालापपण्डितः ॥ ९३ ॥
तथा कथञ्चित्तेनेयं रञ्जिताऽचिन्तयद्यथा ।
आत्मानमपि हत्वाऽहं रक्षाम्येतस्य जीवितम् ॥ ९४ ॥
एवं विचिन्तयन्ती सा तत्क्षणायातनिद्रया ।
जीवितार्थमिवैतस्य बभूव गतचेतना ॥ ९५ ॥
कुमारोऽथ गवाक्षेणोत्तीर्याऽधो भूमिकागतम् ।
काष्ठमेकमुपादाय तेनैवाऽऽरोहति स्म सः ॥ ९६ ॥
काष्ठं निवेश्य शय्यायां विकोशतरवारियुक् ।
तस्थौ दीपस्य च्छायायामीक्षमाणो दिशोऽखिलाः ॥ ९७ ॥
[1]वातायनविवरेणाऽन्तरे मुखमेककम् ।
प्रविशन्तमसौ दृष्ट्वाऽप्रमत्तोऽभूद्विशेषतः ॥ ९८ ॥
मुखेन तेन तस्मिंस्तु वासगेहे निरीक्षिते ।
प्रविवेश ततो हस्तः समुद्रालङ्कृताङ्गुलिः ॥ ९९ ॥
सौवर्णवलयाभ्यां स मण्डितश्च तदेकतः ।
निर्ययौ फूत्कृतो धूमस्तेन व्याप्तं च तद् गृहम् ॥ १०० ॥

---

(१) ख घ ग ङ कुमारोऽथ गवाक्षेणा- ।

प्रविश्य स करो यावत् शय्यां पस्पर्श यामिकीम्।
जघान वत्सराजोऽपि तं तावन्निशितासिना॥ १॥
देवतायाः प्रभावेण स हस्तो नाऽपतद्भुवि।
पपात चौषधिद्वन्द्वं वेदनार्त्तात्ततः क्षणात्॥ २॥
धूमौषधीसंरोहिण्यौ कुमारः सोऽग्रहीदिमे।
देवतायाः करः सोऽथ निर्ययौ वासमन्दिरात्॥ ३॥
वत्स! हा वञ्चितास्मीति शब्दं श्रुत्वाथ दैवतम्।
हे दासि! कुत्र यासीति जल्पंस्तां किञ्चिदन्वगात्॥ ४॥
ततस्तोऽग्रेरोगणखड्गं तं दृष्ट्वा पुण्येन संयुतम्।
देवता नश्यति स्मास्याऽपकारं कर्त्तुमक्षमा॥ ५॥
वलित्वा वत्सराजोऽपि काष्ठमुत्सार्य तल्पतः।
तत्र यावदुपाविक्षत्तमो तावत् क्षयं ययौ॥ ६॥
सूरोऽपि तस्य शूरस्य प्रतापमिव वीक्षितुम्।
तूर्णमारोहति स्मोच्चैरुदयाचलमूर्धनि॥ ७॥
अत्रान्तरे [1]कुमारी सा जजागार ददर्श च।
कुमारमक्षताङ्गं तं ततो हृष्टा व्यचिन्तयत्॥ ८॥
नूनं कोऽपि प्रभावोऽस्य पुंरत्नस्य भविष्यति।
यदयं संस्थितो नो मेऽथवा भाग्यानि जाग्रति॥ ९॥
यद्यसौ मम भर्ता स्याद्भोगान् भुञ्जे तदा ध्रुवम्।
अन्यथा विषयाणां मे निवृत्तिरिह जन्मनि॥ १०॥

---

(1) सा ज कुमारं तं दृष्ट्वा तल्पगतं तदा।
साऽत्यन्तं विस्मयपरा प्रहृष्टैवं व्यचिन्तयत्॥ ८॥

विचिन्त्यैवमभाषिष्ट सा पिकी मधुरस्वरा ।
कथं त्वं व्यसनान्नाथ ! मुक्तोऽसीति निवेदय ? ॥ ११ ॥
तेनापि कथितं तस्यै रात्रिवृत्तं यथातथम् ।
तच्छ्रुत्वा जातरोमाञ्चकञ्चुका सा मुदं दधौ ॥ १२ ॥
इति संलापपरयोस्तयोर्दासी समागता ।
तस्या मुखक्षालनार्थं जलमादाय निर्मलम् ॥ १३ ॥
कुमारमक्षताङ्गं सा दृष्ट्वा हर्षेण पूरिता ।
श्रेष्ठिनं वर्धयामास तत्क्षेमकथया द्रुतम् ॥ १४ ॥
स्खलद्गतिप्रचारोऽथ दत्तः श्रेष्ठी ससम्भ्रमः ।
तयोः समीपमायातो हर्षास्रैः पूरितेक्षणः ॥ १५ ॥
श्रीदत्ताऽपि समुत्थाय ददौ तस्मै शुभासनम् ।
सोऽपि तत्र समासीनः कुमारं समभाषत ॥ १६ ॥
कथं वीर ! त्वया रात्रौ निस्तीर्णो व्यसनार्णवः ।
कुमारेणाऽपि सर्वोऽपि वृत्तान्तोऽस्य निवेदितः ॥ १७ ॥
स ऊचे ते मया दत्ता पुत्रीयं प्राणवल्लभा ।
कल्प इत्यन्यथा लब्धा स्वयमेव त्वया गुणैः ॥ १८ ॥
कुमारोऽवोचदज्ञातकुलस्य मम कन्यकाम् ।
कथं ददासि, श्रेष्ठ्याचे ज्ञातं तव गुणैः कुलम् ॥ १९ ॥
पुनरुक्तं कुमारेण कारणेन गरीयसा ।
गन्तव्यमस्ति मे दूरं करिष्ये वलितस्त्विदम् ॥ २० ॥
इमां परिणयेदानीं पश्चाद्गच्छेर्यथारुचि ।
इत्युक्ते श्रेष्ठिना भूयोऽङ्गीकृतं तेन तद्वचः ॥ २१ ॥

तस्मिन्नेव दिने श्रेष्ठी पाणिग्रहणमेतयोः ।
अकारयन्निशामेकामुषितोऽसौ तया सह ॥ २२ ॥
द्वितीयेऽहनि गत्यर्थमापृष्टा तेन साऽवदत् ।
हे कान्त ! किं न जानासि स्वरूपं रागिणामदः ॥ २३ ॥
विरहो वसन्तमासो नवस्नेहो नवं वयः ।
पञ्चमस्य ध्वनिश्चेति सह्याः पञ्चाग्नयः कथम् ? ॥ २४ ॥
वत्सोऽवादीत् कुरङ्गाक्षि ! यामि देशान्तरं न चेत् ।
तन्मे वह्निप्रवेशः स्यादित्यर्थे नास्ति संशयः ॥ २५ ॥
माऽवोचद्देणिदण्डोऽयं त्वत्पुरो विहितो मया ।
स्थास्याम्यत्र शरीरेण हृदैष्यामि त्वया सह ॥ २६ ॥
कुङ्कुमं कज्जलं चैव कुसुमाभरणानि च ।
लगिष्यन्ति शरीरे मे त्वयि कान्त ! समागते ॥ २७ ॥
इत्थं कृतप्रतिज्ञां तां मुक्त्वा सोऽश्रुमुखीं प्रियाम् ।
श्रेष्ठिनं समनुज्ञाप्य वत्सराजोऽग्रतोऽचलत् ॥ २८ ॥
ददर्शाऽग्रेऽटवीमध्ये पल्लीं भिल्लसमाकुलाम् ।
बहूंश्च पर्वतांस्तुङ्गान् रम्याश्च गिरिनिम्नगाः ॥ २९ ॥
असावेवंविधाऽटव्यां स्थाने चैकत्र सुन्दरे ।
पश्यति स्म पुरीमेकामभ्रंलिहगृहाश्चिताम् ॥ ३० ॥
बहिः सरोवरं तस्याः प्रक्षाल्य चरणानने ।
कृत्वा पर्यस्तिकां सेतावुपविष्टस्तरोस्तले ॥ ३१ ॥
नारीसार्थेन पानीयमुह्यमानं ददर्श सः ।
पप्रच्छ चैकां तन्मध्यात् कथं पूः कोऽत्र भूपतिः ? ॥ ३२ ॥

साऽवदत् पूरियं भद्र! कृता व्यन्तरजातिभिः ।
देवताभिः क्रीडनार्थं नान्यः कोऽप्यत्र भूपतिः ॥ ३३ ॥
वत्सराजः पुनः प्रोचे तर्ह्येतत्प्रचुरं जलम् ।
किमर्थमुह्यते भद्रे ! ततश्चैवं शशंस सा ॥ ३४ ॥
याऽस्माकं स्वामिनी देवी स्थाने क्वापि गता सती ।
पुंसा केनाऽपि सा बाह्वोः प्रहृता पीडिता ततः ॥ ३५ ॥
एतत्पीडानिरासार्थं जलसेको विधीयते ।
तेनेदमुह्यते नीरं सा त्वयाऽपि न शाम्यति ॥ ३६ ॥
अङ्गपीडापहारे किं नेश्वरी देवताप्यहो ! ।
पृष्टेति वत्सराजेन पुनरेवं जगाद सा ॥ ३७ ॥
प्रहारदायकस्याङ्गरक्षिका देवताधिका ।
तत्प्रभावेण नैतस्या वेदनोपशमो भवेत् ॥ ३८ ॥
औषधीद्वितयं चास्याः करेऽभूत् सप्रभावकम् ।
दत्तमत्यन्ततुष्टेन व्यन्तरेन्द्रेण यत्किल ॥ ३९ ॥
धूमेन मोहयत्येकाऽपरा घातार्तिनाशिनी ।
ते पुनः पतिते तत्र यत्र खड्गेन ताडिता ॥ ४० ॥
वत्सराजस्ततोऽवादीन्मानुषो भिषगस्म्यहम् ।
मह्यं ददातु सा किं नु वेदनां शमयामि चेत् ? ॥ ४१ ॥
सा स्माह लभसे तत् त्वं ध्रुवं यद्भद्र ! याचसे ।
तिष्ठ तावत् परं यावत् स्वामिन्याः कथयाम्यदः ॥ ४२ ॥
ततो गत्वा तयाऽऽचख्ये तत्तस्यै सापि तत्क्षणात् ।
तं तयाऽऽनाययामास सापि तस्मै शशंस च ॥ ४३ ॥

प्रसन्नास्या यदा भद्र ! स्वामिनी मार्गयेस्तदा ।
प्रासादस्योपरितनभूमिस्थं कन्यकायुगम् ॥ ४४ ॥
अश्वरूपं तथा यक्षं पर्यङ्कं कामितप्रदम् ।
एवं करिष्यामीत्युक्त्वा स ययौ देवतान्तिकम् ॥ ४५ ॥
दत्तासनोपविष्टोऽसौ तया प्रोक्तः सगौरवम् ।
जानासि वैद्यकं चेत्त्वं भद्र ! पीडां[2] निवारय ॥ ४६ ॥
विधाय वत्सराजोऽथ [3]वाचा वैद्यकविस्तरम् ।
धूमौषध्या महाधूममहरत्तान्यया व्यथाम् ॥ ४७ ॥
वेदनाऽपहृता यावद्रुजा जाता पुनर्नवा ।
तावत् प्रोचे तया भद्र ! घातदाता त्वमेव मे ॥ ४८ ॥
ओमिति भणिते तेन साऽवादीत्तोषनिर्भरा ।
याचस्व स्वेच्छया भद्र ! तुष्टाहं साहसेन ते ॥ ४९ ॥
ततश्च याचितं तेन तत्कन्यायुगलं वरम् ।
यक्षस्तुरङ्गरूपस्तु पर्यङ्कः कामितप्रदः ॥ ५० ॥
सञ्जातो गृहभेदोऽयमिति ध्यात्वा जजल्प सा ।
दत्तमेतत् परं त्वस्य शृणूत्पत्तिं त्वमादितः ॥ ५१ ॥
आसीच्चमरचञ्चायां पुर्यां वैताढ्यपर्वते ।
गन्धवाहगतिर्नाम्ना विद्याधरनरेश्वरः ॥ ५२ ॥

---

(१) ख ग तामुवाचानयाक्षाय सा नयन्ती अगादतम् ।
दास्यति यदि ते तुष्टा स्वामिनी मार्गयेस्तदा ॥ ४३ ॥
(२) ग पराकुरु । क ग द हरायु तम ।
(३) ख ग धान्वन्तरैर्वयोभिः ।

सुवेगामदनवेगे तस्याऽभूतामुभे प्रिये ।
रत्नचूलास्वर्णचूले तयोश्च क्रमजे सुते ॥ ५३ ॥
विवाहचिन्तया पुत्र्योराकुलस्यान्यदा गृहे ।
[1]खेचरेन्द्रस्य तस्याऽगादेको विद्याधरो मुनिः ॥ ५४ ॥
आसयित्वाऽऽसने रम्ये नमस्कृत्य च भक्तितः ।
पृष्टस्तेन मुनिः पुत्र्योर्भर्त्ता कोऽत्र भविष्यति ? ॥ ५५ ॥
आचख्यौ ज्ञानवानेष वत्सराजो नृपात्मजः ।
भविष्यत्यनयोर्भर्त्ता गुणवान् भूमिगोचरः ॥ ५६ ॥
न तु त्वत्सन्निधौ भावि पाणिग्रहणमेतयोः ।
मासशेषं महाराज ! तवायुर्वर्तते यतः ॥ ५७ ॥
तर्हि किं कार्यमित्युक्ते भूभुजा सोऽवदत् पुनः ।
शृणु राजन् ! कुमारोऽसौ भावी भर्त्ता यथाऽनयोः ॥ ५८ ॥
आसीत्त्वद्भगिनी पूर्वं भूमिगोचरभूपतेः ।
पित्रा शूराऽभिधानस्य या दत्ता सख्युरात्मनः ॥ ५९ ॥
[2]तस्या चाभूच्छुभाकाराऽपरा [3]कान्ता नृपात्मजा ।
तस्यां प्रेमप्रकर्षोऽस्याऽनिष्टा सा भगिनी तव ॥ ६० ॥
सा विद्वेषं गता तस्यां कृत्वा बालतपो मृता ।
समुत्पन्नास्ति हे राजन् ! व्यन्तरी देवता वरा ॥ ६१ ॥

---

(१) ख ज राज्ञा तस्य समायातः कश्चिज्ज्ञानी महामुनिः ।
(२) ज ह तस्या जन्मान्तरस्नेहसम्बद्धाऽस्याऽपि गेहिनी ।
अभूत्तदनुरक्तस्याऽनिष्टा सा भगिनी तव ॥ ६० ॥
(३) ज कामिनी ।

तस्याः सपत्नी सा कृत्वा धर्मदानादिकं वरम् ।
मृत्वा च श्रेष्ठिनः पुत्री सञ्जाता दत्तसंज्ञिनः ॥ ६२ ॥
पूर्वमत्सरिणी देवी सा तस्या यामिकं नरम् ।
छद्मव्याऽपि ततस्तत्र वर्तते पुरुषत्रयः ॥ ६३ ॥
देवतायास्तदेतस्या राजन् ! पुत्र्यौ समर्पय ।
तत्पार्श्वे स्थितयोर्भर्त्ता समेष्यत्यनयोः स्वयम् ॥ ६४ ॥
क्रियमाणं देवताया तं निवार्य नरत्रयम् ।
परिणेष्यति तां वत्सराजः श्रेष्ठिसुतामपि ॥ ६५ ॥
इति सर्वं समाख्याय ययौ सोऽन्यत्र संयतः ।
खेचरेन्द्रेण पुत्र्यौ मे तेनेहैत्य समर्पिते ॥ ६६ ॥
सोऽथ किञ्चित्तपः कृत्वा मृत्वाऽभूद् व्यन्तराधिपः ।
तेनाऽश्वरूपभृद्यक्षः किंकरो मे समर्पितः ॥ ६७ ॥
सर्वकामितपर्यङ्कश्चौषधिद्वितयं तथा ।
तत्सर्वमपि ते भद्र ! प्रदत्तं तुष्टया मया ॥ ६८ ॥
परिणीते ततश्चैते वत्सराजेन कन्यके ।
बुभुजे च समं ताभ्यां तत्र भोगानसौ स्थितः ॥ ६९ ॥
अन्यदा रत्नचूलास्वर्णचूले निजे प्रिये ।
ज्ञापिते वत्सराजेन प्रतिज्ञाकारणं निजम् ॥ ७० ॥
ताभ्यां च ज्ञापिता देवी सा च विज्ञाय कारणम् ।
व्यसृजत् प्रेयसीयुक्तं तद्वियोगाऽसहाऽपि तम् ॥ ७१ ॥
ततः पर्यङ्कमारुह्य वत्सराजः सवल्लभः ।
आययौ नभसा शीघ्रं श्रीदत्तावासमन्दिरम् ॥ ७२ ॥

सुप्तोत्थिता प्रभातेऽथ श्रेष्ठिपुत्री ददर्श तम् ।
पर्यङ्कं तं तुरङ्गं च किमेतदिति विस्मिता ? ॥ ७३ ॥
दध्यौ च हेतुना केन पर्यङ्कोऽयमिहागतः ।
कथं वाऽयं समारूढो वाजी सप्तमभूमिकाम् ॥ ७४ ॥
सम्यग्विलोकयामास यावत्तावद्ददर्श सा ।
शय्यागतं निजं कान्तं कान्ताद्वयसमन्वितम् ॥ ७५ ॥
ततो हर्षपूरिताऽङ्गी गत्वा तातस्य सन्निधौ ।
माख्यद्देहोपरितनभूमौ मत्पतिराऽऽगतः ॥ ७६ ॥
श्रेष्ठ्यूचे समभूद्वत्से ! कथमेवं तदागतिः ? ।
ततः शय्याऽवलोकादिवार्त्ताऽऽचख्ये तयाऽखिला ॥ ७७ ॥
अत्यद्भुतं तदाऽऽकर्ण्य सोऽगात्तत्र ससम्भ्रमः ।
उत्थाय वत्सराजोऽथ सप्रियः प्रणनाम तम् ॥ ७८ ॥
पृष्टोऽथ श्रेष्ठिना वत्सः स्ववृत्तान्तं न्यवेदयत् ।
विस्मितस्तच्चरित्रेण शिरो धूनयति स्म सः ॥ ७९ ॥
तद्दिनं समतिक्रम्याऽनुज्ञाप्य श्रेष्ठिनं ततः ।
निजस्थानं स सम्प्राप्तः शय्यामारुह्य सप्रियः ॥ ८० ॥
कुर्वत्यौ पुत्रशय्यायाः सदा नीराजनाविधिम् ।
धारिणीविमले तस्यां तथास्थं तमपश्यताम् ॥ ८१ ॥
अपनीय ततो वस्त्रं दृष्ट्वा पुत्रं च सप्रियम् ।
किञ्चिद् व्रीडशङ्कया तस्याऽपक्रान्ते ते शनैः शनैः ॥ ८२ ॥
क्षणान्तरेण संप्राप्ते ते विलोक्य समुत्थितः ।
नमश्चक्रे तयोः पादान् वत्सराजः प्रियान्वितः ॥ ८३ ॥

कथयामास वार्त्तां च निजां विस्मयकारिणीम्।
उत्तरीयं ययाचे च[1] पर्यङ्कं सार्वकामिकम्॥ ८४॥
गत्वा च भूपतेः पार्श्वे विधाय च नमस्कृतिम्।
तद्वस्त्रमर्पयामास तत्पत्न्याः कमलश्रियः॥ ८५॥
चिरायुर्वत्स! भूयास्त्वमित्यूचे सा प्रमोदिनी?।
चक्रे राजाऽपि सत्कारमेतस्याऽऽभरणादिभिः॥ ८६॥
कुत्र चौरं त्वया प्राप्तं क्व वा भ्रान्तोऽसि सुन्दर!?।
पप्रच्छ चेति भूपालो वत्सराजं सविस्मयः॥ ८७॥
पर्यङ्कतुरगलाभं विना वार्त्तां निजामसौ।
राज्ञो न्यवेदयद्वस्त्रं दत्तं देवतयेति च॥ ८८॥
अथान्येद्युः कमलश्रीः परलोकमियाय सा।
तद्वियोगे नरेन्द्रोऽसौ महाशोकाकुलोऽभवत्॥ ८९॥
वत्सराजोऽभ्यधाद् राजन्! अनित्याऽखिलवास्तवे।
भवे विवेकिनां शोकः कर्तुं क्वाऽपि न युज्यते॥ ९०॥
सर्वज्ञभिषगादिष्टं कोष्ठशुद्धिविधायिकम्।
शोकाविशरुजः शान्त्यै कार्यं धर्मौषधं बुधैः॥ ९१॥
इत्यादिवचनैस्तस्य परिषिक्तोऽमृतैरिव।
सच्छायः सुमनोवांश्चाऽशोकोऽभूत् स महीपतिः॥ ९२॥
वत्सोऽथ मन्त्रयामास प्रेयसीभिः सहान्यदा।
स्वगृहे भोजयाम्यद्य भूपं वः प्रतिभाति चेत्॥ ९३॥

[1] क-ख-ज-ट-च।

ताभिः प्रोचे न ते युक्तं नृपस्याऽऽनयनं गृहे ।
देहि तत्रैव तत्तस्मै दित्साऽस्ति यदि हे प्रिय ! ॥ ९४ ॥
सोऽवदद्गौरवं कान्ताः ! भवेन्नैवं कृते मति ।
यदीहानीयते राजा तन्मे भवति निर्वृतिः ॥ ९५ ॥
जगदुः पुनरप्येता यद्ययं निश्चयस्तव ।
तदाऽऽनय नृपं तस्य दर्शनीया वयं न तु ॥ ९६ ॥
ततोऽसौ सपरीवारं गत्वा भूपं न्यमन्त्रयत् ।
भोजनायोपरोधेन तस्य मेने नृपोऽपि तत् ॥ ९७ ॥
निमन्त्र्य पार्थिवं वत्सराजः प्राप्तो निजं गृहम् ।
वल्लभाभिः सहाक्रीडत् तत्रोपरितनावनौ ॥ ९८ ॥
कियान् रसवतीपाको वर्त्ततेऽस्य निकेतने ।
इति ज्ञातुं प्रतीहारं प्रैषीत्तत्र महीपतिः ॥ ९९ ॥
प्रतीहारोऽपि तद्गेहे गत्वा यावदलोकयत् ।
तावद्रसवतीपाकं तत्र कञ्चिद् ददर्श न ॥ १०० ॥
तेनाऽऽगत्य महीभर्तुस्तदाचख्ये ततोऽपरम् ।
नरं संप्रेषयामास तदोत्तणकृते नृपः ॥ १ ॥
धान्यपाकादिसामग्रीं तद्गृहेऽन्यगृहेषु च ।
अदृष्ट्वाऽकथयत् सोऽपि तत्सर्वं जगतीपतेः ॥ २ ॥
भोजनावसरे वत्सराजोऽभ्येत्य महीपतिम् ।
भोक्तुमाऽऽकारयामास राजाऽप्येवमभाषत ॥ ३ ॥
उपहासपदं किं नु वयं वर्त्तामहे तव ? ।
विनाऽपि येन सामग्रीमाकारयसि नो गृहे ॥ ४ ॥

वत्सराजोऽवदद् देव ! पूज्योऽसि मम सर्वथा ।
स्वामिन्नुपहासपदमित्यादेशं ददासि किम् ? ॥ ५ ॥
रमवत्यस्ति नो वेति का ते चिन्ता महीपते ! ।
मय्यप्यसम्भावनां त्वं किं विभावयसि प्रभो ! ? ॥ ६ ॥
तद्वाक्योत्साहितो राजा स्वपरीवारसंयुतः ।
तद्वेश्मनि गतोऽपश्यत्तत्र रम्यं जनाश्रयम् ॥ ७ ॥
तं दृष्ट्वाऽचिन्तयच्चैवमस्य वृत्तमलौकिकम् ।
येनायं मण्डपश्चाकरधुनैव विनिर्मितः ॥ ८ ॥
यथायोग्यं कल्पितेषु तत्र रम्याऽऽसनेषु ते ।
निर्दिष्टेष्वमुनैवाऽथ निषेदुः पार्थिवादयः ॥ ९ ॥
स्वर्णरूप्यरत्नमयान्युरुस्थालानि तत्क्षणात् ।
ढौकितानि पुरस्तेषां वत्सराजस्य मानुषैः ॥ १० ॥
दत्ता कल्पद्रुमेणैव दिव्या रमवती तदा ।
सुगालिभक्तप्रमुखा मनोज्ञा परिवेषिता ॥ ११ ॥
सुस्निग्धमधुरास्वादा मोदकाः सिंहकेसराः ।
मण्डकाः खाद्यकादीनि पक्वान्नान्यपराणि च ॥ १२ ॥
रसानामग्रिमं मद्यस्तापितं शुभगन्धयुक् ।
भोजनस्य विधेः सारं प्रक्षिप्तं प्रचुरं घृतम् ॥ १३ ॥
लपनश्रीघृतपूरगोरसव्यञ्जनादिका ।
रमवत्यऽखिला तत्र व्यापृताऽतिमनोहरा ॥ १४ ॥
भुञ्जानेऽथ महीपाले वत्सराजो व्यचिन्तयत् ।
उत्सवः सकलोऽप्येष विना पत्नीं न शोभते ॥ १५ ॥

एवं विचिन्त्य भणितास्तेनेदं निजवल्लभाः ।
प्रकटीभूय भूभर्त्तुर्गौरवं कुरुताऽनघाः ! ॥ १६ ॥
यद्दर्शयति नो यस्य हितं नाऽऽर्यसुतस्य तत् ।
एवं मिथो वदन्त्यस्तास्तदादेशं वितेनिरे ॥ १७ ॥
रत्नचूला-स्वर्णचूला-श्रीदत्तानां मनोहरम् ।
रूपं दृष्ट्वा महीपालो जज्ञे कामवशंवदः ॥ १८ ॥
दध्यौ च धन्य एवाऽयं यस्यैताः प्रवरा गृहाः ।
विष्टपत्रितयस्याऽपि वर्णिनीवर्णिका इव ॥ १९ ॥
भोजनोर्द्धं सुताम्बूलवस्त्राद्यैः परिपूजितः ।
भूपतिः सपरीवारोऽप्याययौ निजवेश्मनि ॥ २० ॥
तत्राऽप्यरतिमापन्नस्तासां सङ्गमलालसः ।
स्वकार्यसाधनोपायं सोऽपृच्छद् मन्त्रिमण्डलम् ॥ २१ ॥
आलोच्य मन्त्रिणोऽप्येवं शशंसुः पृथिवीपतेः ।
जीवत्यदो वत्सराजे कार्यं राजन् ! न सेत्स्यति ॥ २२ ॥
ततः केनाऽप्युपायेन वत्सोऽयं देव ! हन्यते ।
सोऽब्रवीदिति कृत्वाऽपि कार्यं मम समीहितम् ॥ २३ ॥
अन्येद्युर्मारणार्थं स सिंहस्य जगतीपतेः ।
स्थाने निवेशितोऽमात्यैर्महाराजस्य संसदि ॥ २४ ॥
कुमारो यावदास्थानादभीतः स निरीयिवान् ।
अमुं व्यापादयेत्युक्तस्तावत्सिंहो नियोगिभिः ॥ २५ ॥
सिंहोऽपि निजगादैनं सिंहद्वाराद्विनिर्गतः ।
अतिधृष्टोपविष्टोऽसि किमरे ! मम विष्टरे ? ॥ २६ ॥

युद्धायोपस्थितः सोऽथ कुमारेण महौजसा ।
क्षिप्तो दूरेण परितो भ्रमयित्वा शिरो निजम् ॥ २७ ॥
वत्सस्य वाञ्छिते मृत्यौ सिंहस्यैव बभूव सः ।
चिन्त्यते यत्परस्येह गृहमायाति तद् ध्रुवम् ॥ २८ ॥
सहसैव हते तस्मिंस्तत्सैन्यं हतशक्तिकम् ।
भूपतिशरणं प्राप को बिभेति न घातकात् ॥ २९ ॥
प्रियाभ्यां खेचरीभ्यां स वत्सः प्रोक्तो गृहागतः ।
अस्मद्विद्याप्रभावेन नाथ ! सिंहो हतस्त्वया ॥ ३० ॥
अनर्थोऽयं कृतो राज्ञा करिष्यत्यपरं च सः ।
गृहप्राप्तस्य तस्यार्य ! यत्त्वया दर्शिता वयम् ॥ ३१ ॥
मन्त्रिभिः सममालोच्य भूभुजा सोऽपरेद्यवि ।
व्याघ्रीदुग्धेन नः कार्यं किञ्चिदस्तीति जल्पितः ॥ ३२ ॥
अन्यच्च त्वयि सख्यौ मे नास्ति किञ्चित् सुदुर्लभम् ।
लक्ष्म्यः सुलभास्तस्य यस्य मित्रं महोदधिः ॥ ३३ ॥
आदाय भर्त्तुरादेशं स स्वगेहमुपागतः ।
अन्तश्चिन्ताभरम्लानमुखो दारैर्निरीक्षितः ॥ ३४ ॥
उक्तश्च नाथ ! सम्प्राप्ते नृपादेशे महोपते ।
किं त्वं चिन्तातुरो येन चलत्स्नेहा भवन्त्यमी ॥ ३५ ॥
कथं यूयमदो वित्थेत्युदिते तेन ताः पुनः ।
जगदुर्यत्त्वया सार्धं चरामोऽन्तरिताः सदा ॥ ३६ ॥
दैवताश्वं समारुह्य याहि भीमाटवीं प्रिय ! ।
अस्मन्मातुर्दैवतायाः सखो तत्राऽस्ति देवता ॥ ३७ ॥

तुरङ्गः सा विलोक्यैनं त्वां त्रासयति ततश्च ताम् ।
व्याघ्रीरूपां समानीय महीभर्तुः समर्पयेः ॥ ३८ ॥
इत्यादिष्टः स्वपत्नीभिर्गत्वा तत्र क्रमेण सः ।
व्याघ्रीरूपां देवतां तां कर्णे धृत्वा समानयत् ॥ ३९ ॥
ऊचे च नवसूतेयं गृह्यतां दुह्यतां नृप ! ।
क्रियतां चेप्सितं स्वस्येत्युक्त्वा कर्णान्मुमोच ताम् ॥ ४० ॥
ततः सा व्यन्तरी व्याघ्री तदानयनधीप्रदान् ।
मन्त्रिणो भक्षयामास ततो भीतोऽवदन्नृपः ॥ ४१ ॥
हा वत्स ! वत्स ! मा कार्षीः कर्म हिंस्रं त्वमीदृशम् ।
गृहाणेमां जनं यावत् क्षयं नयति नाखिलम् ॥ ४२ ॥
स्वगृहे वत्सराजोऽथ कर्णे धृत्वा निनाय ताम् ।
गाढाभ्यर्थनया राज्ञः सर्वपौरजनस्य च ॥ ४३ ॥
पत्नीभिरर्चिता तस्य स्थित्वा तत्र क्षणान्तरम् ।
विसृष्टा वत्सराजेन निजं स्थानमियाय सा ॥ ४४ ॥
पुनरन्येद्युरुर्वीशस्तत्पत्नीसङ्गमस्पृहः ।
उपदेशादमात्यानां वत्सराजमदोऽवदत् ॥ ४५ ॥
स्थानात् कुतोऽपि भो भद्र ! जम्पनीरं[1] समानय ।
येन मे जायते देहं बहुरोगविवर्जितम् ॥ ४६ ॥
इदं क्वास्तीति तेनोक्ते कथितं तस्य मन्त्रिभिः ।
विन्ध्याटव्यां द्वयोरद्र्योर्मध्यकूपेऽस्ति तज्जलम् ॥ ४७ ॥

---

(१) अ त्व- ।

कुरुतः सर्वदाऽप्येतौ सङ्गमापगमौ गिरौ ।
मीलनोन्मीलने नित्यं स्वभावेनैव लोचने ॥ ४८ ॥
प्रविश्य त्वं मिलित्वापञ्चान्तयोरन्तरे तयोः ।
शीघ्रमेवातिदक्षत्वाद् भद्र ! पानीयमानयेः ॥ ४९ ॥
तमप्यादेशमादाय वत्सराजो गतो गृहे ।
कथयामास पत्नीनामुपायनिचयोक्तसाम् ॥ ५० ॥
ताभिः प्रोचेऽश्वमारुह्य गच्छ त्वं तत्र हे प्रिय ! ।
सखी नोऽस्ति शकुनिकारूपभृद्देवता वरा ॥ ५१ ॥
ततस्तत्र जगामाऽसौ ज्ञात्वा शकुनिकाऽपि तम् ।
पूरयित्वाऽम्बुनालाबु तस्य हस्ते समार्पयत् ॥ ५२ ॥
स्वपुरीं स समागत्य नृपस्याम्बु तदार्पयत् ।
देवतायाः प्रभावेण जजल्पैवं तदुच्चकैः ॥ ५३ ॥
राजंस्त्वामथवामात्यान् प्रधानं वा परं नरम् ।
तव दुर्बुद्धिदातारं कमहं भक्षयाम्यहो ! ॥ ५४ ॥
इति नीरवचः श्रुत्वोपविष्टो नृपपर्षदि ।
विसिस्मिये जनोऽपूर्णकामो मन्त्री च पार्थिवः ॥ ५५ ॥
कृत्वा तथाऽपि वदनविकारं सोऽब्रवीदहो ! ।
असाध्यं किञ्चनाऽप्यस्य विद्यते नावनीतले ॥ ५६ ॥
विसृज्यैनं गृहे सोऽथाऽमन्त्रयन्मन्त्रिभिः सह ।
अस्य व्यापादनोपायः कोऽप्यन्यः सूत्र्यतामिति ॥ ५७ ॥
आलोच्य मन्त्रिणः प्रोचुः चत्वारः पृथिवीपतिम् ।
देव ! श्रीसुन्दरीकन्याविवाहव्यपदेशतः ॥ ५८ ॥

कारयित्वा यमगृहं दक्षिणस्यां पुरो दिशि ।
वत्स: प्रवेश्यतां तत्र निमन्त्रणकृते हरे: ॥ ५९ ॥ ( युग्मम् )
साधु साध्विति राजा तान् प्रशंसत्ते च दक्षिणे ।
दिग्भागे कारयन्ति स्म गर्तामिन्धनपूरिताम् ॥ ६० ॥
ज्वालयित्वा च तत्राग्निं ज्ञापयन्ति स्म ते नृपम् ।
राजाऽप्याज्ञापयामास भटान् यमनिमन्त्रणे ॥ ६१ ॥
कार्ये तस्मिन्ननिष्पद्यमानेऽन्यैर्जगतीभुजा ।
आदिष्टो वत्सराजोऽथ तदप्यङ्गीचकार स: ॥ ६२ ॥
दर्शयन्तीभिरस्नेहं कृतघ्नत्वं च भूपते: ।
भार्याभिर्भणितोऽप्येष कार्यात्र व्यरमत्तदा ॥ ६३ ॥
गोपयित्वा गृहे कान्तं तद्रूप: सोऽथ किङ्कर: ।
यक्षस्ताभि: समादिष्टो गत: सोऽपि नृपान्तिकम् ॥ ६४ ॥
मासेन त्वमिहागच्छेरित्यादिष्टो नृपेण स: ।
तस्य पश्यत एवाऽथ प्रविवेश हुताशने ॥ ६५ ॥
वत्सराज: प्रविष्टोऽग्नावित्यशेषपुरीजन: ।
प्राविशत् स्पर्धयेवास्य तीव्रशोकहुताशने ॥ ६६ ॥
जगाद च नरेन्द्रोऽयमहो ! निर्दयमानस: ।
येनानेकगुणस्थानं कुमारोऽयं निपातित: ॥ ६७ ॥
कुमारशोकनिद्रायां सुप्ते सत्यखिले जने ।
बभूव मुदितो राजा निशायामिव कौशिक: ॥ ६८ ॥
सोऽवीचन्मन्त्रिणो हंहो ! पत्न्योऽस्यानीयतामिह ।
तेऽवदन् विद्यतेऽस्मेऽपि विरक्ता त्वां प्रति प्रजा ॥ ६९ ॥

एवं कृते विशेषेण विरागं त्वयि यास्यति ।
विना जनानुरागं हि न सम्पदपि भाविनी ॥ ७० ॥
मासं यावत् प्रतीक्षस्व ततस्त्वमपि भूपते ! ।
उत्तालानां न पच्यन्ते उदुम्बरफलानि यत् ॥ ७१ ॥
गते मासे कुमारस्य प्रिया आनयितुं पुनः ।
आदिष्टा मन्त्रिणो राज्ञा चत्वारश्चतुरोक्तयः ॥ ७२ ॥
इतः कुमारपत्नीभ्यां देवीभूतो निजः पिता ।
यक्षं संप्रेष्य पातालादाहूतो व्यन्तरेश्वरः ॥ ७३ ॥
तस्याभरणसन्दोहैर्भूषितोऽथ पतिर्निजः ।
तेनाग्रगामिना प्रैषि वाज्यारूढो नृपान्तिकम् ॥ ७४ ॥
तं दृष्ट्वा भूपतिर्दध्यौ व्यलीकं विहितं खलु ।
अमुना वीरपुरुषेणेदं किल सुभाषितम् ॥ ७५ ॥
पुनर्दिवा पुना रात्रिः पुनः सूर्यः पुनः शशी ।
पुनः संजायते सर्वं न कोऽप्येति पुनर्मृतः ॥ ७६ ॥
पप्रच्छ चैवं किं वत्स ! क्षेमवान् वर्तते यमः ? ।
सोऽवदत् कुशली देव ! कालोऽस्ति भवतः सखा ॥ ७७ ॥
ममाप्राक्षीदमावेवं बहुकालात् स्मृतोऽस्मि किम् ।
वत्सराज ! त्वदीशेन वर्तमानोऽपि मोहहृत् ? ॥ ७८ ॥
तव भृत्योऽप्यहं तेन[1] भक्त्या गौरवितः प्रभो ! ।
इदं मदङ्गलग्नं यत्तद्दत्तं भूषणं वरम् ॥ ७९ ॥

---

(१) ङ ज -नातीवगौ- ।

भवतां प्रत्ययार्थं च द्वाःस्थोऽयं प्रेषितोऽमुना ।
दृष्टाऽनिमिषनेत्रं तं सत्यं मेने नृपोऽपि तत् ॥ ८० ॥
व्यन्तरेन्द्रोऽप्युवाचैवं प्रोक्तं दण्डधरेण यत् ।
मम पार्श्वे सदा राजन् ! प्रेषितव्या नरा निजाः ॥ ८१ ॥
इन्द्रादेशेन नास्माकमस्तीहागमनं नृप ! ।
मिलनाय ततो मित्र ! त्वयाऽऽगम्यं कथञ्चन ॥ ८२ ॥
इत्युक्ते राजलोकास्ते तत्र गन्तुं समुत्सुकाः ।
प्रतीहारेण भणिता आगच्छथ मया सह ॥ ८३ ॥
ततो यमगृहस्यान्ते जग्मुस्ते पार्थिवादयः ।
तेषां च पश्यतामादौ तत्र दौवारिकोऽविशत् ॥ ८४ ॥
तत्पृष्टे भूभुजादिष्टाश्चत्वारो मन्त्रिणोऽविशन् ।
देवतामोहितात्मानो भस्मीभूताः क्षणेन ते ॥ ८५ ॥
ततस्तत्र नरेन्द्रोऽपि झम्पां दातुं समुद्यतः ।
वत्सराजकुमारेण बाहौ धृत्वा निवारितः ॥ ८६ ॥
भणितश्च यथा राजन् ! सर्वस्य विदितं ह्यदः ।
म्रियते तत्क्षणादेव [1]प्रविष्टो ज्वलने यतः ॥ ८७ ॥
देवतायाः प्रभावेण जीवितोऽहं महीपते ! ।
तयैव मोहयित्वाऽमी निहता मम शत्रवः ॥ ८८ ॥
यतो मन्मारणोपायस्त्वाऽमीभिर्निवेदितः ।
ततो हता मयैते यत्कार्यं प्रतिकृतं कृते ॥ ८९ ॥

---

(१) अ ह प्रविष्टैर्ज्वलितानले ।

तस्य भक्त्या च शक्त्या च प्रसन्नः पृथिवीपतिः ।
किञ्चिन्न विफलारम्भो [1]ऽस्मीमांश्चागान्निजं गृहम् ॥ ८० ॥
दध्यौ चेति मया पापमस्य दाररिरंसया ।
बहुपार्जितमात्मा च लोकमध्ये लघूकृतः ॥ ८१ ॥
ध्यात्वेति सुन्दरीं कन्यां दत्त्वा तस्मै स भूपतिः ।
राज्यं च लोकसम्मत्या तापसः समजायत ॥ ८२ ॥
साधयित्वा बहून् देशान् पुण्यवान् दृढविक्रमः ।
महाराजपदं प्राप्तो वीरसेननृपात्मजः ॥ ८३ ॥
अथान्येद्युः पुमानेकः प्रणम्य जगतीपतिम् ।
इति विज्ञपयामास लेखढौकनपूर्वकम् ॥ ८४ ॥
क्षितिप्रतिष्ठिताद् देव ! नगरादागतोऽस्म्यहम् ।
भवद्विज्ञप्तिकालेखस्तत्पौरैः प्रेषितो ह्ययम् ॥ ८५ ॥
[2]लेखं समर्पयामास स्वपारिग्रहिकस्य तम् ।
उन्मुद्र्य वाचयामास सोऽप्येवं नृपतेः पुरः ॥ ८६ ॥

तद्यथा —

स्वस्तिपुर्यामुज्जयिन्यां वत्सराजं महीभुजम् ।
क्षितिप्रतिष्ठितात् पौरा नत्वा विज्ञपयन्त्यदः ॥ ८७ ॥
यथा ग्रीष्मार्दितो मेघं शीतार्तोऽग्निं जनः स्मरेत् ।
पीडिता देवराजेन स्मरामस्त्वां तथा वयम् ॥ ८८ ॥

---

(१) ङ खा- ।
(२) ङ· ञ लेखं तमर्पयामास स्वपारिग्रहिकस्य स ।

शीघ्रमेव समागत्य प्रभुत्वं त्वं कुरुष्व नः ।
अन्यथाऽन्यं श्रयिष्यामः स्वामिनं न्याय[1]निष्ठितम् ॥ ९९ ॥
श्रुत्वेति सर्वसामग्र्या वत्सराजो महीपतिः ।
प्रैषीद् दूतं तत्र गत्वा देवराजस्य भूपतेः ॥ ८०० ॥
ज्ञात्वा तमागतं सोऽपि सन्नह्य निरगात् पुरात् ।
विरक्तस्तत्परीवारलोकश्चाप्यन्वगान्न तम् ॥ १ ॥
वत्सराजं बलीयांसं मत्वा स्वांश्च तथाविधान् ।
प्रणश्य स ययौ क्वाऽपि नान्यायविजयो नृणाम् ॥ २ ॥
लोकः प्रमुदितः सोऽथ महोत्सवपुरस्सरम् ।
पुरे प्रवेशयामास वत्सराजं नरेश्वरम् ॥ ३ ॥
एवं राज्यद्वयस्याऽपि स्वामित्वमनुपालयन् ।
सोऽन्यदोद्यानपालेन विज्ञप्तो नतिपूर्वकम् ॥ ४ ॥
स्वामिन् ! संवर्ध्यसे प्रीत्या यतोऽद्य नगरे तव ।
चतुर्ज्ञानधरः सूरिरागत्य समवासरत् ॥ ५ ॥
गत्वा नत्वा मुनीन्द्रं तं यथास्थानं निविश्य च ।
स पपौ देशनानीरं गुरुवक्त्राद्रिनिर्गतम् ॥ ६ ॥
यतिश्रावकयोर्धर्ममाकर्ण्य गुरुणोदितम् ।
श्राद्धधर्मं प्रपद्यासौ पुनरागान्निजं गृहम् ॥ ७ ॥
मासकल्पं विधायाऽत्र सूरिरन्यत्र सोऽगमत् ।
वत्सराजोऽप्यनेकानि जिनचैत्यान्यकारयत् ॥ ८ ॥

---

(१) ङ-ज-निष्ठुरम् । ज-वर्तिनम् ।

जिनेन्द्रप्रतिमास्तत्र तासां चाष्टाह्निकोत्सवम् ।
धर्मकृत्यं तथान्यच्च गृहियोग्यं चकार सः ॥ ९ ॥
आचार्यः सोऽन्यदा तत्र पुनरेव समाययौ ।
ववन्दे च नरेन्द्रोऽसौ गत्वा तच्चरणद्वयम्[1] ॥ १० ॥
पप्रच्छ चान्यदा पूर्वभवे किं विहितं मया ? ।
यस्मेऽनुपदमायाता विपदः सम्पदोऽभवन् ॥ ११ ॥
सोऽवदत् श्रूयतां राजन् ! जम्बूद्वीपस्य भारते ।
शूरो नाम नृपोऽभूस्त्वं वसन्तपुरपत्तने ॥ १२ ॥
स शूरः सरलात्मा च क्षमी दाक्षिण्यसंयुतः ।
स्वभावेनैव निर्लोभो देवगुर्वर्चने रतः ॥ १३ ॥
दीनादिभ्यो वितीर्णस्वः प्रजापालनतत्परः ।
युक्तश्चतुर्विधनीत्या न्यायवान् दोषवर्जितः ॥ १४ ॥
स एवं गुणसंयुक्तो विशेषाच्छीलशोभितः ।
अतिप्रसक्तो दाने च पालयामास मेदिनीम् ॥ १५ ॥
सकलान्तःपुरीमध्ये तस्याऽभूदग्रवल्लभा ।
शूरवेगाभिधानेन विद्याधरकुलोद्भवा ॥ १६ ॥
उदूढा चापरा तेन रतिचूला नृपात्मजा ।
तस्यामासक्तचित्तोऽन्याः परित्याज स प्रियाः ॥ १७ ॥
अतः परं समाख्यातं सर्वं देवतया तव ।
गन्धवाहगतिसुत यथा त्वं परिणायितः ॥ १८ ॥

---

[1] ह॰ ञ द॰ -यीम् ।

स मृत्वा त्वं महाभाग ! जातोऽसि नृपनन्दनः ।
दानादिधर्ममाहात्म्याद्भोगसम्पत्समन्वितः ॥ १९ ॥
कृतं चैश्वर्यतः किञ्चिदन्तरायककर्म यत् ।
राज्यभ्रंशादिदुःखं तत् पूर्वे वयसि तेऽभवत् ॥ २० ॥
इत्याकर्ण्य समुत्पन्नजातिस्मृतिरसौ नृपः ।
विशेषपुण्यलाभार्थी जातो दीक्षासमुत्सुकः ॥ २१ ॥
संस्थाप्य तनयं राज्ये स श्रीशेखरनामकम् ।
चतसृभिरपि भार्याभिः समं जज्ञे महाव्रती ॥ २२ ॥
पालयित्वा चिरं दीक्षां कृत्वा च विविधं तपः ।
मृत्वा समाधिना चान्ते सुरलोकमियाय सः ॥ २३ ॥
देवलोकात् परिच्युत्य मनुष्यत्वमवाप्य च ।
क्षपयित्वाऽखिलं कर्म मुक्तिसौख्यं स लप्स्यते ॥ २४ ॥
स एष कथितो राजन् ! यः पूर्वं सूचितो मया ।
शूरो राजा शुभभोगी विपत्कालेऽपि योऽभवत् ॥ २५ ॥

॥ इति वत्सराजकथा ॥

जातव्रतपरीणामो राजा मेघरथस्ततः ।
जिनं नत्वा गृहं गत्वा प्रोचे दृढरथं प्रति ॥ २६ ॥
बन्धो ! राज्यं गृहाण त्वं प्रतिपद्ये त्वहं व्रतम् ।
सोऽवादीदहमप्येवं करिष्यामि त्वया सह ॥ २७ ॥
तेनात्मतनयो राज्ये मेघसेनो निवेशितः ।
युवराजत्वे च रथसेनो दृढरथात्मजः ॥ २८ ॥

चतुःसहस्रैर्भूपानां सुतसप्तशतैस्तथा।
बन्धुना च समं सोऽथ प्रवव्राज जिनान्तिके॥ २९॥
निरपेक्षो निजे देहे सोऽधिसेहे परीषहान्।
सदा समितिभिर्युक्तो गुप्तो गुप्तिभिरन्वहम्॥ ३०॥
प्रतिबोध्य बहून् जीवान् विहृत्य जगतीतले।
धौतकर्ममलो मोक्षं ययौ घनरथो जिनः॥ ३१॥
स्थानैर्विंशतिभिः साधु प्रधानैरेभिरर्जितम्।
रम्यं तीर्थंकरगोत्रकर्म मेघरथर्षिणा॥ ३२॥
अर्हत्-सिद्ध-प्रवचन-गुरु-स्थविर-साधुषु।
वात्सल्यं सर्वदा चक्रे बहुश्रुत-तपस्विषु॥ ३३॥
ज्ञानोपयोगं चाभीक्ष्णं दर्शने विनये तथा।
आवश्यके तथा शीलव्रते निरतिचारवान्॥ ३४॥
क्षणलवतपस्त्याग-वैयावृत्त्ये समाधिमान्।
अपूर्वज्ञानग्रहणे प्रयतः श्रुतभक्तियुक्॥ ३५॥
प्रभावनां प्रवचने विदधाति स्म सर्वथा।
सिंहनिष्क्रीडितं नाम तपःकर्म चचार च॥ ३६॥
संयमं पालयित्वाऽथ वर्षलक्षमनूनकम्।
व्यधादनशनं सोऽन्ते मानुजम्तिलकाचले॥ ३७॥
त्यक्त्वा मलमयं देहं कृत्वा कालं समाधिना।
जज्ञे सर्वार्थसंज्ञेऽसौ विमानेऽनुत्तरे सुरः॥ ३८॥

इत्थं जीवदयाविशेषभणनप्रज्ञादितश्रावक-
चित्तोत्पादकवत्सराजनृपतेराख्यायिकाग्रन्थुरः।

रम्यानुष्टुपबन्धबद्धिकलितः संक्षिप्तसन्दर्भको
व्याख्यातो दशमो भवो भगवतः शान्तेस्तथैकादशः ॥८३९॥

इत्याचार्यश्रीअजितप्रभसूरिविरचिते दशमैकादश-
भववर्णनो नाम पञ्चमः प्रस्तावः ॥

---

अर्हम्

## अथ षष्ठः प्रस्तावः ।



इतश्चात्रैव भरते युगादिजिनसन्ततिः ।
कुरुरित्यभवत् पूर्वं कुरुदेशस्तदाख्यया ॥ १ ॥

हस्तीति तत्सुतस्तेन निर्ममे '(१)हस्तिनापुरम् ।
गृहहट्टरचनाहारि तुङ्गप्राकारगोपुरम् ॥ २ ॥

बहुसूरिकृतावासं शोभितं बहुमङ्गलैः ।
अपूर्वगगनाकारं तत्पुरं भूरिसूरवत् ॥ ३ ॥

विश्वसेनो नृपस्तत्र शौर्यौदार्यादिसद्गुणैः ।
विख्यातो जगतीपीठे विश्वसेन इवाभवत् ॥ ४ ॥

पुण्यलावण्यरुचिराऽचिरादेवीति तत्प्रिया ।
सर्वालङ्कारवरयाऽलङ्कृता च रतिश्रिया ॥ ५ ॥

इतो भाद्रपदे कृष्णसप्तम्यां भरणीगते ।
चन्द्रे सर्वग्रहेषूच्चस्थानस्थेषु निशान्तरे ॥ ६ ॥

च्युत्वा सर्वार्थतो मेघरथस्यात्मायुषः क्षये ।
अवतीर्णोऽचिरादेव्याः कुक्षौ सरसि हंसवत् ॥ ७ ॥

तस्मिंश्च समये देवी सुखसुप्ता चतुर्दश ।
महास्वप्नान् ददर्शैतानोपज्जागरिता सका ॥ ८ ॥

(१) ड· ज अ द हास्तिनं पुरम् ।

मातङ्गवृषहर्यक्षाः साभिषेकेन्दिरा तथा ।
पुष्पमालेन्दुसूर्यौ च ध्वजकुम्भौ सरोवरम् ॥ ९ ॥
सागरश्च विमानं च रत्नानां सञ्चयस्तथा ।
निर्धूमो हुतभुक् चेति स्वप्ना आगमभाषिताः ॥ १० ॥
दृष्ट्वा स्वप्नानिमान् देवी जातनिद्राक्षया क्षणात् ।
गत्वा पराजमाचख्यौ प्रमोदभरनिर्भरा ॥ ११ ॥
प्रहृष्टमुखपद्मोऽथ जगाद जगतीपतिः ।
सर्वलक्षणसम्पूर्णो भावी देवि ! तवात्मजः ॥ १२ ॥
प्रसन्नवदना धर्मचिन्तया रात्रिशेषकम् ।
अतिक्रमयति स्मैषा कुस्वप्नालोकशङ्किता ॥ १३ ॥
सञ्जातेऽथ प्रगेऽष्टाङ्गनिमित्तज्ञानपण्डिताः ।
भूभुजाष्टावुपाध्याया आहूता निजपूरुषैः ॥ १४ ॥
कृतमङ्गलोपचाराः सम्प्राप्तास्ते नृपौकसि ।
दत्तासनेषूपविष्टाश्चार्चिताः कुसुमादिभिः ॥ १५ ॥
सुस्वप्नानां फलं राज्ञा पृष्टाश्चैवं बभाषिरे ।
अस्मच्छास्त्रे द्विचत्वारिंशत स्वप्ना जगतीपते ! ॥ १६ ॥
महास्वप्ना अपि त्रिंशत् स्युः सर्वे ते द्विसप्ततिः ।
बोधिता येऽचिराहेव्या महास्वप्ना इमे स्फुटम् ॥ १७ ॥
अर्हतां चक्रिणां चैतान् स्वप्नान् पश्यन्ति मातरः ।
सप्तार्धचक्रिणां चाम्बा चतुरः सीरिणां तथा ॥ १८ ॥
प्रत्यर्धचक्रिणां त्रींश्चान्येषामुत्तमजन्मिनाम् ।
एकैकमम्बिकाः स्वप्नं पश्यन्त्येषां हि मध्यतः ॥ १९ ॥

दृष्टा यदचिरादेव्या महास्वप्नाश्चतुर्दश ।
तद्भावी त्वत्सुतो राजन् ! षट्खण्डभरताधिपः ॥ २० ॥
अथवाऽपि जिनाधीशो विश्वत्रितयवन्दितः ।
तच्छ्रुत्वा मुदितो राजा मुमुदे तत्प्रियाऽपि सा ॥ २१ ॥
राज्ञा विसृष्टास्ते स्वप्नपाठकाः प्रययुर्गृहम् ।
बभार गर्भं राज्ञी च रत्नगर्भेव सेवधिम् ॥ २२ ॥
अतिस्निग्धातिमधुरं चातित्वारातितिक्तकम्
वर्जयामास साऽऽहारं कषायकटुकं तथा ॥ २३ ॥
महात्समशिवं तस्मिन्नासीत् पूर्वं पुरे तदा ।
सञ्जातो मान्द्यदोषेण लोकस्य प्रलयो महान् ॥ २४ ॥
गन्धद्विपस्य गन्धेनान्यदन्तिमदवत् क्षणात् ।
उपशान्तं तदशिवं प्रभावाद् गर्भगप्रभोः ॥ २५ ॥
ततश्च चिन्तितं तातजननीभ्याममदो हृदि ।
प्रभावोऽयमनीदृक्षसूनोर्गर्भगतस्य नो ॥ २६ ॥
इदं हि घटते यस्माद् गर्भवासदिने सदा ।
वन्दितोऽयं समागत्य महावाभ्यां सुरेश्वरैः ॥ २७ ॥
गतेषु मासेषु नवस्वर्धाष्टदिवसेषु च ।
ज्येष्ठकृष्णत्रयोदश्यां भरणीस्थे निशाकरे ॥ २८ ॥
सूर्यादिषु ग्रहेषूच्चपरमोच्चस्थितेषु च ।
शुभे लग्ने मुहूर्ते च प्रवाति चारु मारुते ॥ २९ ॥
निशीथसमये स्वर्णवर्णां कान्तिसमन्वितम् ।
सा देवी सुषुवे पुत्रं विश्वत्रयसुखावहम ॥ ३० ॥

( त्रिभिर्विशेषकम् )

अत्रान्तरे षडधिकपञ्चाशद् दिक्कुमारिकाः ।
अवधिज्ञानतो ज्ञात्वा जिनजन्म समाययुः ॥ ३१ ॥
अष्टावेयुरधोलोकाद् गजदन्ताद्रिकन्दतः ।
अष्टौ च नन्दनवनकूटाद् मेरुनगस्थितात् ॥ ३२ ॥
प्रत्येकं रुचकद्वीपादष्टावष्टौ कुमारिकाः ।
एयुर्दिग्भ्यस्ततस्तुभ्यस्ततस्तस्र विदिग्गताः ॥ ३३ ॥
मध्यमाद् रुचकद्वीपाच्चतस्रश्च दिगङ्गनाः ।
एवं सम्मिलिताः सर्वाः षटपञ्चाशद् भवन्ति ताः ॥ ३४ ॥
संवर्तवातजलदकृतिं दर्पणधारिताम् ।
भृङ्गारतालवृन्तानां चामराणां च धारणम् ॥ ३५ ॥
दीपिकाधारणं रक्षाविधानप्रभृतीनि च ।
चक्रिरे सूतिकर्माणि क्रमेणैवं जिनस्य ताः ॥ ३६ ॥
अत्रान्तरे सुरेन्द्रस्य चचालाचलमासनम् ।
सम्प्रयुक्तावधिज्ञानो जिनजन्म विवेद सः ॥ ३७ ॥
आज्ञाप्य त्रिदशं नैगमेषिणं हरिणाननम् ।
ज्ञापयामास तद्देवान् घण्टास्फालनपूर्वकम् ॥ ३८ ॥
सर्वे संनह्य देवास्ते हरेरन्तिकमाययुः ।
विमानं कारयामास प्रधानं पालकेन सः ॥ ३९ ॥
तत्राधिरुह्य सपरीवारोऽलङ्कारशोभितः ।
आगादनुपमश्रीको जिनजन्मगृहे हरिः ॥ ४० ॥

तुभ्यं नमस्तीर्थनाथ ! सनाथीकृतविष्टप !
कृपारससरिन्नाथ ! नाथ ! श्रीविश्वसेनज ! ॥ ४१ ॥

कुक्षौ रत्नधरे ! देवि ! जगद्दीपप्रदायिके !
नमस्तुभ्यं जगन्मातस्त्वं धन्या पुण्यवत्यसि ॥ ४२ ॥

त्वमेवामोघजन्माऽसि त्वमेवोत्तमलक्षणे !
पुत्रिणीषु त्वमेवाऽसि पवित्रा भुवनत्रये ॥ ४३ ॥

धर्मोद्धरणधौरेयश्चक्रमोक्षाऽध्वदीपकः ।
षोडशस्तीर्थनाथोऽयं भगवान् सुषुवे यया ॥ ४४ ॥

नत्वा स्तुत्वा जिनाधीशं तदम्बां च विशेषतः ।
दत्त्वावस्वापिनीं तस्याः प्रतिरूपं निवेश्य च ॥ ४५ ॥

पञ्चरूपो बभूवाऽसौ तत्रैको जिनमाददे ।
एकश्छत्रं पविं चैको द्वौ च चामरधारिणौ ॥४६॥ (युग्मम्)

स ययौ मेरुशिखरे सुरेन्द्रा अपरेऽपि हि ।
तत्रेयुः स्वर्गभुवनवासिनो व्यन्तरास्तथा ॥ ४७ ॥

तत्रातिपाण्डुकम्बलशिलायां शाश्वतासने ।
सौधर्मेन्द्रो निषसाद धृत्वाङ्के जिनपुङ्गवम् ॥ ४८ ॥

हैमरूप्यमणिदारुमृन्मयां कलशावलिम् ।
तीर्थगन्धोदकापूर्णामुत्क्षिप्य प्रमदाञ्चिता. ॥ ४९ ॥

अच्युताद्याः सुराधीशाश्चक्रिरे जिनमज्जनम् ।
निःशेषसुकृतापास्तभवाम्भोधिनिमज्जनम् ॥५०॥ युग्मम्)

ततश्चाच्युतनाथस्योत्सङ्गे संस्थाप्य तीर्थपम् ।
सौधर्मेन्द्रो व्यधात् स्नात्रं पुण्यपात्रं जगद्गुरोः ॥ ५१ ॥

सुवाससा प्रमृज्याङ्गं चन्दनाद्यैर्विलिप्य च ।
पुष्पाद्यैरर्चयामास प्रीतचित्तः शचीपतिः ॥ ५२ ॥
विधाय चक्षुःशान्त्यर्थं लवणोत्तारणादिकम् ।
शक्रो नत्वा जिनं भक्त्या स्तोतुमेवं प्रचक्रमे ॥ ५३ ॥
जय त्वमचिराकुक्षिक्षितिकल्पद्रुमसन्निभ ! ।
भव्याम्भोरुहसूर्याभ ! भद्रश्रेणिविधायक ! ॥ ५४ ॥
इत्याद्युद्दामवचनैः स्तुत्वा नीत्वा पुनर्गृहे ।
स मातुरर्पयामास जिनमेवं जगाद च ॥ ५५ ॥
जिनस्य जिनमातुश्च यो दुष्टं चिन्तयिष्यति ।
एरण्डफलवद् ग्रीष्मे स्फुटिष्यत्यस्य मस्तकम् ॥ ५६ ॥
ततो नन्दीश्वरद्वीपे यात्रां कृत्वा सुरेश्वराः ।
सर्वे जिज्ञं निजं स्थानं जग्मुस्ताश्च कुमारिकाः ॥ ५७ ॥
तदा देवी जजागार तदङ्गप्रतिचारिकाः ।
दृष्ट्वा सनन्दनामेतां जातानन्दाः ससम्भ्रमाः ॥ ५८ ॥
प्रस्खलद्गतयो गाढनीवीबन्धशिरोरुहाः ।
पतत्प्रच्छादनाः पुत्रजन्म राज्ञे न्यवेदयन् ॥ ५९ ॥
इदं च कथयामासुः सूतिकर्माऽस्य देव ! यत् ।
चक्रे काष्ठाकुमारीभिर्दासीभिरिव साञ्जसम् ॥ ६० ॥
कृतो जन्माभिषेकश्च सुरेन्द्रैर्मेरुमस्तके ।
इति देवमुखात् स्वामिन्नस्माभिः शुश्रुवे वचः ॥ ६१ ॥
ततोऽभिनवपाथोदधाराहतकदम्बवत् ।
शुशुभे जातरोमाञ्चकञ्चुको जगतीपतिः ॥ ६२ ॥

निजाङ्गलग्नमखिलं भूषणं मुकुटं विना ।
ग्रामप्रसन्तति ताभ्यां वृत्तिं च प्रददावसौ ॥ ६३ ॥
ततश्च दापयन् दानमनिवारितशात्रवम् ।
हृष्टः प्रवर्तयामास सुतजन्ममहोत्सवम् ॥ ६४ ॥
द्वादशेऽथ दिने राजा बन्धुवर्गमशेषकम् ।
भोजयित्वा गौरवेण तत्समक्षमदोऽवदत् ॥ ६५ ॥
बभूवाऽशिवशान्तिर्यदस्मिन् गर्भागते जिने ।
तदस्य सुतरत्नस्य शान्तिर्नामाऽस्तु सुन्दरम् ॥ ६६ ॥
सर्वस्याऽपि जनस्यैतत् सञ्जातं नाम सम्मतम् ।
रम्यं सद्गुणनिष्पन्नं चेतसाग्रे विचिन्तितम् ॥ ६७ ॥
शक्रसंक्रमिताङ्गुष्ठाऽमृताहारस्ततः प्रभुः ।
विशिष्टरूपलावण्यसम्पन्नो ववृधे क्रमात् ॥ ६८ ॥
पाणिपादतले यस्यासन् लक्षणलक्षिते ।
स्निग्धताम्रपृथूत्तुङ्गा नखाश्च मुकुरोपमाः ॥ ६९ ॥
पादौ कूर्मोन्नतावेणीजङ्घाकारं च जङ्घके ।
ऊरू करिकरप्रख्ये विस्तीर्णं च कटीतटम् ॥ ७० ॥
गम्भीरदक्षिणावर्तो नाभिमध्यं च वज्रवत् ।
पुरद्वारकपाटाभं दृढं वक्षःस्थलं तथा ॥ ७१ ॥
बाहू पुरार्गलातुल्यौ ग्रीवा कम्बुसमा वरा ।
बिम्बोपमौ चाधरोष्ठौ कुन्दकुड्मलवद् द्विजाः ॥ ७२ ॥
उत्तुङ्गः सरलो नासावंशः सञ्जनवृत्तवत् ।
पद्मपत्रोपमे नेत्रे अष्टमीन्दुसमालिकम् ॥ ७३ ॥

दोलाकारं श्रुतियुगं छत्राकारं च मस्तकम् ।
स्निग्धा अलिकुलश्यामाः कुन्तलाश्चातिकोमलाः ॥ ७४ ॥
पद्मगन्धसमः श्वासो वरहेमरुचिस्तनुः ।
इत्यङ्गलक्षणं यस्य कुरङ्गश्च तथाऽपरम् ॥ ७५ ॥
त्रिभिर्ज्ञानैः समायुक्तोऽशेषविज्ञानपारगः ।
जातः सर्वजनोत्कृष्टः प्रभुः सम्प्राप्तयौवनः ॥ ७६ ॥
वत्सराणां सहस्रेषु पञ्चविंशतिषु क्रमात् ।
गतेषु भगवान् राज्ये जनकेन निवेशितः ॥ ७७ ॥
परिणायितश्चानेकाः सुरूपाः कुलबालिकाः ।
सकलान्तःपुरीसारा जज्ञे तस्य यशोमती ॥ ७८ ॥
जीवो दृढरथस्याऽथ स सर्वार्थात्परिच्युतः ।
आगाद्यशोमतीकुक्षौ चक्रस्वप्नोपसूचितः ॥ ७९ ॥
समये च सुतो जज्ञे तस्योत्सवपुरःसरम् ।
चक्रायुध इति नाम चक्रे स्वप्नानुसारतः ॥ ८० ॥
कलाकलापसम्पूर्णः क्रमात्सम्प्राप्तयौवनः ।
सोऽपि पाणिग्रहं राजकन्यकानां हि कारितः ॥ ८१ ॥
अन्यदायुधशालायां रविबिम्बसमद्युति ।
तस्योत्पन्नं सहस्रारं चक्ररत्नमनुत्तमम् ॥ ८२ ॥
शस्त्रागाराररक्षकेण तदुत्पत्तिर्निवेदिता ।
प्रभोः सोऽथ समागत्य चक्रेऽस्याष्टाह्निकोत्सवम् ॥ ८३ ॥
तच्छालाया विनिर्गत्य चचालाम्बरवर्त्मना ।
तदनु प्राचलच्छान्तिनाथः सैन्यसमन्वितः ॥ ८४ ॥

चक्रं यक्षसहस्रेणाधिष्ठितं तदथो गतम् ।
पूर्वस्यां मागधतीर्थासन्नवेलाकुले क्रमात् ॥ ८५ ॥
कृत्वा निवेशं सेनायास्तत्र चक्री शुभासनं ।
निषसादाभिमुखोऽस्य ततस्तदनुभावतः ॥ ८६ ॥
अधोभागे जलस्यान्ते द्वादशयोजनस्थिते ।
मागधाख्यकुमारस्य चलति स्मासनं तदा ॥ ८७ ॥
ददर्शावधिना शान्तिं स जिनं चक्रवर्तिनम् ।
षट्खण्डभरतक्षेत्रसाधनायतमागतम् ॥ ८८ ॥
दध्यौ चैवं मयाऽऽराध्योऽन्योऽपि चक्री जिनस्त्वयम् ।
विशेषेण यतो भक्तिमिन्द्रा अप्यस्य कुर्वते ॥ ८९ ॥
ततः सुवस्त्राण्यादाय सोऽनर्घ्याभरणानि च ।
आगत्य ढौकयामास प्रभोरेवं शशंस च ॥ ९० ॥
तवाज्ञाकारकः स्वामिन् ! पूर्वदिक्पालकोऽस्म्यहम् ।
आदेष्टव्यं सदा कृत्यं स्वकिङ्करसमस्य मे ॥ ९१ ॥
भगवानपि सम्मान्य देवतं विससर्ज तम् ।
याम्यां प्रतिदिशं सोऽथ चलति स्म सुदर्शनः ॥ ९२ ॥
तीर्थस्य वरदामस्यासन्नं गत्वा स्थितश्च सः ।
तस्याधिष्ठायकं शान्तिस्तथैवासाधयत् प्रभुः ॥ ९३ ॥
गत्वाऽथ वारुणीमाशां प्रभासस्याधिदैवतम् ।
साधयित्वोत्तरस्यां तु ययौ सिन्धुनदीतटे ॥ ९४ ॥
तत्राऽपि पूर्वविधिना साधिता सिन्धुदेवता ।
आगत्याऽऽढौकयत् स्नानपीठं रत्नमयं विभोः ॥ ९५ ॥

शातकुम्भमयाः कुम्भा रौप्या मृन्मयकास्तथा ।
अन्यां च स्नानसामग्रीं सुवस्त्राभरणानि च ॥ ९६ ॥
ऊचे च सर्वदा स्वामिन्नाज्ञाकारिण्यहं तव ।
इत्युक्त्वा साऽपि स्वस्थानं विसृष्टा विभुना ययौ ॥ ९७ ॥
उत्तीर्य्य चर्मरत्नेन सिन्धुं सेनापतिस्ततः ।
विभूपान्ते साधयित्वा प्रतीचीखण्डमागतः ॥ ९८ ॥
कृतपूजं ततश्चक्रं वैताढ्यस्यागमत्तले ।
वैताढ्याद्रिकुमारश्च वशवर्त्यभवत् प्रभोः ॥ ९९ ॥
गुहाखण्डप्रपाताया द्वारमुद्घाटितं स्वयम् ।
कृतमालसुरश्चाज्ञां जगद्भर्तुः[1] प्रपन्नवान् ॥ १०० ॥
तत्रोन्मग्नाऽथ निमग्ना द्वे नद्यावतिदुस्तरे ।
चकार वर्धकिः सद्यः पद्यां तत्र मनोहराम् ॥ १ ॥
गुहायां प्रविवेशाऽथ प्रभुः सैन्यसमन्वितः ।
काकिन्याऽथ तमो हर्तुं विदधे मण्डलानि च ॥ २ ॥
पञ्चाशद्योजनान्येकोनपञ्चाशच्च मण्डली ।
एवं जग्मे ससैन्योऽथ परतो निरगाद् बहिः ॥ ३ ॥
तत्रापातचिलाताख्यान् म्लेच्छान् भरतचक्रिवत् ।
वशे चकार तरसा महापुण्यप्रभावयुक् ॥ ४ ॥
सेनान्या साधयित्वाऽथ द्वितीयं सिन्धुनिष्कुटम् ।
हिमवत्पर्वतस्याधिदेवं साधयति स्म सः ॥ ५ ॥

(१) ङ ज विभुः ।

गिरौ वृषभकूटाख्ये निजं नाम लिलेख च ।
गङ्गोत्तरं निष्कुटं चासाधयद् वाहिनीपतिः ॥ ६ ॥
तमिस्रायां नाट्यमालं ससाध्य निरगाद् विभुः ।
गङ्गां च साधयित्वाऽस्याः कूले तस्याऽथ तस्थुषः ॥ ७ ॥
द्वादशयोजनायामा नवयोजनविस्तृताः ।
मञ्जूषाकृतयः प्रादुर्बभूवुर्निधयो नव ॥ ८ ॥ ( युग्मम )
नैसर्पः पाण्डुकश्चैव पिङ्गलः सर्वरत्नकः ।
महापद्मः कालमहाकालौ माणवशङ्खकौ ॥ ९ ॥
स्कन्धावारपुरादीनां निवेशाः प्रथमे निधौ ।
सर्वेषां धान्यबीजानामुत्पत्तिश्च द्वितीयके ॥ १० ॥
नराणां महिलानां च हस्तिना वाजिनां तथा ।
आभरणविधिः सर्वो निधौ पिङ्गलके भवेत ॥ ११ ॥
चतुर्दशाऽपि रत्नान्युत्पद्यन्ते सर्वरत्नके ।
महापद्मे च वस्त्राणां रङ्गादीनां च सम्भवः ॥ १२ ॥
काले कालत्रयज्ञानं महाकाले च कीर्तितः ।
स्वर्णरूप्यलोहमणिप्रवालानां च सम्भवः ॥ १३ ॥
युद्धनीतिः समग्राऽपि सर्वप्रहरणानि च ।
तनुत्राणादि योधानां योग्यं माणवके भवेत ॥ १४ ॥
तूर्याङ्गानि समस्तानि काव्यं चाऽपि चतुर्विधम ।
निधौ सञ्जायते शङ्खे नाट्यनाटकयोर्विधिः ॥ १५ ॥
तेषु पल्योपमायुष्का वसन्ति खलु देवताः ।
निधानसमनामानः समये परिकीर्तिताः ॥ १६ ॥

तथैवात्मवशं चक्रे गङ्गायाः पूर्वनिष्कुटम् ।
एवं षट्खण्डभरतक्षेत्रं प्रभुरसाधयत् ॥ १७ ॥
¹कृतदिग्विजयः सोऽथ पुनरागान्निजं पुरम् ।
प्रविश्य तत्र गेहे च जगामोत्सवपूर्वकम् ॥ १८ ॥
द्वात्रिंशन्मुकुटबद्धमहीपालसहस्रकैः ।
प्रारब्धश्चक्रवर्तित्वाऽभिषेको द्वादशाब्दिकः ॥ १९ ॥
अभिषेकोत्सव कृत्वा राजकैको दिने दिने ।
स्वामिने प्रचुरं द्रव्यं ददौ द्वे द्वे च कन्यके ॥ २० ॥
चतुःषष्टिसहस्राणि ततोऽभवन् प्रिया विभोः ।
अत्यन्तरूपलावण्यविनिर्जितसुराङ्गनाः ॥ २१ ॥
सेनापतिप्रभृतीनि रत्नानि च चतुर्दश ।
तत्र यक्षसहस्रेणैकैकं हि समधिष्ठितम् ॥ २२ ॥
चतुरशीतिलक्षाणि करिणां वाजिनां तथा ।
ध्वजाङ्काः शस्त्रसम्पूर्णास्तत्प्रमाणा रथा अपि ॥ २३ ॥
द्विसप्ततिसहस्राणि पुराणामृद्धिशालिनाम् ।
ग्रामाणां च पदातीनां कोट्यः षण्णवतिस्तथा ॥ २४ ॥
द्वात्रिंशतं सहस्राणि देशानां भूभुजां तथा ।
द्वात्रिंशद्बद्धतरुणीनाटकानां च रङ्गिणाम् ॥ २५ ॥
रत्नाकराद्याकराणां सहस्राणि च विंशतिः ।
पत्तनान्यष्टचत्वारिंशत्सहस्रमितानि च ॥ २६ ॥

(१) ङ. ज. ञ. ट. कृताशाविजय. ।

एवं पालयतश्चक्रिपदवीमसमां प्रभोः ।
ययौ वर्षसहस्राणां विंशतिः पञ्चसंयुता ॥ २७ ॥
अत्रान्तरे ब्रह्मलोकेऽरिष्टप्रस्तरवासिनाम् ।
पीठं सारस्वतादीनां चलति स्मामृताशिनाम् ॥ २८ ॥
विज्ञायावधिना तेऽथ व्रतस्य समयं विभोः ।
तीर्थं प्रवर्तयेत्याचचक्षिरे सैन्यवन्दिवत् ॥ २९ ॥
विजानंस्तत् स्वयं स्वामी तैश्चैवं ज्ञापितस्ततः ।
ददौ सांवत्सरं दानं याचकेभ्यो यथारुचि ॥ ३० ॥
ततश्चक्रायुधं राज्ये निवेश्य तनयं निजम् ।
बभूव भगवान् दीक्षाग्रहणार्थं समुद्यतः ॥ ३१ ॥
अत्रान्तरे सुराधीशाः सर्वेऽपि चलितासनाः ।
आययुः शान्तिनाथस्य कर्तुं निष्क्रमणोत्सवम् ॥ ३२ ॥
सर्वार्थसञ्ज्ञां शिबिकामारुरोहाऽथ तीर्थकृत ।
चामराभ्यां वीज्यमानो धृतच्छत्रश्च मस्तके ॥ ३३ ॥
उत्क्षिप्ता मानुषैः पूर्वं शिबिका सा जगद्गुरोः ।
सुरासुरेन्द्रगरुडनागेन्द्रैश्च ततस्ततः ॥ ३४ ॥
उदूढा सा पुरो देवैर्दक्षिणाङ्गे तथाऽसुरैः ।
पश्चाद्भागे च गरुडैर्नागैरुत्तरतस्तथा ॥ ३५ ॥
नृत्यं प्रकटयन्ति स्म पुरो भगवतो नटाः ।
पठन्ति स्तोत्रकैर्भट्टाः स्वामिन् ! जय जयेति च ॥ ३६ ॥
सद्गुणान् वर्णयन्ति स्म सौन्दर्यादीन् भुवनोत्तरान् ।
नानाच्छन्दैर्जगद्भर्तुर्नरा रासकदायकाः ॥ ३७ ॥

ततो भम्भामृदङ्गाद्यैन्यातोद्यानि गुरुस्वरम् ।
वादयन्ति स्म साटोपास्तत्पाठकुशला नराः ॥ ३८ ॥
चक्रे च हाहाहूहूभ्यां सप्तस्वरसमन्वितम् ।
मूर्च्छनाग्रामलयमात्राढ्यं गीतमुत्तमम् ॥ ३९ ॥
रम्भा तिलोत्तमा चैवोर्वशी मेना सुकेशिका ।
हावभावविलासाढ्यं नृत्यं चक्रुः पुरः प्रभोः ॥ ४० ॥
स एवंविधसामग्र्या निर्गत्य नगराच्छनैः ।
उद्यानं प्रवरं प्राप सहस्राम्रवणाभिधम् ॥ ४१ ॥
शिबिकायाः समुत्तीर्य विमुच्याभरणान्यथ ।
पञ्चभिर्मुष्टिभिः केशानुत्खवान जिनेश्वरः ॥ ४२ ॥
वस्त्राञ्चले गृहीत्वा तान् क्षीराब्धौ मघवाऽक्षिपत् ।
मृदङ्गनादसंयुक्तं तुमुलं च न्यवारयत् ॥ ४३ ॥
ज्येष्ठासितचतुर्दश्यां शशाङ्के भरणीगते ।
कृत्वा सिद्धनमस्कारं प्रभुश्चारित्रमाददे ॥ ४४ ॥
कृतषष्ठतपाः सार्धं सहस्रेण महीभुजाम् ।
आत्तसामायिकः सोऽथ विजहार महीतले ॥ ४५ ॥
कस्मिंश्चित्सन्निवेशेऽथ परमान्नेन कारितः ।
सुमित्राख्यगृहस्थेन पारणं परमेश्वरः ॥ ४६ ॥
चतुर्ज्ञानधरः सोऽथ ग्रामाकरपुराकुलाम् ।
स्वामी विहरति स्मोर्वीं महासत्त्वशिरोमणिः ॥ ४७ ॥
मासान् छद्मस्थकालेऽष्टौ विहृत्य पुनराययौ ।
स हास्तिनपुरे तत्र सहस्राम्रवणे वरे ॥ ४८ ॥

तत्र पत्रप्रसूनादिनन्दिभृन्नन्दिनामकः ।
सुविशालोऽभवद्वृक्षस्तस्थौ तस्य तले प्रभुः ॥ ४९ ॥
प्रभोः प्रवर्तमानस्य शुक्लध्याने वरे तदा ।
कृतषष्ठस्य पौषस्य शुद्धायां नवमीतिथौ ॥ ५० ॥
भरणीस्थे निशानाथे क्षीणकर्मचतुष्टये ।
उत्पन्नमतुलं नित्यं केवलं ज्ञानमुज्ज्वलम् ॥ ५१ ॥ (युग्मम्)
चतुर्विधैस्ततो देवैः समेत्य चलितासनैः ।
अकारि रम्यं समवसरणं जिनहेतवे ॥ ५२ ॥
ऊर्व्यां योजनमात्रायां वायुनाऽशुभपुद्गलाः ।
अपनीतास्ततो गन्धोदकेन शमितं रजः ॥ ५३ ॥
आद्यो मणिमयो वप्रः कपिशीर्षसमन्वितः ।
द्वितीयस्तु हैममयः सुरत्नकपिशीर्षकः ॥ ५४ ॥
सुवर्णकपिशीर्षाढ्यस्तृतीयो रूप्यनिर्मितः ।
विमानज्योतिर्भवनवासिभिस्ते कृताः सुरैः ॥ ५५ ॥
जज्ञे सतोरणा तेषु प्रत्येकं द्वारतुष्टयी ।
स्वाम्यङ्गाद् द्वादशगुणस्तन्मध्येऽशोकपादपः ॥ ५६ ॥
चत्वारि परितस्तस्य सिंहासनवराणि च ।
छत्रत्रयं चामराणि व्यन्तरैर्विहितं मुदः ॥ ५७ ॥
प्रविश्य पूर्वद्वारेण कृततीर्थनमस्कृतिः ।
निषसाद प्रसन्नास्यः पूर्वसिंहासने प्रभुः ॥ ५८ ॥
शेषेषु तत्प्रतिच्छन्दाः पृष्ठे भामण्डलं प्रभोः ।
पुरः कुसुमवृष्टिश्चाजानुमात्री सुरैः कृता ॥ ५९ ॥

नदन्ति स्माम्बरतले देवदुन्दुभयस्तदा ।
अथो निषेदुराग्नेय्यां साधुसाध्वीसुराङ्गनाः ॥ ६० ॥
ज्योतिष्कभवनपतिव्यन्तराणां च देवताः ।
निषेदुर्नैर्ऋते कोणे वायव्ये ते सुराः पुनः ॥ ६१ ॥
वैमानिकामराऽमर्त्यमनुष्याणां च योषितः ।
एते निषेदुरीशाने मुख्यप्राकारमध्यगाः ॥ ६२ ॥
पूर्वोक्तदिग्विभागेषु तिर्यञ्चस्त्यक्तमत्सराः ।
सन्निषण्णा द्वितीयस्य प्राकारस्याऽन्तरेऽखिलाः ॥ ६३ ॥
तस्थुस्तृतीयवप्रान्तर्वाहनान्यखिलानि च ।
एवं समवसरणस्थितिः किञ्चित्प्रकीर्तिता ॥ ६४ ॥
कल्याणनामधेयेन पुंसागत्य निवेदिताः ।
स्वामिनः केवलोत्पत्तिश्चक्रायुधमहीपतेः ॥ ६५ ॥
गत्वाऽसौ विधिना तत्र नत्वा स्तुत्वा जिनेश्वरम ।
निषसाद यथास्थान पुरो विरचिताञ्जलिः ॥ ६६ ॥
मधुक्षीरास्रवलब्ध्या युक्तयातिशयेन च ।
भाषया विदधे धर्मदेशनां भगवानथ ॥ ६७ ॥
निर्जिताः शत्रवो लोके महाराज ! त्वयोजसा ।
नाद्याऽपि निर्जिता देहे रिपवस्त्विन्द्रियाह्वयाः ॥ ६८ ॥
शब्दरूपरसगन्धस्पर्शाख्या विषयाः खलु ।
अजितेष्विन्द्रियेष्वेते महानर्थविधायिनः ॥ ६९ ॥
वितत्य कर्णौ व्याधस्य गीताकर्णनतत्पराः ।
हरिणा मरणं यान्ति श्रोत्रेन्द्रियवशंवदाः ॥ ७० ॥

शलभः कनकाकारां प्रदीपस्योल्लसच्छिखाम् ।
पश्यन् प्रविश्य तत्राऽऽशु म्रियतेऽनिर्जितेक्षणः ॥ ७१ ॥
मांसपेशीरसास्वादलुब्धः कैवर्तवश्यताम् ।
यात्यगाधजलस्थोऽपि मीनो रसनया जितः ॥ ७२ ॥
भृङ्गः करिमदाघ्राणलुब्धः प्राप्नोति पञ्चताम् ।
दुःखं वा सहते नागो घ्राणेन्द्रिय[1]वशः खलु ॥ ७३ ॥
हस्तिनीवपुषः स्पर्शलुब्धोऽथ करिपुङ्गवः ।
आलानबन्धनं तीक्ष्णाङ्कुशघातं सहेत भोः ! ॥ ७४ ॥
त्यजन्ति विषयानेवंविधान् सत्पुरुषाः क्षणात् ।
त्यक्ताः प्रियाः स्वरूपेण गुणधर्मेण ते यथा ॥ ७५ ॥
चक्रायुधेन पृष्टोऽथ शान्तिनाथो जिनेश्वरः ।
प्रतिबोधकृते तस्य कथयामास तत्कथाम् ॥ ७६ ॥
इहासीद् भरतक्षेत्रे पुरे शौर्यपुराभिधे ।
[2]दृढधर्म इति ख्यातो विक्रान्तः पृथिवीपतिः ॥ ७७ ॥
यथार्थनाम्नी तस्याऽभूत् प्रियमी शीलशालिनी ।
तत्कुक्षिसम्भवस्तस्य गुणधर्माभिधः सुतः ॥ ७८ ॥
कलावानिन्दुवल्लोकलोचनानन्ददायकः ।
पञ्चबाण इवाशेषकामिनीवल्लभश्च यः ॥ ७९ ॥

(१) क॰ ज समन्वित॰ ।
(२) क॰ दृढवर्म॰ ।

सुभगः सरलः शूरः पूर्वाभाषी प्रियंवदः ।
दृढसौहृदः सुरूपः स सर्वगुणसंयुतः ॥ ८० ॥
इतश्चेशानचन्द्रस्य भूपते रूपसंयुता ।
सुता कनकवल्यासीद्दमन्तपुरपत्तने ॥ ८१ ॥
चक्रे तस्याः कृते राज्ञा स्वयंवरणमण्डपः ।
गुणधर्मोऽथ तत्रागादन्ये च पृथिवीभुजः ॥ ८२ ॥
राज्ञा दत्तगृहे स्थित्वा स स्वयंवरमण्डपम् ।
ययौ द्रष्टुमथो तत्रागमत् साऽपि नृपात्मजा ॥ ८३ ॥
तया निरीक्षितः सोऽथ तेनासावपि वीक्षिता ।
जाता च दृष्टिविक्षेपेणानुरागपरात्मनि ॥ ८४ ॥
तमीक्षमाणा सानन्दं दृश्या सा सदनं ययौ ।
कुमारोऽपि वलित्वाऽगात् स्वावासे सपरिच्छदः ॥ ८५ ॥
निश्यपान्ते कुमारस्य चेट्येका प्रेषिता तया ।
तस्मै समर्पयामास सैकां चित्रस्य पट्टिकाम् ॥ ८६ ॥
ददर्श तत्र लिखितां कुमारः कलहंसिकाम् ।
तदधः श्लोकमेकं च ततो वाचयति स्म तम् ॥ ८७ ॥
आदौ दृष्टे प्रिये सानुरागासौ कलहंसिका ।
पुनस्तद्दर्शनं शीघ्रं वाञ्छत्येव वराकिका ! ॥ ८८ ॥
कुमारोऽथ पुरस्तस्या लिखित्वा कलहंसकम् ।
तस्याधस्तादिति श्लोकं लिलेख च महामतिः ॥ ८९ ॥
कलहंसोऽप्यसौ सुभ्रु ! क्षणं दृष्ट्वाऽनुरागवान् ।
पुनरेव प्रियां द्रष्टुमहो ! वाञ्छत्यनारतम् ॥ ९० ॥

कुमारीप्रेषिते साऽथ सुताम्बूलविलेपने।
कुमारस्यार्पयामास सुगन्धकुसुमानि च ॥ ९१ ॥
कुमारेणाऽपि वस्त्राणि कुसुमान्युत्तमाङ्गके।
ताम्बूलमुपभुक्तं च न्यस्तमङ्गे विलेपनम ॥ ९२ ॥
पारितोषिकमेतस्यै दत्तो हारश्च निर्मलः।
सोचे कुमार! कन्यायाः शृणु त्वं वाचिकं ननु ॥ ९३ ॥
कृत्वैकान्तमसौ तच्च श्रोतुमभ्युद्यतोऽभवत्।
साऽवोचद्राजनन्दन्या तयेदं कथितं तव ॥ ९४ ॥
करिष्ये वरमालाया निक्षेपं ते प्रगे परम।
किञ्चित्कालं न विषयसेवा कार्या त्वया प्रिय! ॥ ९५ ॥
प्रतिपन्नमिदं तेन तया तस्या निवेदितम्।
प्रभाते च निचिक्षेप तत्कण्ठे साऽथ तां स्रजम ॥ ९६ ॥
विसृष्टास्तेऽथ संमान्य भूभुजानेन पार्थिवाः।
कारितो गुणधर्मश्च कन्यकायाः करग्रहम् ॥ ९७ ॥
श्वशुरं समनुज्ञाप्य गृहीत्वा प्रेयसीं च ताम्।
स्वपुरे स समागत्य तां मुमोचालये वरे ॥ ९८ ॥
अथान्येद्युः समीपेऽस्या निषण्णः स नृपात्मजः।
ब्रूहि प्रहेलिकां काञ्चिदित्युक्त्वाऽनयाऽवदत ॥ ९९ ॥
स्थले जाता जले स्वैरं याति तेन न पूर्यते।
जनप्रतारिणी नित्यं वद सुन्दरि! का त्वसौ ॥ १०० ॥
विचिन्त्य कनकवत्योक्तम् 'तरी' इति ॥ तया चापाठि ;
पयोधरभराक्रान्ता तन्वङ्गी गुणसंयुता।

नरस्कन्धसमारूढा का प्रयात्यवलम्बिता ? ॥ १ ॥

कुमारेणोक्तम्—कावाकृतिः ॥

क्षणं विनोदं कृत्वैवं कलावत्या तया सह ।
गुणधर्मकुमारः स्वप्रासादं पुनरागतः ॥ २ ॥
स्नातभुक्तविलिप्तस्याऽऽस्थानस्थस्याऽस्य सन्निधौ ।
परिव्राडाययावेकः प्रतीहारनिवेदितः ॥ ३ ॥
तेन दत्तासनोऽप्येनं स्वकाष्ठासनसंस्थितम् ।
प्रणामपूर्वं पप्रच्छागमहेतुं नृपात्मजः ॥ ४ ॥
साऽवदद्भैरवाचार्येणाऽहं भद्र ! नियोजितः ।
तवाह्वानकृते कार्यं स एव कथयिष्यति ॥ ५ ॥
क्वाऽस्त्यसौ भैरवाचार्यः कुमारेणेति जल्पिते ।
सोऽब्रवीदमुकस्थाने नगराद्बहिरस्त्यसौ ॥ ६ ॥
अहं प्रातः समेष्यामीत्युक्तस्तेन ययावसौ ।
पपाठावान्तरे तस्य पुरः कालनिवेदकः ॥ ७ ॥
अयं प्राप्योदयं पूर्वं स्वप्रतापं वितत्य च ।
गततेजा अहो ! सम्प्रत्यस्तं याति दिवाकरः ॥ ८ ॥
सन्ध्याकालोचितं कृत्यं कृत्वाऽथ नृपनन्दनः ।
समतिक्रमयामास यामिनीं सुखनिद्रया ॥ ९ ॥

पुनः कालनिवेदकेन पठितम् ;—

निहतप्रतिपक्षोऽसौ सर्वसत्त्वोपकारकृत् ।
उदयं याति तिग्मांशुरन्योऽप्येवं प्रतापवान् ॥ १० ॥

उत्थाय गुणधर्मोऽथ प्रातःकृत्यं विधाय च ।
प्रययौ भैरवाचार्यसमीपे सपरिच्छदः ॥ ११ ॥
व्याघ्रकृत्तिनिषण्णोऽसौ कुमारेण निरीक्षितः ।
लगयित्वा शिरो भूमौ भक्तिपूर्वं च वन्दितः ॥ १२ ॥
ससम्भ्रमः स योगीन्द्रो दर्शयित्वा स्वमासनम् ।
त्वमप्युपविशाऽत्रेति कुमारं समभाषत ॥ १३ ॥
विनीतात्मा कुमारस्तं प्रत्यूचे भगवन् ! न मे ।
गुरोः समासने युक्तमुपवेष्टुं कदाचन ॥ १४ ॥
स्वपदात्युत्तरीयेऽथोपविश्यैवं जगाद सः ।
प्रभो ! त्वया कृतार्थोऽहं कृतोऽभ्येत्य पुरं स्वयम् ॥ १५ ॥
योग्यप्यूचे कुमार ! त्वं मान्योऽसि मम सर्वदा ।
परं निष्किञ्चनोऽस्म्येष स्वागतं किं करोमि ते ? ॥ १६ ॥
कुमारोऽप्यब्रवीदाशीर्वाद एव भवादृशाम ।
स्वागतस्य क्रियाऽस्माकमित्युक्तो सोऽवदत् पुनः ॥ १७ ॥
भक्तिः प्रेम प्रियालापः संमानं विनयस्तथा ।
प्रदानेन विना लोके सर्वमेतद् न शोभते ॥ १८ ॥
कुमारः पुनरप्यूचे सम्यगदृष्टयावलोकनम् ।
सम्यगाज्ञाप्रदानं च विश्राणनमिदं हि वः ॥ १९ ॥
अथाऽभाषिष्ट योगीन्द्रो भद्र ! मन्त्रोऽस्ति मे वरः ।
चक्रे तस्याऽष्ट वर्षाणि मया जापपरिश्रमः ॥ २० ॥
तस्य विघ्नप्रतिघातं यद्युत्तरजनो भवान् ।
करोति तदयं सर्वः प्रयासः सफलो भवेत ॥ २१ ॥

सोऽवदत्तन्मया कार्यं ब्रूत कस्मिन् दिने प्रभो ! ।
योगी स्माहासितचतुर्दश्यां प्रेतवने निशि ॥ २२ ॥
खड्गव्यग्रकरेणैकाकिना राजसुत ! त्वया ।
आगन्तव्यमहं तत्र स्थास्याम्यात्मचतुर्थकः ॥ २३ ॥ (युग्मम)
एवमस्त्विति जल्पित्वा कुमारः स्वगृहं गतः ।
चतुर्दश्याश्च यामिन्यां तथा तत्र ययावसौ ॥ २४ ॥
कुमारो योगिनाऽभाणि भविष्यन्ति विभीषिकाः ।
तत्त्वया रक्षणीयोऽहमेते चोत्तरसाधकाः ॥ २५ ॥
कुमारोऽवोचत स्वस्थः कुरु मन्त्रस्य साधनम् ।
को नाम कर्तुं विघ्नं ते समर्थो मयि रक्षके ॥ २६ ॥
कृत्वाऽथ मण्डलं तत्र स्थापितो योगिना शवः ।
प्रज्वाल्य वह्निं तस्याऽऽस्ये चक्रे होमविधिस्ततः ॥ २७ ॥
पूरयन्निव दिक्चक्रं गगनं स्फोटयन्निव ।
निर्घातोऽभूद् गुरुतरो विश्वं बधिरयन्निव ॥ २८ ॥
संजाताऽथ द्विधा धात्री तेन रन्ध्रेण निर्गतः ।
कालः करालः पातालाद् नर एकोऽतिभीषणः ॥ २९ ॥
ऊचे च किमरे ! पाप ! दिव्यकान्ताभिलाषुकः ।
क्षेत्रपालोऽत्र विख्यातो मेघनादस्त्वया नहि ॥ ३० ॥
मम पूजामकृत्वा त्वं मन्त्रसिद्धिं समीहसे ।
एषोऽपि राजतनयस्त्वयार्यो विप्रतारितः ॥ ३१ ॥
इत्युक्त्वा सिंहनादं सो विदधे तज्जिघांसया ।
त्रयोऽपि योगिनः शिष्या निपेतुस्ते महीतले ॥ ३२ ॥

सोऽथ प्रोक्तः कुमारेण रे[1] ! त्वं गर्जसि किं वृथा ?।
विद्यते तव शक्तिश्चेत्तद्युध्यस्व मया सह ॥ ३३ ॥
कुमारोऽप्यमुचत् खड्गं तं निरीक्ष्य निरायुधम्।
प्रचण्डभुजदण्डाभ्यां तौ युद्धं चक्रतुस्ततः ॥ ३४ ॥
युध्यमानोऽथ स क्षेत्रपालो बलवता क्षणात्।
कुमारेण समाक्रान्तो वज्रसारस्वबाहुना ॥ ३५ ॥
सोऽथ तुष्टोऽब्रवीत् साधो ! निर्जितोऽहं त्वया खलु।
याचस्व रुचितं किञ्चिद्यत्ते सम्पादयाम्यहम् ॥ ३६ ॥
जगादैवं कुमारस्तं विमुच्य स्वभुजग्रहात्।
चेत्सिद्धोऽसि कुरु त्वं तद्योगिनोऽस्य समीहितम ॥ ३७ ॥
प्रोक्तं क्षेत्राधिपेनास्य यथेप्सितफलप्रदः।
सिद्धः सर्वोत्तमो मन्त्रो माहात्म्येन तवैव हि ॥ ३८ ॥
ततः स्वं वाञ्छितं ब्रूहि येन तत्पूरयाम्यहम्।
महाभाग्य ! भवेद्यस्मादमोघं देवदर्शनम् ॥ ३९ ॥
कुमारेण ततोऽभाणि यद्येव तत्तथा कुरु।
यथा मे वश्यमायाति भार्या कनकवत्यसौ ॥ ४० ॥
ज्ञात्वा ज्ञानेन सोऽवादीद् भाविनी सा वशे तव।
नूनं कामितरूपेण तच्च भावितवानथ ॥ ४१ ॥
एवं दत्त्वा वरं तस्याऽदृश्योऽभूत् क्षेत्रपालकः।
सिद्धमन्त्रः स योगीन्द्रः कुमारं प्रशशंस च ॥ ४२ ॥

---

(१) अभो।

स्मर्तव्योऽहं त्वया भूयः परोपकृतिकर्मठ ! ।
इत्युदित्वा निजं स्थानं शिष्यैः सह ययावसौ ॥ ४३ ॥
प्रक्षाल्याङ्गं कुमारोऽपि प्रविवेश निजं गृहम् ।
सुष्वाप तत्र शय्यायां [1]वीरवेषं विमुच्य तम् ॥ ४४ ॥
द्वितीयदिनयामिन्या आद्ययामे गते सति ।
अदृश्यरूपवान् सोऽथ प्रियायाः सदनं ययौ ॥ ४५ ॥
ददर्श तत्र कनकवतीं चेटीद्वयाऽन्विताम् ।
एवमूचे च सा दास्यौ क्रियन्माना निशा हले ! ॥ ४६ ॥
ताभ्यामूचे न चाद्याऽपि पूर्यते प्रहरद्वयी ।
वर्त्तते तव गमनवेला स्वामिनि ! संप्रति ॥ ४७ ॥
ततः स्नातविलिप्ताङ्गी वस्त्रालङ्करणान्विता ।
देवावाससमानं सा विमानं निर्ममे क्षणात् ॥ ४८ ॥
तत्राधिरुह्य दासीभ्यां सह यावच्चचाल सा ।
तद् दृष्ट्वा गुणधर्मोऽपि दध्यौ तावत् सविस्मयः ॥ ४९ ॥
अहो ! विमानमनया खेचर्येव कृतं कथम् ।
अत्रारुह्य त्रियामायां कुत्र चैषा प्रयास्यति ॥ ५० ॥
अथवा किं विकल्पेनाऽदृश्यरूपोऽनया सह ।
गत्वाऽहमपि वीक्षे तद् यत् करोत्यसकौ खलु ॥ ५१ ॥
इति ध्यात्वा विमानैकदेशेऽध्यारुह्य सोऽचलत् ।
उत्तराभिमुखं तच्च गत्वा दूरमथातरत् ॥ ५२ ॥

---

(१) अ अ पुरावेषं ।

महासरोवरासन्ने तत्राशोकवनान्तरे ।
एको विद्याधरस्तेन कुमारेण निरीक्षितः ॥ ५३ ॥
विमानमध्यान्निःसृत्य कुमारस्य प्रियाऽथ सा ।
कृत्वा प्रणाममेतस्य समीपे समुपाविशत् ॥ ५४ ॥
अन्याश्च योषितस्तिस्रस्तत्रागत्य प्रणम्य तम् ।
निषेदुस्तत्र चान्येऽपि खेचराः समुपाययुः ॥ ५५ ॥
तस्याऽभूद् वनखण्डस्यैशान्यां दिशि मनोहरम् ।
विशालं निर्मलं श्रीमद्युगादिजिनमन्दिरम् ॥ ५६ ॥
सुवर्णमणिसोपानं भूरिस्तम्भसमुच्छ्रितम् ।
विमानमिव देवानां तद्विभाति स्म' भूस्थितम् ॥ ५७ ॥
क्षणान्तरेण सर्वाणि जग्मुस्तानि जिनालये ।
प्रारब्धः खेचरैस्तत्र जैनस्नात्रमहोत्सवः ॥ ५८ ॥
ऊचेऽथ खेचरेन्द्रेण कन्या नृत्येऽस्यवारकः ।
तत्समाकर्ण्य कनकवल्युत्तस्थौ क्षणेन सा ॥ ५९ ॥
संयम्य परिधानं स्वं रङ्गभूमौ प्रविश्य च ।
हावभावकृतौ दक्षा चक्रे नृत्यविधिं वरम् ॥ ६० ॥
अन्यासां तिसृणां मध्याद्वीणावादनमेकका ।
वेणुतालावादनं च चक्रुर्द्वेऽस्याः क्रमेण ताः ॥ ६१ ॥
गुणधर्मकुमारोऽप्यदृश्यरूपः सविस्मयः ।
तत्रैकत्र स्थितः सर्वं तत्स्वरूपं व्यलोकयत् ॥ ६२ ॥

(१) मर्त्यस्थितम् ।

तदा च कनकवत्या नृत्यन्त्या न्यपतद्भुवि ।
सुवर्णकिङ्किणीमाला त्रुटित्वा कटिसूत्रकम् ॥ ६३ ॥
शीघ्रमेव कुमारेण प्रच्छन्नं जगृहे सका ।
आलोकिता न च प्राप्ता रङ्गस्यान्ते तया ततः ॥ ६४ ॥
स्वं स्वं स्थानं ययुः सर्वेऽप्यगात् कनकवत्यपि ।
निजावासं सचेटीका कुमारोऽपि तथैव सः ॥ ६५ ॥
सा तस्थौ स्वगृहे तच्च विमानं संहृतं तया ।
रात्रिशेषे कुमारोऽपि सुष्वापागत्य मन्दिरे ॥ ६६ ॥
मतिसागरसंज्ञस्य सख्युः पुत्रस्य मन्त्रिणः ।
किङ्किणीमालिका साऽथ कुमारेणार्पिता प्रगे ॥ ६७ ॥
इयं भद्र ! प्रियाया मेऽर्पणीया समये त्वया ।
शिक्षां दत्त्वेति तत्पार्श्वे ययौ तेन सहैव सः ॥ ६८ ॥
अभ्युत्थानं विधायाऽस्य दत्तमासनमेतया ।
कुमारो न्यषदत्तत्र तस्योपान्ते सखा च सः ॥ ६९ ॥
सारिक्रीडां प्रकुर्वत्या कुमारो विजितस्तया ।
किञ्चिद्भूषणकं नाथ ! सारयेत्युदितं ततः ॥ ७० ॥
तेनावलोकितं वक्त्रं सख्युः सोऽपि समार्पयत् ।
किङ्किणीमालिकां तस्याः कृष्ट्वा निवसनाम्बरात् ॥ ७१ ॥
दृष्ट्वा सोचे मदीयेयं युवाभ्यां क्षुद्रघण्टिका ।
क्व सम्प्राप्ता कुमारोऽथावादीत् कुत्र पपात ते ? ॥ ७२ ॥
स्थानं सम्यग् न जानामि तयेत्युक्ते नृपात्मजः ।
उवाच मम मित्रोऽयं महानैमित्तिकः प्रिये ! ॥ ७३ ॥

पातस्थानं तवैतस्याः कथयिष्यति निश्चितम्।
पृष्टस्तया सोऽप्यवादीत् श्वोऽहं कथयितास्मि ते ॥ ७४ ॥
अथोत्थाय समायातः कुमारो निजमन्दिरम्।
पुनस्तथैव तच्चैत्ये ययौ रात्रौ तया सह ॥ ७५ ॥
वीणाया वादनं तस्याः कुर्वत्याः पतितं तदा।
कथञ्चिद् नूपुरं पादात् कुमारेणाऽऽददे च तत् ॥ ७६ ॥
तदप्यन्विष्य बहुधा सा स्वगेहं समागता।
अर्पयामास तदपि मित्रस्य नृपनन्दनः ॥ ७७ ॥
द्वितीयेऽहनि तद्गेहे सोऽथ मित्रसमन्वितः।
प्रययावुपविष्टश्च तया दत्तासने प्रभुः ॥ ७८ ॥
शास्त्रगोष्ठीं क्षणं कृत्वा तया स मतिसागरः।
पृष्टो निरूपितं भद्र! किं निमित्तं त्वया वद? ॥ ७९ ॥
सोऽथावादीन्निमित्तस्य बलेन ननु वेद्म्यहम्।
तवान्यदपि तन्वङ्गि! नष्टं किञ्चिद् विभूषणम् ॥ ८० ॥
ततः साशङ्कचित्ताऽपि सावहित्था जगाद सा।
किं तद्विभूषणं नाम निमित्तज्ञ! निवेदय ॥ ८१ ॥
किं त्वं स्वयं न जानासीत्युक्ता भर्ताऽब्रवीत् पुनः।
जानामि न पुनस्तस्य पातस्थानं स्मराम्यहम् ॥ ८२ ॥
कुमारोऽवददन्येन केनचित् कथितं मम।
दूरं गतायास्त्वत्पत्न्या नूपुरं च्युतमित्यहो! ॥ ८३ ॥
तद्येन जगृहे सुभ्रु! विज्ञातः स मया नरः।
गृहीतं नूपुरं तच्च तस्य हस्ताद् बलादपि ॥ ८४ ॥

दृष्टौ कनकवत्येवं प्रयोगेणेह केनचित् ।
मद्भर्त्ता मम वृत्तान्तो नूनं सर्वोऽपि वीक्षितः ॥ ८५ ॥

अथवा

क्षुरभद्रं कला चान्द्री चौरिका क्रीडितानि च ।
प्रकटानि तृतीयेऽह्नि स्युश्छन्नं सुकृतानि च ॥ ८६ ॥
विचिन्त्यैवमभाषिष्ट तन्मञ्जीरं क्व मे प्रिय ! ।
समर्पितं च तत्तस्यास्तन्मित्रेण तदाज्ञया ॥ ८७ ॥
ततश्च सा पुनः स्माह सत्यमाख्याहि कान्त ! मे ।
इदं त्वया क्व सम्प्राप्तं सोऽवदत् पतितं क्व ते ? ॥ ८८ ॥
यत्र स्थाने पपातेदं तद् दृष्टं भवता न वा ।
स तस्या इति पृच्छन्त्या भूयोऽनिष्टोत्तरं व्यधात् ॥ ८९ ॥
सोचे स्वयं त्वया दृष्टं तत्स्थानं यदि तद्वरम् ।
तस्मेऽग्निनाऽपि नो शुद्धिर्यद्यन्येन निवेदितम् ॥ ९० ॥
एवमुक्त्वाऽसकौ वामकरन्यस्तशिरोधरा ।
चिन्तया विगतोत्साहा बभूवाधोमुखी क्षणात् ॥ ९१ ॥
हासयित्वा कुमारस्तां परिहासस्य वार्तया ।
गतो निजगृहं रात्रौ तथैव पुनरराययौ ॥ ९२ ॥
सा सख्याऽवान्तरेऽभाणि वेलातिक्रामति स्फुटम् ।
रोषं विद्याधरः कर्त्ता स्वामिन्येवं विचिन्तय ॥ ९३ ॥
ततो दीर्घं विनिश्वस्य तयैवं परिभाषितम् ।
सख्येतद्विषमं कार्यं मन्दभाग्या करोमि किम् ? ॥ ९४ ॥

यतः प्रवर्त्तमानाऽहं कुमारीत्वे पितुर्गृहे ।
तेन विद्याधरेन्द्रेण शपथं कारिता ह्यमुम् ॥ ९५ ॥
मयाऽनुज्ञातया कान्तः सेवनीयस्त्वया खलु ।
'आगन्तव्यं तथावश्यं निश्यपान्ते सदा मम ॥ ९६ ॥
पित्रोर्मयोपरोधेनाऽनुरागेण च राजसूः ।
तदूढाऽभिमतश्चाऽभूत् तस्याऽहमपि सम्मता ॥ ९७ ॥
कथञ्चित्तत्र गच्छन्सौ ज्ञाताऽहममुना सखि ! ।
सोऽपि विद्याधरोऽनेन साक्षादेव विलोकितः ॥ ९८ ॥
ततो मे वल्लभस्तेन खेचरेण हनिष्यते ।
हन्ताऽथवा खेचरो मामित्याशङ्कां करोम्यहम् ॥ ९९ ॥

अन्यच्च —

नवीनयौवनारम्भो बह्वपायः प्रवर्तते ।
उत्तमे च मम ख्याते पितृश्वशुरयोः कुले ॥ २०० ॥
अत्यन्तविषमो लोको यद्वा तद्वा प्रजल्पति ।
कार्याणां गहनत्वेनाकुलीभूताऽस्मि सर्वथा ॥ १ ॥
सोचे स्वामिनि ' यद्येवं तिष्ठ त्वं तत्र याम्यहम् ।
सखी मेऽपटुदेहाऽस्तीत्याख्यास्यामि तदग्रतः ॥ २ ॥
अयो कनकवत्याख्यदेवं कुरु शुभाशये ' ।
इत्युक्त्वार्पयति स्माऽस्या विमानं विरचय्य सा ॥ ३ ॥

---

( १ ) अ विमानमाह्वदया पार्श्वे समागम्यं च मे निशि ।

तस्मिन्नारुह्य सा दासी ययौ तत्र तया सह ।
गुणधर्मकुमारोऽपि चिन्तयन्निति मानसे ॥ ४ ॥
अद्य तस्याऽपनेष्यामि ध्रुवं विद्याधरेशताम् ।
गुर्वीं च प्रेक्षणश्रद्धां जीवलोकनिवासिनाम् ॥ ५ ॥
प्रारब्धं खेचरैः स्नात्रमथ श्रीमज्जिनेशितुः ।
चेटी विमानादुत्तीर्य प्राविशत् सा जिनालये ॥ ६ ॥
कुमारोऽपि तथैवाऽस्थाच्छन्नः सर्वं विलोकयन् ।
एकेन खेचरेणैवं चेटिका सा प्रजल्पिता ॥ ७ ॥
किमद्य महती वेला लग्ना ते स्वामिनी क्व वा ।
साऽपि कृत्वोत्तरं पूर्वमूचेऽहं प्रेषिता तया ॥ ८ ॥
तच्छ्रुत्वा खेचरेन्द्रोऽसौ कोपेन स्फुरिताऽधरः ।
प्रोवाच कुरुत स्नात्रं भो यूयं वृषभप्रभोः ॥ ९ ॥
अहं त्वस्याश्चिकित्सामि पापिष्ठायाः शरीरकम् ।
इत्युक्त्वा दासचेटीं तां मूर्धजेष्वग्रहीदसौ ॥ १० ॥
कुमारोऽपि परिकरं बबन्ध निबिडं तदा ।
खड्गं च प्रगुणीचक्रे भग्नस्व प्रेक्षणोत्सवः ॥ ११ ॥
ऊचे विद्याधरश्चेटीं तदाटौ रुधिरेण मे ।
उपशाम्यतु कोपाग्निः पश्चाद् युक्तं करिष्यते ॥ १२ ॥
तत्त्वं स्मराभीष्टदेव पश्चत्वसमयेऽधुना ।
प्रतिपद्यस्व शरणं तं च यः प्रतिभाति ते ॥ १३ ॥
साऽवादीदेष सर्वज्ञो देवासुरनरार्चितः ।
ममाभीष्टदेवो भगवान् स्मृतः श्रीवृषभो मया ॥ १४ ॥

तं दृष्ट्वा कनकवत्या पृष्टा दासी यथा हले ! ।
हतोऽद्य मम कान्तेन दुष्टविद्याधरः स किम् ? ॥ ३६ ॥
ततश्च तद्वधोदन्तस्तया तस्या निवेदितः ।
स्वभर्तृपौरुषोत्कर्षमाकर्ण्य मुमुदे च सा ॥ ३७ ॥
गुणधर्मकुमारोऽथ कृत्वा वार्तां तया सह ।
तत्रैव शर्वरीशेषे सुष्वाप स्नेहनिर्भरः ॥ ३८ ॥
विद्याधरस्य तस्याऽथाऽनुजेन क्रुद्धचेतसा ।
उत्पाट्य सोऽर्णवेऽक्षेपि मुक्ता चान्यत्र तत्प्रियाम् ॥ ३९ ॥
लब्ध्वा फलहकं किञ्चित् सप्तरात्रेण सोऽम्बुधेः ।
आससाद तटं तत्राऽद्राक्षीत्तापसमेककम् ॥ ४० ॥
ततश्च सममेतेन स गतस्तापसाश्रमम् ।
ददर्श तत्र कनकवतीं स निजवल्लभाम् ॥ ४१ ॥
कुमारोऽथ कुलपतेः समीपे विहितानतिः ।
निषण्णो भणितस्तेन भद्रेयं किम् ते प्रिया ? ॥ ४२ ॥
ओमिति भणिते तेन सोऽब्रवीच्च दिनादितः ।
अतिक्रान्ते तृतीयेऽह्नि संप्राप्ता काननाऽन्तरे ॥ ४३ ॥
उद्बध्य तरुशाखायामात्मानं मर्तुमुद्यताम् ।
इमिकामहमद्राक्षं त्वद्वियोगेन सुन्दर ! ॥ ४४ ॥ ( युग्मम् )
छित्त्वा पाशं मया सेयं कथञ्चिद्दूषिता मृतेः ।
त्वदागतिं ज्ञानबलाद् ज्ञात्वाऽऽख्याय च तोषिता ॥ ४५ ॥
कदल्यादितरुफलैः प्राणवृत्तिं विधाय तौ ।
रात्रौ सुषुपतुस्तत्र विविक्तेऽथ लतागृहे ॥ ४६ ॥

भूयोऽप्युत्पाट्य खेटेन प्रक्षिप्तौ तौ महार्णवे ।
संप्राप्तफलकौ तीरमासाद्य मिलितौ पुनः ॥ ४७ ॥
कुमारोऽवोचदेतानि विधेर्विलसितान्यहो ! ।
विषयाऽऽसक्तचित्तानां विपदो वा न दुर्लभाः ॥ ४८ ॥
अनेनैव विरागेण त्यक्ताऽशेषपरिग्रहाः ।
निर्ममत्वा महासत्त्वास्तपः कुर्वन्ति साधवः ॥ ४९ ॥
अथो कनकवल्यूचे नाथ ! त्वं सति पौरुषे ।
विषादं किं करोष्यद्याऽनाप्तमर्त्यफलोऽसि यत् ॥ ५० ॥
दीनोद्धारो न विदधे नैकच्छत्रा कृता मही ।
विषया नोपभुक्ताश्च प्रकामं खिद्यसेऽङ्ग ! किम् ? ॥ ५१ ॥
ततस्तस्य गिरा रात्रौ जाग्रता तेन खेचरः ।
स आगतो निर्जितश्च जीवन् मुक्तो महात्मना ॥ ५२ ॥
अनुज्ञाप्य कुलपतिं स गतः क्वाऽपि पत्तने ।
सूरिं तद्बहिरद्राक्षीद्गुणरत्नमहोदधिम् ॥ ५३ ॥
तं नत्वा सप्रियोऽप्येष मोहनिद्रानिवारिणीम् ।
शुश्राव देशनां पुण्यपादपाराममारणीम् ॥ ५४ ॥
सूरिं नत्वाऽन्यतो गत्वा स जगाद विरागवान् ।
प्रियेऽस्य सद्गुरोः पार्श्वे प्रव्रज्या गृह्यतेऽधुना ॥ ५५ ॥
विषयेष्वविरक्ता सा जगादाद्यापि नौ नवम् ।
यौवनं वर्त्तते कान्त ! तद् व्रतं क्रियते कथम् ? ॥ ५६ ॥
सोऽवदद्दृढभावेऽपि केषाञ्चिद्विषयैषिता ।
दृश्यते यौवनस्थानामप्यन्येषां विरागिता ॥ ५७ ॥

दृष्ट्वा किञ्चिदतिश्यामाननं स्वावमानताम् ।
विज्ञाय च यथायुक्तं कार्यमित्युक्तवत्यसौ ॥ ५८ ॥
गुणधर्मोऽथ तद्वाक्यमङ्गीकृत्याऽविशत् पुरे ।
किञ्चिद् भोजनमानेतुं तस्थौ तत्रैव सा पुनः ॥ ५९ ॥
तदा च गुणचन्द्राख्यो राजपुत्रः समागतः ।
वनस्थां यौवनस्थां तां दृष्ट्वा जज्ञेऽनुरागवान् ॥ ६० ॥
इत्युवाच च नम्राऽङ्गि! काऽसि त्वं केन हेतुना ।
तिष्ठस्येकाकिनी बाले ! किं ते भर्ता न विद्यते ? ॥ ६१ ॥
विज्ञाय साऽनुरागं तं विरक्तं च निजं पतिम् ।
साऽप्याख्याय स्ववृत्तान्तं जाता तदनुरागिणी ॥ ६२ ॥
प्रार्थनातत्परं तं च साऽभाषत कथञ्चन ।
[1]वञ्चयित्वा स्वभर्तारमेष्यामि तव मन्दिरम् ॥ ६३ ॥
इत्युक्तः स ययौ स्वौकां गुणधर्मोऽत्र पत्तने ।
दुरोदरक्रीडया स्वमर्जयामास किञ्चन ॥ ६४ ॥
कारयित्वा गृहीत्वाऽथ मण्डकान् स समागतः ।
उद्याने प्रियया सार्धं विदधे भोजनं ततः ॥ ६५ ॥
चिन्तया शून्यचित्तत्वाद्वाचा विलिखनेन च ।
इङ्गितज्ञः कुमारोऽसावन्यासक्तां विवेद ताम् ॥ ६६ ॥
अथोत्थाय वनस्यान्त ब्रह्मन्तौ भ्रमश्रमौ ।
[2]पृष्टः केनाऽपि किं राजपुत्रोऽद्याप्यत्र तिष्ठति ॥ ६७ ॥

(१) ज भर्तारं वञ्चयित्वाहमेष्यामि ।

(२) ज पुंसैकेनेति पृष्ट किमस्त्यन्याऽप्यत्र राजसू. ॥ ६७ ॥

कोऽसौ राजसुत इति गुणधर्मस्य पृच्छतः ।
[1]सोऽवदद् गुणचन्द्राख्यो राजसूनुरिहाऽऽगमत्॥ ६८ ॥
कयाचिद्योषिता सार्धं सोऽभूद्वार्त्तापरायणः ।
अहं तदाज्ञयाऽन्यत्र गत्वाऽऽयातोऽस्मि सुन्दर ! ॥ ६९ ॥
तत्पृच्छामि भवन्तं किं गता सा तस्य मन्दिरे ? ।
गतेत्युक्त्वा कुमारोऽपि पुरुषं विससर्ज तम् ॥ ७० ॥
दध्यौ च नोपकारेण नौजसा हन्त ! योषितः ।
गृह्यन्ते न कुलं शीलं मर्यादां गणयन्ति च ॥ ७१ ॥
रहो न जायते यावत् क्षणं प्रार्थयिता न च ।
सतीत्वं तावदेवामां नारीणां नारदोऽब्रवीत् ॥ ७२ ॥
ततस्तां मातुलगृहे मुक्त्वाऽऽसन्नपुरस्थिते ।
स समीपे मुनीन्द्राणां तेषामेवाऽभवद् व्रती ॥ ७३ ॥
ततश्चोग्रं तपः कृत्वा मृत्वा गत्वा सुरालयम् ।
संप्राप्य च मनुष्यत्वं निर्वाणं समवाप्स्यति ॥ ७४ ॥
मन्दिरात् मातुलस्याऽथ सा [2]निर्गत्य कथञ्चन ।
गुणचन्द्रकुमारस्य प्रिया कनकवत्यभूत् ॥ ७५ ॥
तदन्यगेहिनीदत्तगरलेन विपद्य सा ।
रौद्रध्यानवती प्राप्ता चतुर्थीं नरकावनौ ॥ ७६ ॥
उद्धृत्य नरकादेषा भ्रमिष्यति भवं चिरम् ।
एवं ददाति विषयप्रमादो नृपतेऽसुखम् ॥ ७७ ॥

॥ इति गुणधर्मकनकवतीकथानकम् ॥

(१) ड स आख्यद् । (२) ड ज ञ नि सृत्य ।

कषायविषये राजन्! नागदत्तकथानकम्।
तीर्थे यद्वर्धमानस्य भावि तत् कथयामि ते ॥ ७८ ॥
जम्बूद्वीपस्य भरतेऽस्मिन् वसन्तपुरे वरे।
समृद्धवसुदत्ताख्यावभूतां वणिजौ वरौ ॥ ७९ ॥
द्वावप्यनुद्धतावल्पकषायौ सरलाशयौ।
चक्रतुर्व्यवहारं तौ मैत्रीभावयुतौ समम् ॥ ८० ॥
यत्किञ्चित् प्रकरोत्येकः कार्यं तदितरेण च।
इत्येकयोगकारित्वाद् निश्चयो वर्तते तयोः ॥ ८१ ॥
अन्यदोद्यानसंप्राप्तौ मुनीन्द्रं तावपश्यताम्।
वज्रगुप्ताऽभिधं धर्ममाचक्षाणं सभान्तरे ॥ ८२ ॥
तं नमस्कृत्य तत्पार्श्वे श्रुत्वा धर्मं शुभाशयौ।
प्रतिपन्नौ सुसाधुत्वं तौ परित्यक्तबन्धनौ ॥ ८३ ॥
कृत्वा संलेखनामन्तेऽनशनं प्रतिपद्य तौ।
विपद्य त्रिदिवं प्राप्तौ तत्राऽपि प्रीतिशालिनौ ॥ ८४ ॥
यः पूर्वमावयोर्मध्याच्च्यवते सोऽपरेण हि।
संस्थाप्यः सर्वदा धर्मे संकेतमिति चक्रतुः ॥ ८५ ॥ युग्मम्।
जीवः समृद्धदत्तस्य च्युत्वाऽत्र भारतावनौ।
पुरे धारानिवासे सागरदत्तेभ्यमन्दिरे ॥ ८६ ॥
भार्याया धनदत्तायाः कुक्षिजो वररूपवान्।
श्रीनागदेवतादत्तवरेण समभूत् सुतः ॥ ८७ ॥ युग्मम्।
नागदत्ताऽभिधानोऽसौ द्विसप्ततिकलान्वितः।
गान्धर्वे निरतस्तेन जातस्तत्पूर्वनामकः ॥ ८८ ॥

वीणावाद्येऽतिदक्षश्च गारुडे कुशलोऽथ सः ।
अन्यस्मिन् दिन उद्याने क्रीडति स्म सुहृद्युतः ॥ ८९ ॥
वसुदत्तसुरेणैष बहुधा प्रतिबोधितः ।
न किञ्चिद् मन्यते देवस्ततश्चैवं व्यचिन्तयत् ॥ ९० ॥
अत्यन्तसुखितो नाऽयं तावद्धर्मं करिष्यति ।
न यावत् पातितः कष्टे प्राणसंशयकारिणि ॥ ९१ ॥
विचिन्त्यैवं मुने रूपं धृतसर्पकरण्डकम् ।
स रजोहरणमुखवस्त्रिकारहितं व्यधात् ॥ ९२ ॥
पप्रच्छ नागदत्तस्तं यान्तमासन्नवर्त्मना ।
एतेषु त्वत्करण्डेषु विद्यते भो नरेन्द्र ! किम् ? ॥ ९३ ॥
सर्पा इत्युदिते तेन सोऽब्रवीत्तर्हि तानहम् ।
क्रीडयिष्यामि नागांस्तु मदीयान् क्रीडय त्वकम् ॥ ९४ ॥
वार्तिकोऽप्यवदद् वार्ता न कर्तव्या त्वयेदृशी ।
शक्याः क्रीडयितुं नैते यन्मदीया महोरगाः ॥ ९५ ॥
देवानामपि दुर्ग्राह्यांस्त्वमेतान् ननु बालकः ।
ग्रहीष्यसि कथं मूढ ! मन्त्रौषधिबलं विना ॥ ९६ ॥
नागोऽभाषत पश्य त्वं गृह्यमाणानिमान् मया ।
त्वं मे हीत्वा गृहाणादौ सोऽवोचद् मुच्यतामिति ॥ ९७ ॥
नागदत्तेन मुक्तास्ते लगन्ति स्म न तत्तनौ ।
लग्ना वा देवशक्तित्वात् कुर्वन्ति स्म व्यथां नहि ॥ ९८ ॥
गान्धर्वनागदत्तोऽथ जजल्पैवं समत्सरः ।
मुञ्च त्वमपि सर्पान् स्वान् रे ! विलम्बयसेऽत्र किम् ? ॥९९॥

मेलय स्वजनान् सर्वान् नृपं च कुरु साक्षिकम् ।
इति गारुडिकेनोक्ते नागदत्तस्तथाऽकरोत् ॥ ४०० ॥
जगादोच्चैःस्वरं तेषां पुरो गारुडिकब्रुवः ।
भूत्वाऽवहितचित्ता भो ! यूयं शृणुत मद्वचः ॥ १ ॥
गान्धर्वनागदत्तो मे सर्पैः क्रीडितुमिच्छति ।
यद्यसौ दश्यते तैस्तद् देयो दोषो न सर्वथा ॥ २ ॥
स्वजनैर्वारितो नैष विरराम यदा तदा ।
मुमोच परितस्तस्य पन्नगान् सोऽहिवाहकः ॥ ३ ॥
जजल्प च महाक्रूरा ममैते हन्त ! जिह्मगाः ।
अमीषां नाम माहात्म्यं प्रत्येकं कथयामि च ॥ ४ ॥
आरक्तनयनः क्रूरो द्विजिह्वो विषपूरितः ।
क्रोधाभिधानः पूर्वस्यामादिमोऽयं सरीसृपः ॥ ५ ॥
अयमष्टफटाटोपभीषणः स्तब्धवर्ष्मकः ।
याम्यायां यमसंकाशो मानो नाम महोरगः ॥ ६ ॥
वञ्चनाकुशला वक्रगमना पश्चिमाश्रिता ।
इयं मायाह्वया नागी धर्तुं केनेह शक्यते ? ॥ ७ ॥
अयं हि दिशि कौबेर्यां लोभो नाम भुजङ्गमः ।
समुद्र इव दुष्पूरो दष्टो येन भवेद् नरः ॥ ८ ॥
य एतैर्दश्यते प्राणी चतुर्भिरपि पन्नगैः ।
पतत्यधः स नियमादालम्बनविवर्जितः ॥ ९ ॥
गान्धर्वनागदत्तोऽथ तमूचे किमु निष्फलम् ? ।
करोषि वाचां विस्तारं मुञ्च शीघ्रमिमानरे ॥ १० ॥

ततस्तेन विनिर्मुक्तैर्मन्त्रौषध्यनिवारितैः ।
दष्टः श्रेष्ठिसुतो नागैश्चतुर्भिरिमकैः समम् ॥ ११ ॥
पपात च धरापीठे तन्मन्त्रैर्विविधौषधैः ।
लेभे कृतोपचारोऽपि चेतनां नैषदप्यसौ ॥ १२ ॥
अमुं जीवापयेत्युक्तस्तद्बन्धुभिरुवाच सः ।
ततो जीवत्यसौ हंहो ! कुर्याच्चेद्दुष्करक्रियाम् ॥ १३ ॥
अहमप्यग्रितोऽभूवममीभिर्दुष्टपन्नगैः ।
एतद्विषनिरासार्थं करोम्येवंविधां क्रियाम् ॥ १४ ॥
लुञ्चामि [1]सकलान् केशान् मुखशीर्षविनिर्गतान् ।
श्वेतानि सप्रमाणानि वासांसि निवसामि च ॥ १५ ॥
विविधं च तपःकर्म चतुर्थादि करोम्यहम् ।
भुञ्जेऽतिरूक्षमाहारं तपःपारणकेऽप्यहो ! ॥ १६ ॥
अत्याहारं न गृह्णामि पिबामि विरसं पयः ।
उदेति तद्विषं भूयो यद्येवं न करोम्यहम् ॥ १७ ॥
कदाचित् काननस्याऽन्तः कदाचित् पर्वतोपरि ।
तिष्ठाम्यहं कदाचिच्च शून्यागारश्मशानयोः ॥ १८ ॥
सहे परीषहान् सम्यग् मध्यस्थो द्वेषरागयोः ।
एवं क्रियां कुर्वतो मे भवेद् नो विषविक्रिया ॥ १९ ॥
स्तोकाहारोऽल्पनिद्रश्च यो भवेन्मितभाषकः ।
न केवलममी तस्य वशे स्युस्त्रिदशा अपि ॥ २० ॥

(१) ङ अ ञ निखिलान् ।

किं बहुक्तेन यद्येवंविधया क्रियया ऽसकौ ।
संतिष्ठते यतो जीवत्यन्यथा म्रियते ध्रुवम् ॥ २१ ॥
क्रियां कर्तेति लोकेन भणितेऽमरवार्तिकः ।
आलिख्य मण्डलं विद्यामुच्चचारेति पावनीम् ॥ २२ ॥
सर्वसिद्धान् नमस्कृत्य महाविद्यास्तथाऽखिलाः ।
वक्ष्ये दण्डविधिमहं विषवेगविनाशनम् ॥ २३ ॥
प्राणातिपातमनृतमदत्तस्वं च मैथुनम् ।
परिग्रहं च सकलं यावज्जीवं विवर्जयेः ॥ २४ ॥
अनया विद्यया स्वाहायुक्तया स महभ्यसत् ।
निद्राक्षय इवोत्तस्थौ प्रभावेन दिवौकसः ॥ २५ ॥
स्वजनैर्वार्तिकादिष्टा क्रिया तस्य न्यवेद्यत ।
अश्रद्दधत् स तां गेहाऽभिमुखः प्राचलद् द्रुतम् ॥ २६ ॥
पपात च क्षणात् पृथ्व्यां पुनर्निर्नष्टचेतनः ।
पुनः प्रार्थनया स्वानामुल्लाघो सकता कृतः ॥ २७ ॥
एवं तृतीयवेलायां विहिते गाढनिश्चये ।
गान्धर्वनागदत्तोऽपि तस्य वाक्यममन्यत ॥ २८ ॥
देवो नीत्वा तमुद्याने सुरत्वं स्व निवेद्य च ।
तस्याचख्यौ पूर्वभव सोऽपि जातिं ततोऽस्मरत् ॥ २९ ॥
एवं प्रत्येकबुद्धोऽसौ संजातो मुनिपुङ्गवः ।
तं वन्दित्वाऽमरः सोऽपि जगाम स्थानमात्मनः ॥ ३० ॥
चतुरोऽपि कषायाऽहीन् नियम्याङ्करण्डके ।
रक्षयामास स मुनिर्यत्नान्निर्गच्छतो बहिः ॥ ३१ ॥

एवं गच्छति कालेऽसावुत्पाद्य वरकेवलम् ।
महानन्दपदं प्राप हत्वा कर्मसमुच्चयम् ॥ ३२ ॥

॥ इति गान्धर्वनागदत्तकथा ॥

एवमादिप्रमादोऽयं पञ्चधाऽपि विवेकिभिः ।
हेयोऽनर्थकरो धर्मो विधेयश्च चतुर्विधः ॥ ३३ ॥
यतिश्रावकभेदाभ्यां पुनरेव द्विधा भवेत् ।
यतिधर्मश्च दशधा ज्ञेयो भेदैः क्षमादिभिः ॥ ३४ ॥
सम्यक्त्वं प्रथमं तत्र द्वैधं त्रैधं चतुर्विधम् ।
पञ्चधा दशधा [1]चैव ज्ञेयं सूत्रानुसारतः ॥ ३५ ॥
अणुव्रतानि पञ्च स्युर्गुणपूर्वं व्रतत्रयम् ।
शिक्षापदानि चत्वारीत्युक्तो धर्मो ह्यगारिणाम् ॥ ३६ ॥
स्थूलप्राणातिपातस्य विरतिव्रतमादिमम् ।
जायते सुखदं पाल्यमानं तद्यमपाशवत् ॥ ३७ ॥

तथाहि—

इहैव भरते वाराणस्यां दुर्मर्षणो नृपः ।
बभूव कमलश्रीश्च तत्प्रिया कमलानना ॥ ३८ ॥
सुमञ्जरीति विक्रान्तस्तत्राऽभूद् दण्डपाशिकः ।
यमपाशश्च चाण्डालो जात्या नैव च कर्मणा ॥ ३९ ॥
नलदामा वणिक् तत्र दयादिगुणसंयुतः ।
सुमित्रा गेहिनी तस्य मम्मणश्च सुतोऽभवत् ॥ ४० ॥
अन्यदा वणिगानीततुरङ्गे सोऽथ भूपतिः ।

(१) क॰ चैतद् ।

आरूढोऽधिष्ठितश्चाश्वो नृपवैरिसुरेण सः ॥ ४१ ॥
उत्पत्य गगनेनैव वेगेनैयाय काननम् ।
राज्ञा मुक्तो विमुक्तश्च प्राणैरप्याशु सोऽश्वकः ॥ ४२ ॥
तत्रैको हरिणो भूपं दृष्ट्वा जातिस्मरोऽभवत् ।
एवमज्ञापयत् तं च लिखित्वाऽग्रेऽक्षरावलीम् ॥ ४३ ॥
देवलो नाम ते राजन्[1]भूवं श्रीकरीधरः ।
मृत्वार्तध्यानदोषेण जातस्तिर्यक्त्वदूषितः ॥ ४४ ॥
तेनाऽथ दर्शितं नीरं तृषितस्य महीपतेः ।
स्वस्थीभूतेऽथ तस्मिंस्तु तत्र तत्सैन्यमाययौ ॥ ४५ ॥
हरिणोऽसौ कृतज्ञेन राज्ञा नीतो निजं पुरम् ।
राजदत्ताभयस्तत्र स्वेच्छया संचचार सः ॥ ४६ ॥
अन्यदा सम्मणस्याट्टे स समागात् परिभ्रमन् ।
पूर्वजन्ममत्सरेण वणिक् तस्मै चुकोप सः ॥ ४७ ॥
तातमूचे च मार्योऽयमपराधकरो मृगः । .
सोऽवदद्धन्यते जीवो [2]नापरोऽपि वणिक्कुले ॥ ४८ ॥
अयं तु भूपतेरिष्टो न हन्तव्यः सुत ! त्वया ।
तथापि निहतो रोषाद् व्याचित्तमस्याप्य सोऽमुना ॥ ४८ ॥
कुर्वन् कर्मेदृशं सोऽथ सम्मणः शृङ्गै[3]र्निहतः ।
दूरस्थितेन यमदण्डेने[4]वान्तविधायिना ॥ ५० ॥

---

(१) अ बभूव । (२) अ नाचारोऽपि ।
(३) ङ नैष्यत ।
(४) अ—म चान्तावसायिना ॥ ५० ॥

ततो निवेदितस्तेन तद्वृत्तान्तो महीपतेः ।
कोऽत्र साक्षीति राज्ञोक्ते सोऽवदज्जनकोऽस्य हि ॥ ५१ ॥
नृपाहूतेन तेनाऽपि तत्सत्यमिति जल्पितम् ।
ततोऽसौ सत्यवादीति पूजितः पृथिवीभुजा ॥ ५२ ॥
वधार्थं मम्मणस्याथ समादिष्टो महीभुजा ।
यमपाशोऽब्रवीद् देव ! नहि हिंसां करोम्यहम् ॥ ५३ ॥
कथं त्वं प्राणिनो हिंसां मातङ्गोऽपि करोषि न ।
इति पृष्टोऽवनीशेन स आख्याति स्म कारणम् ॥ ५४ ॥
हस्तिशीर्षे पुरवरे दमदन्तो वणिक्सुतः ।
अनन्ततीर्थकृत्पार्श्वे श्रुत्वा धर्ममभूद् व्रती ॥ ५५ ॥
तपः प्रकुर्वतस्तस्य लब्धयोऽनेकशोऽभवन् ।
गीतार्थो विहरन्नेकः स नगर्यामिहाययौ ॥ ५६ ॥
तस्थौ पितृवनोपान्ते कायोत्सर्गेण च स्थिरः ।
इतश्च तनयो मेऽस्ति प्रभो ! नाम्नाऽतिमुक्तकः ॥ ५७ ॥
औपसर्गिकरोगार्तो गतः पितृवनेऽथ सः ।
मुनिं ननाम नीरोगस्तस्य शक्त्या बभूव च ॥ ५८ ॥
मम तेन स्ववृत्तान्तो गृहमेत्य निवेदितः ।
ततोऽहं सकुटुम्बोऽपि तत्राऽगां रोगपीडितः ॥ ५९ ॥
मुक्तश्च व्याधिना तेन ततोऽहं श्रावकोऽभवम् ।
यावज्जीवं च हिंसाया विरतोऽस्मि धरापते ! ॥ ६० ॥
तेनैव साधुना देव ! प्रतिबोधकथा निजा ।
आख्याता मम पृष्टेन ततोऽहमपि वेद्मि ताम् ॥ ६१ ॥

ततश्च पूजितो हृष्टचेतसा स महीभुजा।
चाण्डालानां समस्तानामधिपश्च विनिर्मितः॥ ६२ ॥
अन्येन श्वपचेनाऽयं मम्मणो विनिपातितः।
यमपाशश्च मृत्वान्ते बभूव त्रिदशोत्तमः॥ ६३ ॥

॥ प्राणातिपातविरतिविषये यमपाशमातङ्गकथानकम् ॥

द्वितीयं च व्रतं नाम कन्यालीकादि पञ्चधा।
अलीकभाषणे दोषो भद्रस्येव प्रजायते॥ ६४ ॥
क्षितिप्रतिष्ठितपुरे वणिजौ धनवर्जितौ।
दुष्टबुद्धिसुबुद्ध्याख्यावभूतां [१]विदितौ जने॥ ६५ ॥
प्रपन्नसौहृदावेतौ किञ्चिदादाय पण्यकम्।
देशान्तरप्रचलितावर्थोपार्जनहेतवे॥ ६६ ॥
प्राप्तौ च क्रमयोगेण पुरे क्वाऽपि पुरातने।
दिनानि कतिचित्तत्र तस्थतुर्लाभकाङ्क्षिणौ॥ ६७ ॥
देहचिन्ताकृते क्वापि खण्डौकसि सुबुद्धिना।
उपविष्टेन संप्राप्तं निधानं किञ्चिदन्यदा॥ ६८ ॥
तद्दुष्टबुद्धिना सार्धं गृहीत्वाऽसौ व्यभालयत्।
यावत्तावच्च दीनारसहस्रं समजायत॥ ६९ ॥
कृतकृत्यौ ततश्चैतावागतौ नगरं निजम्।
तत्रेदं मन्त्रयामास दुष्टः सह सुबुद्धिना॥ ७० ॥
अर्धमर्धं विभज्येदं गृह्णीवश्चेद्धनं सखे!।
तदा संभावना गुर्वी भविष्यत्यावयोर्जने॥ ७१ ॥

(१) क-जिनशासने।

ततो निदानलाभं नौ ज्ञात्वा भूपः कथञ्चन ।
तद्ग्रहीष्यति दारिद्र्यं तदवस्थं तदावयोः ॥ ७२ ॥
गृहीत्वा शतमेकैकं शेषद्रव्यमिहैव हि ।
निक्षिप्यते वटोपान्ते संमतं तव चेद् भवेत् ॥ ७३ ॥
एवमस्त्विति तेनोक्ते रात्रौ निक्षिप्य तत्र तत् ।
प्रभाते तौ निजं गेहमेयतुर्मुदिताशयौ ॥ ७४ ॥
तद्दीनारशतमथो दुष्टबुद्धेरसद्व्ययात् ।
निष्ठितं दिवसैः कैश्चित् पुण्येनेव स्थिरेन्दिरा ॥ ७५ ॥
पुनः सुबुद्धिदुर्बुद्धी गत्वा निशि ततो धनात् ।
दीनारशतमेकैकं गृहीत्वा गृहमागतौ ॥ ७६ ॥
अन्यदा चिन्तयामास दुष्टबुद्धिर्मनस्यदः ।
सुबुद्धिं वञ्चयित्वेनं शेषं स्वं स्वीकरोम्यहम् ॥ ७७ ॥
विचिन्त्यैवं स यामिन्यां गत्वा तत्र तदाददे ।
वञ्चते जनकोऽप्यर्थलुब्धैरन्यस्य का कथा ? ॥ ७८ ॥
मित्रमूचे च तद् द्रव्यं विभज्यानीयते गृहम् ।
बहिःस्थिते च नो तस्मिंश्चिन्ता नौ याति चित्ततः ॥ ७९ ॥
तद्वाक्यमनुमेनेऽथ सुबुद्धिः सरलाशयः ।
गत्वा चखान तत् स्थानं सह तेन च दुष्टधीः ॥ ८० ॥
तत्राऽपश्यन् धनं तत्र स कूटकपटालयः ।
हा ! वञ्चितोऽस्मि केनाऽपीत्याजघान शिरोऽश्मना ॥ ८१ ॥
जगाद च त्वया तद्धि सुबुद्धेऽपहृतं खलु ।
जानाति नाऽपरः स्थानमिदमावाभ्यां विना यतः ॥ ८२ ॥

सोऽब्रवीद् हर्तुकामः स्वमभविष्यमहं यदि।
एकान्तलब्धं तत्ते नाकथयिष्यं पुराऽप्यदः॥ ८३॥
त्वं तु स्ववञ्चकत्वेन मामप्येवं विमन्यसे।
पित्तातिप्लावितो नीरमपि ज्वलितमीक्षते॥ ८४॥
एवं तौ कलहायन्तौ समीपे नृपतेर्गतौ।
इति विज्ञपयामास तमादौ सोऽथ दुर्मतिः॥ ८५॥
देवावाभ्यां निधिः क्वापि लब्धस्तेन निवेदितः।
लुब्धाभ्याममुकस्थाने निक्षिप्तश्च भिया तव॥ ८६॥
अनेन वञ्चयित्वा मां जगृहे स सुबुद्धिना।
इति ज्ञात्वा यथायुक्तं विधेहि त्वं महीपते!॥ ८७॥
राजोचे वर्ततेऽत्रार्थे साक्षिको ननु कस्तव।
विचिन्त्य सोऽवदद् दुष्टबुद्धिः पुनरिदं वचः॥ ८८॥
यस्याऽधस्ताद्धिनिक्षिप्तं तद् द्रव्यमवनीपते!।
स एव हि महावृक्षः साक्षिकोऽस्त्यत्र निश्चितम्॥ ८९॥
इदं वित्तमनेनात्तमिति वाक्यमसौ यदि।
तद्वक्ति ततो राजन्! श्रेयः सूनृतवागहम्॥ ९०॥
राजा प्रोवाच यद्येवं करिष्यामि कथञ्चन।
सत्यवाक्यो भवानेको भविष्यति ततो जने॥ ९१॥
इदं हि श्वो मया कार्यमित्युक्त्वा दुष्टबुद्धिना।
विसृष्टौ तौ नरेन्द्रेण दत्तप्रतिभुवौ गृहम्॥ ९२॥
अहो! सुदुर्घटं कार्यं कथमेष करिष्यति।
धर्मस्यैव जयो वेति ध्यायन् वेश्म ययौ सुधीः॥ ९३॥

इतरोऽपि गृहं प्राप्तो भद्राख्यं पितरं निजम् ।
प्रोवाच तात ! दीनारा मम हस्तगता इमे ॥ ९४ ॥
क्षेप्स्यामि त्वामहं नीत्वा निशायां वटकोटरे ।
आत्तं सुबुद्धिना रिक्थमिति वाच्यं त्वया प्रगे ॥ ९५ ॥
सोऽथाभाषिष्ट रे दुष्टमते ! नैतद्धि सुन्दरम् ।
उपरोधेन ते पुत्र ! कार्यमेतद् मया परम् ॥ ९६ ॥
चक्रे च स तथा तेन द्वितीयेऽह्नि महीपतेः ।
पुरः पौरजनस्यापि तमर्चित्वा महीरुहम् ॥ ९७ ॥
दुष्टबुद्धिरदोऽवादीद् गृहीतं केन तद्धनम् ।
सत्यमाख्याहि वृक्षेश ! विवादस्त्वयि तिष्ठते ॥ ९८ ॥ (युग्मम्)
वटकोटरसंस्थोऽथ भद्रश्रेष्ठी शशंस सः ।
हंहो ! सुबुद्धिनोपात्तं तद् द्रव्यमिति बुध्यताम् ॥ ९९ ॥
तच्छ्रुत्वा विस्मिताः सर्वे सुबुद्धिं चावदद् नृपः ।
अपराध्यसि भोस्तावद् निधानं मे समर्पय ॥ ५०० ॥
सोऽथ दध्यौ न तरवो जल्पन्तीह कदाचन ।
इयं हि कूटरचना दुष्टबुद्धेर्विभाव्यते ॥ १ ॥
वटस्य कोटराद्वाणी यदासौ निर्गता ततः ।
मन्ये संकेतितोऽनेन प्रक्षिप्तोऽस्त्यत्र कश्चन ॥ २ ॥
जगाद च तवावश्यमर्पणीयं मया धनम् ।
महाराज ! परं किञ्चिद्विज्ञप्यमिह विद्यते ॥ ३ ॥
ततो विज्ञपयेत्युक्तो राज्ञाऽवोचदसौ पुनः ।
जगृहे तद् मया द्रव्यं न नीतं हि गृहे परम् ॥ ४ ॥

तरुकोटरमध्येऽत्र प्रक्षिप्याऽहं गतो गृहम्।
अन्यस्मिन् दिवसे यावत्तदादातुमुपागतः॥ ५॥
तावत्तत्राऽहिमद्राक्षं फटाटोपभयङ्करम्।
देवताधिष्ठितमिदमिति चाऽचिन्तयं तदा॥ ६॥ युग्मम्।
तत्त्वं द्विरसनं द्रव्यगोप्तारं देव! हन्म्यहम्।
उपायेनेह केनापि यद्यनुज्ञा भवेत्तव॥ ७॥
एवं कुर्विति राज्ञोक्ते स मद्यस्तरुकोटरम्।
तर्पणैः पूरयामास वह्निश्च परितोऽस्य हि॥ ८॥
ततो ज्वलयितुं वह्नावारब्धे क्षणगोङ्गवः।
बभूव प्रचुरो धूमस्तेन स्पृष्टेक्षणः क्षणात्॥ ९॥
दुष्टबुद्धिः पिता सोऽथ पपात पृथिवीतले।
भद्रश्रेष्ठीति भूपेन लोकैश्चाप्युपलक्षितः॥ १०॥ (युग्मम)
किमेतदिति पृष्टश्च सर्वैरपि सकौतुकैः।
सोऽवदत् कूटसाक्षित्वमहं दुष्टेन कारितः॥ ११॥
अलीकवाक्यजं पापमिहैव फलितं मम।
इति ज्ञात्वा न वक्तव्यमहो! केनाप्यसनृतम्॥ १२॥
ततोऽसौ संस्थितो भद्रो भद्रधीः सोऽथ तत्सुतः।
राज्ञा सर्वस्वमादाय पुराद् निर्वासितो निजात॥ १३॥
सुबुद्धिस्त्वर्चितस्तेन वस्त्रालङ्करणादिभिः।
सत्यत्वात् सर्वलोकस्य प्रशंसां समवाप सः॥ १४॥
असत्यमिह लोकेऽपि ज्ञात्वैवं दुःखकारणम्।
तत्त्वया परिहर्तव्यं चक्रायुध! महीपते!॥ १५॥

॥ असत्यविषये भद्रश्रेष्ठिकथानकम् ॥

स्थूलादत्तपरित्यागसंज्ञमेतदणुव्रतम् ।
पालनीयं प्रयत्नेन गुणभृज्जिनदत्तवत् ॥ १६ ॥
वसन्तपुरमित्यस्ति पुरं पुरगुणान्वितम् ।
यथार्थनामा तत्राऽभूद् जितशत्रुर्धरापतिः ॥ १७ ॥
तनयो जिनदासस्य जिनदत्तोऽभिधानतः ।
बभूव श्रावकस्तत्र जीवाऽजीवादितत्त्ववित् ॥ १८ ॥
संप्राप्तयौवनः सोऽथ दीक्षाऽऽदानकृताशयः ।
विवाहं कुलकन्याया नेच्छति स्माऽर्थितोऽपि सन् । ॥१९॥
मित्रमण्डलसंयुक्तो ययौ चोपवनेऽन्यदा ।
उत्तुङ्गशिखरं तत्राद्राक्षीच्च जिनमन्दिरम् ॥ २० ॥
ततोऽसौ विधिना तत्र प्रविश्य कुसुमादिभिः ।
समभ्यर्च्य जिनाधीशं विदधे चैत्यवन्दनाम् ॥ २१ ॥
आगत्य कन्यकाथोत्तरीयपिहिताननां ।
शुभद्रव्यैर्जिनाऽर्चायाश्चकार मुखमण्डनम् ॥ २२ ॥
कपोले जिनबिम्बस्य पत्रवल्लीं वितन्वतीम् ।
तां वीक्ष्य विस्मितोवाच जिनदत्तः सखीनिति ॥ २३ ॥
कस्येयं तनया ? हंहो ! तेऽवोचन् विदिता न किम् ? ।
तवेयं प्रियमित्रस्य सार्थवाहस्य नन्दिनी ॥ २४ ॥
एषा जिनमतीनाम्नी यथा नारीशिरोमणिः ।
तथा त्वमपि रूपाद्यैर्गुणैर्नरशिरोमणिः ॥ २५ ॥
करोति गृहवासेन संयोगं युवयोर्यदि ।

वेधास्तत्तस्य निर्माणप्रयासः सफलो भवेत् ॥ २६ ॥
जिनदत्तोऽभ्यधाद् युक्तं न युष्माभिर्विधीयते ।
वयस्या यत् कृतं हास्यमिह स्थाने मया सह ॥ २७ ॥
पराभिप्रायविज्ञानदक्षा अप्यनुगामिनः ।
किं न जानीत मां यूयं दीक्षाऽऽदानकृतागयम ॥ २८ ॥
मुखमण्डनविज्ञानकौतुकेन मयाऽपि भोः । ।
पृष्टमेतदन्यथा तु स्त्रीकथात्र न युज्यते ॥ २९ ॥
इत्युदित्वा स्थितः सोऽथ जिनमत्या निरीक्षितः ।
अनुरागश्च संजातस्तस्यास्तस्मिन् शुभाकृतौ ॥ ३० ॥
ज्ञातः सखीजनेनाऽस्या अभिप्रायो मनोगतः ।
संप्राप्तेन गृहं सोऽथ पित्रोरग्रे निवेदितः ॥ ३१ ॥
जिनदत्तोऽपि सदनं गत्वा कृत्वा च भोजनम् ।
हट्टे गत्वा व्यवहृतिं चक्रेऽर्थार्जनहेतवे ॥ ३२ ॥
जिनमत्याः पिता गत्वा जिनदासस्य सन्निधौ ।
कन्याप्रदानं विदधेऽनुमेने सोऽपि तत्सुदा ॥ ३३ ॥
गृहप्राप्तस्य वृत्तान्तः पित्रा सूनोर्निवेदितः ।
असौ दीक्षाभिलाषित्वादुद्वाहं नेच्छति स्म च ॥ ३४ ॥
जिनमन्दिरयानादि स्ववृत्तान्तं निवेद्य सः ।
पित्रा पुनर्विवाहार्थं भणितो मौनमाश्रितः ॥ ३५ ॥
अन्यदा कन्यका साऽथ निर्गच्छन्ती गृहात् निजात् ।
दृष्टा पुरारक्षकेन वसुदत्तेन भोगिना ॥ ३६ ॥
ततो जातानुरागेण तेन गत्वाऽथ तत्पितुः ।

पार्श्वे सा याचिता दत्ता जिनस्येति च सोऽब्रवीत् ॥ ३७ ॥
ततो रुष्टः स दुष्टात्मा मारणान्तिकया धिया ।
संजातो जिनदत्तस्य च्छिद्रान्वेषी दिवानिशम् ॥ ३८ ॥
अश्ववाहिकया राज्ञो गतस्योद्यानमन्यदा ।
पपात कुण्डलं कर्णाच्चलत्यश्वेऽतिरंहसा ॥ ३९ ॥
तत्रागतेन विज्ञातं तेन राजकुले ततः ।
वसुदत्तः समादिष्टस्तदन्वेषण'हेतवे ॥ ४० ॥
तदर्थं सोऽचलद्यावत्तावत्तस्य पुरःसरः ।
जिनदत्तो बहिर्गन्तुं प्रवृत्तोऽर्थेन केनचित् ॥ ४१ ॥
दृष्ट्वा तत्कुण्डलं मार्गे सोऽथ दूरमपासरत् ।
लोष्टुवत् परद्रव्याणि यतः पश्यन्ति साधवः ॥ ४२ ॥
वसुदत्तोऽपि तत्रागात् किमेतदिति चिन्तयन् ।
दृष्ट्वादाय च तच्छीघ्रमार्पयच्चावनीपतेः ॥ ४३ ॥
राजा प्रोवाच भो भद्र ! कुतो लब्धमिदं त्वया ।
जिनदत्तान्मया प्राप्तमित्यूचे स च दुष्टधीः ॥ ४४ ॥
जिनदत्तोऽपि किं नाम परद्रव्यं हरत्यहो ! ।
इति पृष्टे नरेन्द्रेण वसुदत्तोऽभ्यधात् पुनः ॥ ४५ ॥
समानो जिनदत्तेन तस्करः कोऽपि नाऽपरः ।
यः सदा पश्यतोऽप्यर्थं परस्माद् हरति प्रभो ! ॥ ४६ ॥
वध्य आज्ञापितो राज्ञा ततोऽयं क्रुद्धचेतसा ।
वसुदत्तोऽपि बद्ध्वा तं रासभारोपितं व्यधात् ॥ ४७ ॥

(१) ड-ज-कर्मणि ।

रक्तचन्दनलिप्ताङ्गो रसद्दिरमडिण्डिमः ।
नीयमानः पुरीमध्ये कृतहाहारवो जनैः ॥ ४८ ॥
गृहान्निर्गतया सोऽथ जिनमत्याऽवलोकितः ।
सा चैवं चिन्तयामास रुदती निभृतस्वरम् ॥४९॥ (युग्मम)
धर्मार्थी सदयो देवगुरुभक्तिपरायणः ।
निरागो जिनदत्तो हा प्राप्तवान् कीदृशीं दशाम् ? ॥५०॥
दृष्ट्वा तां जिनदत्तोऽपि निर्व्याजस्नेहवत्सलाम् ।
सद्योऽनुरागवशगश्चिन्तयामास मानसे ॥ ५१ ॥
अहो ! अकृत्रिमा प्रीतिः काऽप्यस्या मयि वर्तते ।
दृष्ट्वा मद्व्यसनं दुःखभागिनी याऽभवत् क्षणात् ॥ ५२ ॥
एतस्मात् व्यसनान्मोक्षो भविष्यति ममाऽद्य चेत् ।
कियत्कालं ततो भोगान् भोक्ष्येऽहमनया सह ॥ ५३ ॥
अन्यथाऽनशनं मेऽस्तु सागारमिति चिन्तयन् ।
वध्यस्थाने स आरक्षनरैर्नीतो दुराशयैः ॥ ५४ ॥
प्रियमित्रस्य पुत्री सा कन्यका कृतनिश्चया ।
कायोत्सर्गं व्यधादर्हच्चैत्ये गत्वा मनस्विनी ॥ ५५ ॥
चेतसाऽचिन्तयच्चैवं मातः ! शासनदेवते ! ।
जिनस्य कुरु सान्निध्यं यद्यहं जैनशासने ॥ ५६ ॥
तस्यास्तस्य च शीलेन तुष्टा शासनदेवता ।
बभञ्ज शूलिकां सद्यो वारांस्त्रींस्तृणमात्रवत् ॥ ५७ ॥
स चोद्बद्धस्ततो हस्ते रज्जुश्छित्त्वा झटित्यपि ।
कृताः खड्गप्रहाराश्च जज्ञिरे कुसुमस्रजः ॥ ५८ ॥

आरक्षकनरास्तस्य दृष्ट्वाऽतिशयमीदृशम् ।
विस्मिताः कथयन्ति स्म तमागत्य महीभुजः ॥ ५९ ॥
भयविस्मयसंपूर्णः स गत्वा तत्र सत्वरम् ।
जिनदत्तं गजारूढमानिनाय निजौकसि ॥ ६० ॥
पृष्टोऽथ सर्ववृत्तान्तं जिनस्तस्य न्यवेदयत् ।
रक्षति स्मारक्षकं च मृत्योर्जीवदयापरः ॥ ६१ ॥
अनुज्ञातस्ततो राज्ञा निजगेहमगादसौ ।
पित्रादिस्वजनस्तस्य सर्वोऽपि मुमुदेतराम् ॥ ६२ ॥
आगत्य प्रियमित्रेण जिनदत्तस्य धीमतः ।
वार्ताचख्ये स्वनन्दिन्या देवताराधनादिका ॥ ६३ ॥
ततस्तुष्टो विशेषेण स तां जिनमतीं सतीम् ।
पर्यणैषीत्समुहूर्त्ते महोत्सवपुरःसरम् ॥ ६४ ॥
भुक्त्वा भोगांस्ततः कालं कियन्तमनया सह ।
प्रवव्राज विरक्तात्मा सुस्थिताचार्यसंनिधौ ॥ ६५ ॥
पालयित्वा चिरं दीक्षां खड्गधारासमामिमौ ।
विपद्यान्ते समाधानपरौ त्रिदिवमीयतुः ॥ ६६ ॥

॥ परद्रव्यापहारविरतौ जिनदत्तकथा ॥

औदारिकं वैक्रियकं द्विविधं मैथुनव्रतम् ।
तिर्यङ्मनुष्यभेदेनौदारिकं तु द्विधा भवेत् ॥ ६७ ॥
विज्ञेयं वैक्रियं चैकविधं देवाङ्गना¹गतम् ।
एतद्व्रतं समस्तानां व्रतानामपि दुःसहम् ॥ ६८ ॥

(१) अदिकम् ।

परदारप्रसक्तानां दुःखानि स्युरनेकधा ।
यथा करालपिङ्गोऽभूत्पुरोधा दुःखभाजनम् ॥ ६९ ॥
कोऽसौ करालपिङ्गाख्य इति चक्रायुधेन तु ।
पृष्टो जगाद भगवानुर्वीश ! श्रूयतामिति ॥ ७० ॥
अस्तीह भरतक्षेत्रे पुरं नलपुराऽभिधम् ।
बभूव नलपुत्राख्यस्तत्र राजा महाभुजः ॥ ७१ ॥
करालपिङ्गो नाम्नाऽभूत्तस्याऽभीष्टः पुरोहितः ।
शान्तिकर्मणि निष्णातो रूपयौवनवित्तवान् ॥ ७२ ॥
महेभ्यतनयस्तत्र पुष्पदेवोऽभिधानतः ।
मित्रं पुरोहितस्याऽस्य वसति स्म वणिग्वरः ॥ ७३ ॥
तस्यासीत् प्रवरा भार्या पद्मश्रीः प्राणवल्लभा ।
पतिव्रताप्रभृतिभिः स्त्रीगुणैः समलंकृता ॥ ७४ ॥
पुरोधसाऽन्यदा तेन केनचिद्धितकर्मणा ।
तोषितः पृथिवीपालस्ततः सोऽस्मै ददौ वरम् ॥ ७५ ॥
विषयासक्तचित्तेन तेनेदं याचितं ततः ।
पुरेऽस्मिन् स्वेच्छया रामा रमणीया मया प्रभो ! ॥ ७६ ॥
राजा प्रोवाच या काचिदिच्छति त्वामिहाऽबला ।
सेवनीया त्वया सा हि सर्वदा नाऽपरा पुनः ॥ ७७ ॥
अनिच्छन्तीं च चेद्रामां रंस्यसे वाऽर्थयिष्यसि ।
करिष्यामि ततो दण्डं पारदारिकवत् तव ॥ ७८ ॥
स्वैरं संचरता तेन पुरे तस्मिन् पुरोधसा ।
वल्लभा पुष्पदेवस्य पद्मश्रीर्वीक्षिताऽन्यदा ॥ ७९ ॥

ततो विद्युल्लतानाम्नीं तस्या दासीं जजल्प सः ।
भद्रे ! भण तथेमां त्वं यथा वाञ्छति मामसौ ॥ ८० ॥
सतीत्वं पालयन्ती सा नेच्छत्येनं कथञ्चन ।
स्वयं करालपिङ्गेन रन्तुमभ्यर्थिताऽन्यदा ॥ ८१ ॥
साऽवादीन्मेदृशं ब्रूहि श्वास्यत्येतत्सखा तव ।
सोऽब्रवीच्च तथा कार्यं यथाऽन्यत्र प्रयात्यसौ ॥ ८२ ॥
कथितं निजकान्तस्य तद्वाक्यमखिलं तया ।
प्रतीक्षमाणः कालं च सोऽस्थाद् धृत्वा मनस्यदः ॥ ८३ ॥
पुरोहितेन तेनाऽथ विद्यासामर्थ्यतोऽन्यदा ।
कृता दुर्विषहा शीर्षे वेदना मेदिनीपतेः ॥ ८४ ॥
तमाकार्य ततो राज्ञा तत्स्वरूपं निवेदितम् ।
अपनिन्ये सका तेन शिरोऽर्तिर्मन्त्रवादिना ॥ ८५ ॥
पुनस्तुष्टोऽस्य भूपालोऽवदद्याचस्व किञ्चन ।
तेनाऽपि जल्पितं देव ! कुर्विदं त्वं वचो मम ॥ ८६ ॥
किंजल्पिसंज्ञके द्वीपे सन्ति किंजल्पिकाः खगाः ।
सुस्वरा दृश्यमानाश्च भवन्ति सुखदा हि ते ॥ ८७ ॥
तेषामानयनार्थं तत् पुष्पः संप्रेष्यतां वणिक् ।
तदङ्गीकृत्य भूपोऽपि तदर्थं विससर्ज तम् ॥ ८८ ॥
सौवस्तिककृतं चैतत्सोऽपि विज्ञाय बुद्धिमान् ।
भर्तुः प्रमाणमादेश इत्युक्त्वा च ययौ गृहम् ॥ ८९ ॥
अकारयद्भूमिगृहं गृहस्यान्तस्ततश्च सः ।
नरैः प्रत्ययितैर्यन्त्रपर्यङ्कं तस्य चोपरि ॥ ९० ॥

| | Rs. | |
|---|---|---|
| [illegible] Fasc. 2-5 @ /10/ each ... | 1 | |
| [illegible]padi..., Fasc. 1-7 @ /10/ each ... | 3 | |
| Nityācārapradīpa Vol. I, Fasc. 1--8; Vol. II, F[illegible] 1-4 @ /10/ each ... | 7 | |
| Nyāyabindutīkā, Fasc. 1 @ /10/ each ... | 0 | |
| *Nyāya Kusumāñjali Prakaraṇa, Vol. II, Fasc. 1--3 @ /10/ each ... | 1 | |
| Nyaya Vartika Tatparya Parisuddhi, Fasc. 1-2 @ /10/ each ... | 1 | |
| Nyayasarah ... | 2 | |
| Padumawati, Fasc. 1--6 @ 2/ each ... | 10 | |
| Prākrita-Paingalam, Fasc. 1--7 @ /10/ each ... | 4 | |
| Parāçara Smṛti, Vol. I, Fasc. 2-8; Vol. II, Fasc. 1--6; Vol III, Fasc. 1--6 @ /10/ each ... | 11 | |
| Parāçara, Institutes of (English) @ 1/- each ... | 1 | |
| Pariksamukha Sutram ... | 1 | |
| Prabandhacintāmaṇi (English) Fasc. 1--3 @ 1/4/ each ... | 3 | |
| Rasarnavam, Fasc. 1-3 ... | 3 | |
| Ravisiddhanta Manjari, Fasc. 1 ... | 0 | |
| Saddarsana-Samuccaya, Fasc. 1-2 @ /10/ each ... | 1 | |
| Samaraiçca Kaha Fasc. 1-5, @ /10/ each ... | 3 | |
| Sāṅkhya Sūtra Vṛtti, Fasc. 1--4 @ /10/ each ... | 2 | |
| Ditto (English) Fasc. 1--3 @ 1/- each ... | 3 | |
| Six Buddhist Nyaya Tracts. ... | 0 | |
| Srāddha Kriyā Kaumudī, Fasc. 1-6 @ /10/ each ... | 3 | |
| Suçruta Saṁhitā, (Eng.) Fasc. 1 @ 1/- each ... | 1 | |
| Suddhikaumudī, Fasc 1-4 @ /10/ each ... | 2 | |
| Sundaranandam Kavyam ... | 1 | |
| Suryya Siddhanta Fasc. 1-2 @ 1-4 each ... | 2 | |
| Syainika Sastra ... | 1 | |
| *Taittreya Brahmana, Fasc. 11-25 @ /10/ each ... | 9 | |
| *Taitterīya Saṁhitā, Fasc 27--45 @ /10/ each ... | 11 | |
| Tāṇḍya Brāhmaṇa, Fasc 10--19 @ /10/ each ... | 6 | |
| Tantra Vārteka (English) Fasc. 1-10 @ 1/4/ each ... | 12 | |
| *Tattva Cintāmaṇi, Vol. I, Fasc. 1--9, Vol II, Fasc. 2-10, Vol III, Fasc. 1--2, Vol. IV, Fasc 1, Vol. V, Fasc 1--5, Part IV, Vol II, Fasc. 1-12 @ /10/ each | 23 | |
| Tattva Cintamani Didhiti Vivriti, Vol. I, Fasc. 1-6; Vol. I', Fc, 1, @ /10/ each | 4 | |
| Tattva Cintamani Didhiti Prakas, Fasc 1-5, @ /10/ each ... | 3 | |
| Tattvārthadhigama Sutram, Fasc 1-3 @ /10/ each ... | 1 | |
| Tirthacintamoni, Fasc, 1-3, @ /10/ each ... | 1 | |
| Trikāṇḍa-Maṇḍanam, Fasc. 1-3 @ /10/ each ... | 1 | |
| Tul'si Satsai, Fasc. 1--5 @ /10/ each ... | 3 | |
| *Upamita-bhava-prapañca-kathā, Fasc 1-2, 5 13 @ /10/ each ... | 6 | 1 |
| Uvāsagadasāo, (Text and English) Fasc. 1--6 @ 1/- each ... | 6 | |
| Vallāla Carita, Fasc 1 @ /10/ ... | 0 | 1 |
| Varṣa Kriyā Kaumudī, Fasc 1--6 @ /10/ each ... | 3 | |
| *Vāyu Purāṇa, Vol. I, Fasc. 3 -6; Vol. II, Fasc 1--7, @ /10/ each ... | 6 | 1 |
| Vidhāna Pārijata, Fasc. 1--8 Vol- II Fasc. I @ /10/ each ... | 5 | 1 |
| Ditto Vol. II, Fasc. 2-5 @ 1/4/ ... | 5 | |
| Vivādaratnākara, Fasc 1--7 @ /10/ each ... | 4 | |
| Vṛhat Svayambhū Purāṇa, Fasc. 1--6 @ /10/ each ... | 3 | |
| Yogasāstra Fasc. 1-3 ... | 3 | |

*Tibetan Series.*

| | | |
|---|---|---|
| Amarkosha ... | 2 | |
| Baudhastotrasangraha, Vol. I ... | 2 | |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1--4 @ 1/- each ... | 4 | 0 |
| Nyayabindu of Dharmakirti, Fasc. 1 ... | 1 | 0 |
| Pag-Sam S'hi Ṭiṅ, Fasc 1--4 @ 1/- each ... | 4 | 0 |
| Rtogs brjod dpag hkhri S'iṅ (Tib & Sans Avadāna Kalpalatā Vol. I, Fasc. 1--10; Vol. II. Fasc. 1--10 @ 1/ each ... | 20 | 0 |
| Sher-Phyin, Vol. I, Fasc 1-5; Vol. II, Fasc 1-3; Vol III, Fasc 1 6, @ 1/ each | 14 | 0 |

*Arabic and Persian Series.*

| | | |
|---|---|---|
| Āmal-i-Salih, or Shan Jahan Namah ... | 2 | 0 |
| Al-Muqaddasi (English) Vol I, Fasc 1--4 @ 1/- each ... | 4 | 0 |
| Āīn-i-Akbarī, Fasc. 1-22 @ 1/8/ each ... | 33 | 0 |
| Ditto (English) Vol II, Fasc. 1-5 Vol. III, Fasc 1-5, Index to Vol. II, @ 2/- each ... | 22 | 0 |
| Akbarnāmah, with Index, Fasc 1--37 @ 1/8/ each ... | 55 | 8 |
| Akbarnāmah, English Vol. I, Fasc. 1--8; Vol. II, Fasc. 1--7, Vol III, Fasc. 1--2 @ 1/4/ each ... | 21 | |
| Arabic Bibliography, by Dr. A. Sprenger, @ /10/ ... | 0 | 10 |
| Conquest of Syria, Fasc. 1-9 @ /10/ each ... | 5 | 10 |
| Catalogue of Arabic Books and Manuscripts, 1-2 @ 1/- each ... | 2 | 0 |

*The other Fasciculi of these works are out of stock and complete copies cannot

